THE

# MAHĀBHĀRATA

(Southern Recension)

For the first time critically edited by

VIDYASAGARA VIDYAVACHASPATI

P. P. S. SASTRI, B. A. (OXON), M.A.,

*Professor of Sanskrit and Comparative Philology Presidency College, Madras, and Editor Descriptive Catalogue of Sanskrit and Telugu Mss. in the Tanjore Palace Library.*

---

## Vol. XII—S'ALYA, SAUPTIKA & STRĪ PARVANS.

---

PUBLISHED BY

V. RAMASWAMY SASTRULU & SONS

292, ESPLANADE, MADRAS.

---

॥ श्रीरस्तु ॥

# ॥ श्रीमन्महाभारतम् ॥

तत्र

# शल्य - सौप्तिक - स्त्री - पर्वाणि


मद्रपुरराजकीयकलाशालासंस्कृताचार्यैः

बि. ए. ( आक्सन् ), एम्. ए. ( मद्रास् )

इत्यादिबिरुदाङ्कितैः

विद्यासागर विद्यावाचस्पति पि. पि. सुब्रह्मण्यशास्त्रिभिः


दाक्षिणात्यशाखानुसारेण सविमर्शं संशोधितानि

आचार्यानृत्विजश्चैव गुरून् वृद्धजनांस्तथा ।



येऽवमन्यन्ति पुरुषास् ते भवन्तीह राक्षसाः ॥

शल्य-३८—२०


चेन्नपुर्यां

चाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः सम्मुद्र्य प्रकाशितम्

# INTRODUCTION.



## I

In the preparation of the S'alya, Sauptika and Stri Parvans for the Press, the following manuscripts fully representative of the Southern Recension, were utilised.

अ—represents the Principal Text printed. The Manuscript belongs to Mr. Krishnaswami Sastrigal, Sub-Registrar, Tanjore District. Its description is as follows:—Substance—palm-leaf, Size–$19\frac{1}{2} \times 2\frac{1}{4}$ inches; Leaves—98; Lines—13 to a page; Script-Telugu; S'alya, Sauptika and Stri Parvans complete; Date of Transcription—1605 A. D.

क—is used for additional readings, etc. The Manuscript belongs to Brahmasri Krishna Sastrigal, Palace Pauranikar, Trivandrum. Its description is as follows:—Substance—palm-leaf; Size—$17\frac{1}{2} \times 2\frac{1}{4}$ inches; Leaves—154; Lines—12 to a page; Script-Grantha; S'alya, Sauptika and Stri Parvans Complete.

ख—is used for additional readings etc. The Manuscript belongs to His Highness the Maharaja of Travancore and was made available to us through the kindness of Sir C.P. Ramaswami Aiyer, K. C. I. E., Legal and Constitutional Adviser to the State. Its description is as follows:—Substance—palm-leaf; Size—$9\frac{3}{4} \times 1\frac{3}{4}$ inches; Leaves:—213; Lines 10 to a Page; Script-Malayalam: S'alya, Sauptika and Stri Parvans complete:

घ—is used for additional readings etc. The Manuscript was procured for us by Mr. K. K. Lakshminarayana Iyer of Kadayam village in the Tinnevelly District from Mr. Natesa Iyer. Its description is as follows:—Substance—palm-leaf; Size—$14 \times 1\frac{3}{4}$ inches Leaves 139; Lines 9, to a page; Script Grantha; S'alya, Sauptika and Stri Parvans complete.

---

II

From the Anukramaṇikādhyāya of the Ādi Parvan, it will be observed that, according to both the Southern and the Northern Recensions, the S'alya-Parvan should consist of 59 chapters. However we find that the Poona Edition with

Bhāvadipa divides the S'alya Parvan into 65 chapters and that the Kumbakonam Edition divides it into 66 chapters while the manuscripts representative of the Southern Recension divide it into 67 chapters. In printing the Principal Text for the Southern Recension we have divided the S'alya Parvan into 59 chapters, indicating in appropriate places in the body of the Text, the deviations of the several manuscripts wherever they occur.

The Sauptika and Stri Parvans consist of 18 and 27 chapters according to both the Southern and Northern Recensions. All the Manuscripts representative of the Southern Recension divide the Sauptika and Stri Parvans into 18 and 27 chapters only. In editing the Principal Text for the Southern Recension, we have follwed the evidence of the Manuscripts.

From the Anukramanikādhyāya to the Ādi Parvan, it will be observed that the S'alya, Sauptika and Stri Parvans should consist of 3220,870 and 775 stanzas respectively, according to both the Southern and Northern Recensions. According to our Principal Text, the Śalya, Sauptika and Stri Parvans consist of 3563, 820½ and 785½ stanzas respectively.

## III

The Poona Edition (1931) with Bhāvadipa (Northern Recension) divides the S'alya Parvan into three sub-parvans, S'alyavadha-Parvan (Chapters 1-28 ) Hradapraves'a-Parvan (Chapter 29) and Gadā-Parvan (Chapters 30-65). The Kumbakonam Edition (Mixed Recension) also divides the S'alya Parvan into three sub-parvans, S'alyavadha-Parvan (Chapters 1-27), Hradapraves'a-Parvan (Chapters 28-55) and Gadā-Parvan (Chapters 56-66.) But, according to the scheme of sub-parvans enumerated in the Anukramanikādhyaya, of the Ādi Parvan of both recensions, the S'alya Parvan should contain four sub-Parvans, namely, S'alyavadha-Parvan, Hradapraves'a - Parvan, Gadā - Yuddha - Parvan and Sārasvata-Parvan. The manuscripts of the Southern Recension divide the S'alya Parvan into two sub-parvans only, the S'alya-Parvan (Chapters 1-56) and the Gadā-Parvan (Chapters 57-67). In printing the Principal Text, we have, however, divided the S'alya Parvan into four sub-parvans, the S'alyavadha-Parvan (Chapters 1-25) Hradapraves'a - Parvan (Chapters 26-28) Gadāyuddha - Parvan (Chapter 29 and Chapters 50–59) and Sārasvata - Parvan (Chapters 30-49). Such a rational classification of the sub-parvans seems called for from the point of

view of the subject-matter discussed and has the additional advantage of supplying all the one-hundred sub-parvans which the Mahābhārata is admitted to contain according to all the recensions.

A Concordance exhibiting the scheme of chapters in the Northern Recension, according to the Poona Edition with Bhāvadipa, the Mixed Recension according to the Kumbakonam Edition and the Southern Recension according to the Text printed herein, is appended.

# IV

# CONCORDANCE.

## S'ALYA PARVAN

| (1931) Poona Edition with Bhavadipa Chapter. | (1907) Kumbakonam Edition Chapter. | Manuscripts of the Southern Recension Chapter. | (1935) Southern Recension Chapter. |
|---|---|---|---|
| 1 | 1 | 1 | 1 |
| 2 | 2 | 2 | 2 |
| 3 | Omitted | Omitted | Omitted |
| 4 | 3 | 3 | 3 |
| 5 | 4 | 4 | 4 |
| 6 | 5 | 5 | 5 |
| 7 | 6 | 6 | 6 |
| 8 | 7 | 7 | 7 |
| 9 | 8 | 8 | 8 |
| 10 | 9 | 9 | 9 |
| 11 | 10 | 10 | 10 |
| 12 | 11 | 11 | 11 |
| 13 | 12 | 12 | 12 |
| 14 | 13 | 13 | 13 |
| 15 | 14 | 14 | 14 |
| 16 | 15 | 15 | 15 |
| 17 (8–52) | 16 (1–49) | 16 | 16 |
| ,, (53–91) | ,, (50–86) | 17 | 17 |
| 18 | 17 | 18 | ,, |
| 19 | 18 | 19 | ,, |
| 20 | 19 | 20 | 18 |
| 21 | 20 | 21 | 19 |
| 22 | 21 | 22 | 20 |
| 23 | 22 | 23 | 21 |
| 24 | 23 | 24 | ,, |
| 25 | 24 | 25 | 22 |
| 26 | 25 | 26 | 23 |
| 27 | 26 | 27 | 24 |
| 28 | 27 | 28 | 25 |
| 29 (1–19) | 28 | 29 | 26 |
| ,, (20–105) | 29 | 30 | ,, |
| 30 | 30 | 31 | 27 |

| Poona Edition with Bhavadipa Chapter. | Kumbakonam Edition Chapter. | Manuscripts of the Southern Recension Chapter. | Southern Recension Chapter. |
|---|---|---|---|
| 31 | 31 | 32 | 28 |
| 32 | 32 | 33 | ,, |
| 33 | 33 | 34* | 29 |
| 34 | 34 | 35 | ,, |
| 35 (1–42) | 35 | 36 | 30 |
| ,, (43–90) | 36 | 37 | ,, |
| 36 | 37 | 38 | 31 |
| 37 | 38 | 39 | 32 |
| 38 | 39 | 40 | 33 |
| 39 | 40 | 41 | 34 |
| 40 | 41 | 42 | 35 |
| 41 | 42 | 43 | 36 |
| 42 | 43 | 44 | 37 |
| 43 | 44 | 45 | 38 |
| 44 | 45 | 46 | 39 |
| 45 | 46 | 47 | 40 |
| 46 | 47 | 48 | 41 |
| 57 | 48 | 49 | 42 |
| 48 | 49 | 50 | 43 |
| 49 | 50 | 51 | 44 |
| 50 | 51 | 52 | 45 |
| 51 | 52 | 53 | 46 |
| 52 | 53 | 54 | 47 |
| 53 | 54 | 55 | 48 |
| 54 | 55 | 56 | 49 |
| 55 | 56 | 57 | 50 |
| 56 | 57 | 58 | 51 |
| 57 | 58 | 59 | ,, |
| 58 | 59 | 60 | 52 |
| 59 | 60 | 61 | 53 |
| 60 | 61 | 62 | 54 |
| 61 | 62 | 63 | 55 |
| 62 | 63 | 64 | 56 |
| 63 | 64 | 65 | 57 |
| 64 | 65 | 66 | 58 |
| 65 | 66 | 67 | 59 |

* घ—कोशं विना इतरकोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

# CONCORDANCE.

## SAUPTIKA PARVAN

| Poona Edition with Bhavadipa Chapter. | Kumbakonam Edition Chapter. | Manuscripts of the Southern Recension Chapter. | Southern Recension Chapter. |
|---|---|---|---|
| 1 | 1 | 1 | 1 |
| 2 | 2 | 2 | 2 |
| 3 | 3 | 3 | 3 |
| 4 | 4 | 4* | 4 |
| 5 | 5 | 5 | 5 |
| 6 | 6 | 6 | 6 |
| 7 | 7 | 7 | 7 |
| 8 | 8 | 8 | 8 |
| 9 | 9 | 9 | 9 |
| 10 | 10 | 10 | 10 |
| 11 | 11 | 11 | 11 |
| 12 | 12 | 12 | 12 |
| 13 | 14 | 13 | 13 |
| 14 | 14 | 14 | 14 |
| 15 | 15 | 15 | 15 |
| 16 | 16 | 16 | 16 |
| 17 | 17 | 17 | 17 |
| 18 | 18 | 18 | 18 |

* ख—कोशे अयमध्यायो नास्ति

# CONCORDANCE.

## STRĪ PARVAN

| Poona Edition with Bhavadipa Chapter. | Kumbakonam Edition Chapter. | Manuscripts of the Southern Recension Chapter. | Southern Recension Chapter. |
|---|---|---|---|
| 1 | 1 | 1 | 1 |
| 2 | 2 | 2 | 2 |
| 3 | 3 | 3 | 3 |
| 4 | 4 | 4 | 4 |
| 5 | 5 | 5 | 5 |
| 6 | 6 | 6 | 6 |
| 7 | 7 | 7 | 7 |
| 8 | 8 | 8 | 8 |
| 9 | Omitted | Omitted | Omitted |
| 10 | 9 | 9 | 9 |
| 11 | 10 | 10 | 10 |
| 12 | 11 | 11 | 11 |
| 13 | 12 | 12 | 12 |
| 14 | 13 | 13 | 13 |
| 15 (1-23) | 14 | 14 | 14 |
| " (24-44) | 15 | 15 | 15 |
| 16 | 16 | 16 | 16 |
| 17 | 17 | 17 | 17 |
| 18 | 18 | 18 | 18 |
| 19 | 19 | 19 | 19 |
| 20 | 20 | 20 | 20 |
| 21 | 21 | 21 | 21 |
| 22 | 22 | 22 | 22 |
| 23 | 23 | 23 | 23 |
| 24 | 24 | 24 | 24 |
| 25 | 25 | 25 | 25 |
| 26 | 26 | 26 | 26 |
| 27 | 27 | 27 | 27 |

## V

With regard to the S'alya Parvan it is possible to mark a Text clearly as Southern if it omits Chapter 3 of the Northern Recension. Similarly, with regard to the Stri Parvan, it is possible to mark a Text clearly as Southern if it omits Chapter 9 of the Northern Recension.

The Presidency College,
Madras.
5—8—1935.

P. P. S. SASTRI,
*Editor.*

## NOTE.

The seventeenth chapter of the Principal Text must run continuously from page 114 to the end of page 132, totalling 152 stanzas. The divisions into chapter 18 on page 119 and chapter 19 on page 124 are both incorrect and should therefore be cancelled.

---

## ॥ निवेदना ॥

"शल्यपर्वणः ११४ पुटप्रभृति १३२ पुटपर्यन्तं १७-तमाध्यायस्यैव; १८-१९ अध्यायात्मना मुद्रणं स्खलितमिति ज्ञेयम्" इति

॥ श्रीरस्तु ॥

महाभारतस्य शल्यपर्व

तत्र

# ॥ विषयानुक्रमणिका ॥

## शल्यवधपर्व


| अध्यायः | | पृष्टम् |
|---|---|---|
| १ | कर्णवधानन्तरं शल्यस्य सैनापत्यं तेन युद्धाय निर्गमनं च ... | २ |
| | सञ्जयेन दुर्योधनादिवधेन शोकाधिगमः ... | ३ |
| | सञ्जयात् दुर्योधनादिवधश्रवणेन धृतराष्ट्रेण भूनिपतनपूर्वकं विलापः ... | ४ |
| | विदुरेण धृतराष्ट्रसमाश्वासनम् ... | ८ |
| २ | सञ्जयेन दुर्योधनमुद्दिश्य विलपनम् ... | ९ |
| | धृतराष्ट्रेण सैनापत्यादिविषयकप्रश्नः ... | १६ |
| ३ | कृपेण दुर्योधनं प्रति स्वस्वेतरपक्षयोः दौर्बल्यप्राबल्यकथनम् | १८ |
| | कृपेण परैस्सन्धिविधानकथनम् ... | २४ |
| ४ | दुर्योधनेन कृपं प्रति सन्ध्यनङ्गीकरणकथनम् ... | ,, |
| | दुर्योधनवचनादरणेन कौरवैर्युद्धाय सन्नहनम् ... | ३० |
| ५ | सैनिकैः सैनापत्यविधानविमर्शः ... | ३१ |
| | दुर्योधनेनाश्वत्थाममहिमानुवर्णनम् ... | ३२ |
| | अश्वत्थामवचनाच्छल्येन सैनापत्याङ्गीकरणम् ... | ३३ |
| ६ | शल्येन स्वपराक्रमकथनम् ... | ३५ |
| | शल्यस्य सैनापत्याभिषेचनपूर्वकं सैनिकैः जयशब्दोद्घोषणम् | ३७ |
| | युधिष्ठिरेण परोत्कर्षं जानता श्रीभगवन्तं प्रति कर्तव्यौचित्यप्रार्थनम् ... | ३८ |
| | श्रीभगवता युधिष्ठिरं प्रति शल्यवधकरणप्रोत्साहनम् ... | ,, |

| अध्यायः | | | पृष्ठम् |
|---|---|---|---|
| ७ | दुर्योधनपक्षीयैः व्यूहनिर्माणम् | ... | ४१ |
| | पाण्डवेयैः व्यूहनिर्माणम् | ... | ४४ |
| | भीष्मद्रोणवधानन्तरं विद्यमानबलशेषकथनम् | ... | ४६ |
| | **अष्टादशदिवसयुद्धारम्भः** | | |
| ८ | सङ्कुलयुद्धम् | ... | ४७ |
| ९ | शल्ययुद्धवर्णनम् | ... | ५३ |
| | नकुलेन कर्णपुत्रमारणम् | ... | ५६ |
| १० | सङ्कुलयुद्धम् | ... | ६१ |
| | शल्यपराक्रमवर्णनम् | ... | ६७ |
| ११ | शल्यभीमयोर्गदायुद्धम् | ... | ६८ |
| | शल्यभीमाभ्यां गदायुद्धे युगपत् भूपतनम् | ... | ७१ |
| | कृपेण शल्यस्य युद्धभूमेः बहिः प्रापणम् | ... | ,, |
| | पाण्डवैः दुर्योधनवधायागमनम् | ... | ,, |
| | कौरवपाण्डवानां युद्धम् | ... | ७२ |
| | शल्येन युधिष्ठिरपीडनम् | ... | ७५ |
| १२ | शल्येन सात्यकिभीमादीनां युद्धम् | ... | ७६ |
| | युधिष्ठिरेण शल्यपराक्रमवीक्षणेन श्रीभगवदुक्तौ नैरर्थक्यविमर्शः | ... | ८० |
| | शल्यपराक्रमवर्णनम् | ... | ८१ |
| १३ | सङ्कुलयुद्धम् | ... | ८२ |
| १४ | सङ्कुलयुद्धम् | ... | ८८ |
| १५ | शल्येन युधिष्ठिरादीनां युद्धम् | ... | ९३ |
| | शल्याद्भीतैः पाण्डवैः विद्रावणं युधिष्ठिरेण शल्यवधप्रतिज्ञानम् | ... | ९५ |
| | युधिष्ठिरस्य शल्यवधप्रतिज्ञावचनश्रवणहर्षितैः सैनिकैः शङ्खभेर्यादीनां वादनादि | ... | ९६ |
| | पुनश्शल्यादीनां युद्धवर्णनम् | ... | ९७ |

| अध्यायः | | | पृष्ठम् |
|---|---|---|---|
| १६ | युधिष्ठिरशल्ययोर्युद्धम् | ... | १०२ |
| | भीमशल्ययोर्युद्धम् | ... | १०७ |
| | युधिष्ठिरेण शल्यं प्रति शक्तिविक्षेपणम् | ... | ११० |
| | युधिष्ठिरेण शल्यवधः | ... | ११३ |
| १७ | शल्यस्य हीनबलत्ववर्णनम् | ... | ११४ |
| | युधिष्ठिरेण शल्यानुजवधः | ... | ११५ |
| | सात्यकिना कृतवर्मपराजयः | ... | ११६ |
| | शल्यहननेन पाण्डवानां प्रहर्षः | ... | ११८ |
| १८ | सङ्कुलयुद्धम् | ... | ११९ |
| | शकुनिना युद्धाय दुर्योधनप्रोत्साहनम् | ... | १२१ |
| | दुर्योधनेन सपरिवारं युद्धाय निर्याणम् | ... | १२२ |
| १९ | सङ्कुलयुद्धम् | ... | १२४ |
| | पाञ्चालभाषणम् | ... | १२६ |
| | दुर्योधनेन युद्धाय सूतचोदनम् | ... | १२८ |
| | सङ्कुलयुद्धम् | ... | १२९ |
| | दुर्योधनेन स्वसैन्यसान्त्वनम् | ... | १३१ |
| २० | सङ्कुलयुद्धम् | ... | १४३ |
| | शकुनिना युद्धाय दुर्योधनबलसमाह्वानम् | ... | १५२ |
| | युधिष्ठिरेण सहदेवं प्रति शकुनिवधाय चोदनम् | ... | १५३ |
| | सङ्कुलयुद्धम् | ... | १५४ |
| २१ | शकुनिना दुर्योधनं प्रति युधिष्ठिरवधोपायकथनचोदनम् | | १६१ |
| | अर्जुनेन श्रीभगवन्तं प्रति भीष्मादिविनाशेऽपि महद्भिश्शमविधानानुशासनेऽपि च दुर्योधनदुर्नयाद्युद्धाविरामगोचरानुतापप्रदर्शनम् | ... | १६३ |
| | अर्जुनेन श्रीभगवन्तं प्रति युधिष्ठिररक्षणायान्तरनुतापेऽपि दुर्योधनवधप्रतिज्ञानकारणकथनपूर्वकं रणस्थलगमनचोदनम् | ... | १६६ |
| | अर्जुनपराक्रमवर्णनम् | ... | १६७ |

| अध्यायः | | पुटम् |
|---|---|---|
| २२ | अर्जुनार्द्दितेन दुर्योधनबलेन स्वस्वपुत्रादिभिस्सह पलायनम् | १६९ |
| | धृष्टद्युम्नयुद्धवर्णनम् ... | १७० |
| | भीमगदायुद्धवर्णनम् ... | १७२ |
| | सर्वराजभिः दुर्योधनस्य हतत्वेन परिचिन्तनपूर्वकं युद्धप्रकारकथनम् ... | १७३ |
| २३ | भीमेन श्रुतर्वादिभिस्सह युद्धविधानम् ... | १७६ |
| | भीमेन श्रुतर्वादीनां हननम् ... | १८० |
| २४ | श्रीभगवदर्जुनयोस्संवादः ... | १८१ |
| | सङ्कुलयुद्धम् ... | १८४ |
| | भीमेन सुदर्शनवधः ... | १८७ |
| २५ | शकुनिसहदेवयोर्युद्धम् ... | १८८ |
| | सहदेवोलूकयोर्युद्धम् ... | १९१ |
| | सहदेवेन शकुन्युलूकयोः वधः ... | १९४ |


## ह्रदप्रवेशपर्व


| अध्यायः | | पुटम् |
|---|---|---|
| २६ | अर्जुनयुद्धम् ... | १९८ |
| | दुर्योधनेन पादातादीन् प्रति युद्धविधाननियमनम् ... | १९९ |
| | दुर्योधनेन रणादपयानचिन्तनम् ... | २०० |
| | बलशेषकथनम् ... | २०१ |
| | दुर्योधनेन विदुरवाक्यस्मरणम् ... | ,, |
| | दुर्योधनेन स्वबलक्षयेन ह्रदप्रवेशः ... | २०२ |
| | व्यासेन सञ्जयं प्रति धृष्टद्युम्नवधोद्यमनिवारणम् ... | २०३ |
| | सञ्जयेन दुर्योधनवैभवकथनपूर्वकं तदीयविपत्सम्भवस्य विधिमूलत्वकथनम् ... | २०४ |
| | दुर्योधनेन सञ्जयं प्रति स्वपित्रे स्वोक्तया स्वस्य ह्रदप्रवेशकारणकथनपूर्वकं तत्प्रवेशकथनचोदनम् ... | २०५ |
| | सञ्जयाद्दुर्योधनह्रदप्रवेशं श्रुत्वाऽश्वत्थामादिभिः परिदेवनम् | २०६ |
| | युयुत्सुपरिदेवनम् ... | २०८ |
| | युयुत्सोः हास्तिनपुरप्रवेशकालिकसन्दर्भकथनम् ... | २०९ |

| अध्यायः | | पृष्ठम् |
|---|---|---|
| २७ | कृपाश्वत्थामकृतवर्मभिः ह्रदमुपेत्य दुर्योधनेन सहभाषणम् | २१२ |
| | भीमेन गदापाणिना ह्रदप्रवेशः ... | २१३ |
| | व्याधैः ह्रदे यदृच्छया दुर्योधनदर्शनम् ... | २१५ |
| | व्याधैः धनलोभेन भीमाय ह्रदे दुर्योधनदर्शनकथनम् ... | २१६ |
| | पाण्डवैः दुर्योधनविज्ञानाय चारप्रेषणम् ... | २१७ |
| | युधिष्ठिरेण शत्रुशेषस्य विजयसन्देहमूलत्वकथनम् ... | ,, |
| | भीमेन व्याधेभ्यो बहुधनदानपूर्वकं दुर्योधनस्य ह्रदवृत्तित्वं विज्ञाय युधिष्ठिराय कथनम् ... | ,, |
| | श्रीभगवता सह युधिष्ठिरादिभिः सकुतूहलं ह्रदं प्रति गमनम् ... | २१८ |
| | कृपादिभिः पाण्डवानामागमनदर्शनेन ह्रदादपयानपूर्वकं वटवृक्षमूले समुपवेशः ... | २२० |
| | दुर्योधनेन मायया जलं संस्तभ्य ह्रदे स्वपनम् ... | ,, |
| २८ | श्रीभगवता युधिष्ठिरं प्रति सदृष्टान्तकथनं दुर्योधनवधचोदनम् ... | २२२ |
| | युधिष्ठिरेण ह्रदे दुर्योधननिन्दनम् ... | २२३ |
| | युधिष्ठिरदुर्योधनयोर्विवादः ... | २२६ |
| | दुर्योधनेन सरोषं पाण्डवानां एकैकशः हननकथनम् ... | २३१ |
| | दुर्योधनेन युधिष्ठिरं प्रति गदया प्रहरणोद्यमनम् ... | २३३ |
| | दुर्योधनेन सकृद्गदाप्रहारेण पशुमारं मारणाय पाण्डवानामाह्वानम् ... | २३५ |
| | युधिष्ठिरदुर्योधनयोर्विवादः ... | २३६ |
| | दुर्योधनेन गदयैकया पाण्डवानां मारणप्रतिज्ञानम् ... | २३७ |

## गदायुद्धपर्व

| | | |
|---|---|---|
| २९ | श्रीभगवता युधिष्ठिरं प्रति दुर्योधने तदुक्तवचनोपालम्भः | २३८ |
| | श्रीभगवता युधिष्ठिरं प्रति पाण्डवैः दुर्योधनेन गदायुद्धदौष्कर्यकथनम् ... | २३९ |

अध्यायः पृष्ठम्

२९ श्रीभगवता युधिष्ठिराद्यन्यतमपराजयस्य राज्यप्राप्ति-हेतुत्वकथनानौचित्यकथनम् ... ,,
भीमेन स्वस्य दुर्योधनेन गदायुद्धविधानसामर्थ्यकथनम् २४०
श्रीभगवता भीमं प्रति दुर्योधनमारणस्थानविशेष-ज्ञापनपूर्वकं प्रतिज्ञानिर्वहणचोदनम् ... २४१
भीमदुर्योधनयोः पराक्रमवचनम् ... २४३
भीमदुर्योधनयोर्युद्धोपक्रमे बलरामागमनम् ... २४५
बलरामेण भीमदुर्योधनयोः गदायुद्धदर्शनार्थमागमनम् ,,
श्रीभगवदर्जुनादिभिः बलरामं प्रति सपर्याविधानम् ... ,,

## सारस्वतपर्व

३० बलरामतीर्थयात्रोदन्तः ... २४८
वैशम्पायनेन तीर्थानां विस्तरेण कथनम् ... २५३
चन्द्रे क्षयरोगप्राप्तिहेतुकथनम् ... २५४
चन्द्रस्य रोहिण्यामेवाधिकप्रेमस्थित्या दक्षेण शापविधानम् २५६
देवानां प्रार्थनया दक्षेण प्रभासतीर्थमज्जनेन चन्द्रस्य क्षयरोगशान्तिनियमनम् ... २५७
चन्द्रेण प्रभासतीर्थस्नानेन क्षयरोगपरिहरणम् ... २५८
प्रभासपदस्यान्वर्थत्वकथनम् ... २५९
३१ एकतद्वितत्रितसंज्ञकानां विप्राणां चरितम् ... २६०
३२ बलरामेण सरस्वतीतीरस्थनानातीर्थयात्राकरणम् ... २६७
३३ सरस्वत्याः सप्तानां विभागानां कारणाभिधानम् ... २७५
सप्तानां विभागानामेकत्र मेलनात् कस्यचित् तीर्थस्य सप्तसारस्वतनामप्राप्तिः ... २७७
मङ्कणकमुनिचरितम् ... २७९
३४ बलरामेणौशनसतीर्थगमनम् ... २८३
औशनसतीर्थस्य कपालमोचननामहेतुकथनम् ... २८४
बलरामेणोशङ्ग्वाश्रमगमनं उशङ्गुचरितं च ... २८६
बलरामेण पृथूदकतीर्थगमनम् ... २८७

| अध्यायः | | | पृष्ठम् |
|---|---|---|---|
| ३५ | आर्ष्टिषेणचरितम् | ... | २८८ |
| | विश्वामित्रचरितम् | ... | २९० |
| | बलरामेण बकाश्रमगमनम् | ... | २९२ |
| ३६ | बलरामेणावाकीर्णतीर्थगमनम् | ... | ,, |
| | बकमुनिचरितम् | ... | २९३ |
| | बलरामेण वसिष्ठापवाहतीर्थगमनम् | ... | २९७ |
| ३७ | वसिष्ठापवाहतीर्थमहिमानुवर्णनम् | ... | ,, |
| ३८ | विश्वामित्रशापात् सरस्वत्या रुधिरजलत्वकथनम् | ... | ३०३ |
| | ऋषिभिः सरस्वतीं प्रति रुधिरजलवत्ताकारणप्रश्नः | ... | ३०४ |
| | ऋषिभिः सरस्वत्याः शापविमोचनम् | ... | ,, |
| | राक्षसैः ऋषीन् प्रति स्वमोक्षदानप्रार्थनम् | ... | ३०६ |
| | ऋषिभिः राक्षसान्नस्य परिहर्तव्यत्वेनान्नदोषाणां विवेचनम् | | ,, |
| | ऋषिभिः सरस्वत्याःशोधनपूर्वकं तत्र स्नापयित्वा राक्षसानां सन्तारणम् | ... | ,, |
| | इन्द्रस्य ब्रह्महत्यावाप्तेः कथनम् | ... | ३०७ |
| | इन्द्रेण सरस्वत्यरुणासङ्गमे यजनादिना ब्रह्महत्यायाः परिहरणम् | ... | ३०८ |
| | बलरामेण सरस्वत्यरुणासङ्गमे स्नात्वा सोमतीर्थगमनम् | ... | ,, |
| ३९ | कुमारसम्भवादिकथनम् | ... | ३०९ |
| ४० | बृहस्पत्यादिभिः स्कन्दस्य सैनापत्येऽभिषेचनम् | ... | ३१६ |
| | ब्रह्मादिभिः स्कन्दाय वितीर्णपारिषदानां नामकथनम् | ... | ३१९ |
| ४१ | स्कन्दमातृगणनामकथनम् | ... | ३३० |
| | स्कन्देन देवान् प्रति शत्रुविनाशपूर्वकं सन्तोषप्रापणकथनम् | ... | ३३६ |
| | स्कन्देन सपरिवारं शत्रुवधाय निर्गमनम् | ... | ,, |
| | स्कन्देन तारकासुरवधः | ... | ३३७ |
| | स्कन्दाद्भीतेन बाणासुरेण क्रौञ्चस्य शरणवरणम् | ... | ३३९ |
| | स्कन्देन शक्त्या क्रौञ्चविदारणम् | ... | ,, |

अध्यायः पृष्ठम्

४१ सरस्वतीतीर्थवंशकथनम् ... ३४०
वरुणेन सरस्वतीतीर्थस्नानपूर्वकं वरप्रदानकथनम् ... ३४१
४२ वरुणेन जलाधिपत्यप्राप्तिः ... ३४२
देवैः भृगुशापभयादग्नेः शमीगर्भेऽन्तर्भावेनाग्नितीर्थे तद्दर्शनम् ... ३४४
अग्नितीर्थमहिमानुवर्णनम् ... ३४५
कौबेरतीर्थमहिमानुवर्णनम् ... ,,
४३ बदरपाचनतीर्थे इन्द्रमुद्दिश्य स्रुचावतीतपश्चरणकथनम्... ३४६
इन्द्रेण स्रुचावतीं प्रतीष्टलाभाय बदरपचनचोदनम् ... ३४८
इन्द्रेण स्रुचावतीं प्रति वरप्रदानम् ... ३५०
अरुन्धतीमहिमानुवर्णनम् ... ३५१
स्रुचावतीजन्मप्रकारकथनम् ... ३५४
४४ बलरामेणेन्द्रतीर्थगमनं तत्तीर्थमहिमानुवर्णनं च ... ३५५
४५ देवलजैगीषव्ययोश्चरितम् ... ३५८
४६ दधीचिसारस्वतयोरुपाख्यानम् ... ३६७
४७ बलरामेण वृद्धकन्याश्रमगमनम् ... ३७३
वृद्धकन्याचरितम् ... ३७४
४८ कुरुक्षेत्रमहिमानुवर्णनम् ... ३७८
४९ मित्रावरुणाश्रममहिमानुवर्णनम् ... ३८२
नारदेन बलरामं प्रति भीमदुर्योधनयोः गदायुद्धोपक्रम-कथनम् ... ३८३
बलरामेण भीमदुर्योधनयोः गदायुद्धदिदृक्षया कुरुक्षेत्रं प्रति गमनम् ... ३८७

## गदायुद्धपर्वशेषः

५० युधिष्ठिरेण गदायुद्धाय समन्तपञ्चकागमनम् ... ३८८
गदापाण्योः भीमदुर्योधनयोः वर्णनम् ... ३८९

| अध्यायः | | पृष्ठम् |
|---|---|---|
| ५१ | धृतराष्ट्रेण दुर्योधनमुद्दिश्य निर्वेदवचनम् ... | ३९३ |
| | दुर्योधनेन भीमस्य युद्धायाह्वानवेळायां दुर्निमित्तानां प्रादुर्भावः ... | ३९४ |
| | भीमेन दुर्योधनकृतदुष्कृतस्मारणपूर्वकं तद्वधप्रतिज्ञानम् | ३९५ |
| | भीमदुर्योधनयोर्वीरवादः ... | ३९६ |
| | भीमदुर्योधनयोर्गदायुद्धवर्णनम् ... | ३९८ |
| | भीमेन गदया प्रहृतपतितस्य दुर्योधनस्य पुनस्संज्ञया पराक्रमवर्णनम् ... | ४०५ |
| ५२ | श्रीभगवताऽर्जुनं प्रति भीमदुर्योधनयोः दुर्योधनस्य न्यायतो ज्यायस्त्ववर्णनम् ... | ४०८ |
| | श्रीभगवता भीमेनान्यायेनैव दुर्योधनवध्यतायां दृष्टान्तकथनपूर्वकं दुर्योधनोरुभेदनप्रतिज्ञान-कथनम् ... | ,, |
| | श्रीभगवता दुर्योधनं प्रति युधिष्ठिरकृतप्रतिज्ञावचन-दूषणम् ... | ४०९ |
| | भीमेनार्जुनकृतसंज्ञया दुर्योधनोरौ सन्ताडनम् ... | ४१० |
| | भीमदुर्योधनाभ्यां चिलादिगत्या गदायुद्धविधानम् ... | ,, |
| | भीम दुर्योधनाभ्यां किञ्चिद्विश्रम्य पुनर्गदायुद्धविधानम् ... | ४११ |
| ५३ | भीमेन दुर्योधनदुर्नयानुस्मारणम् ... | ४१५ |
| | भीमेन वामपादेन दुर्योधनशिरस्ताडनम् ... | ४१७ |
| | युधिष्ठिरेण भीमं प्रति दुर्योधनहनननिवारणम् ... | ,, |
| | युधिष्ठिरेण दुर्योधनसान्त्वनपूर्वकं विलपनम् ... | ४१८ |
| ५४ | बलरामेण दुर्योधनशिरसि ताडनेन भीमं प्रति हननाय लाङ्गलोद्यमनम् ... | ४१९ |
| | श्रीभगवता भीमे कुपितस्य बलरामस्य परिसान्त्वनम् ... | ४२० |
| | बलरामेण द्वारकागमनम् ... | ४२३ |
| | युधिष्ठिरेण श्रीभगवन्तं प्रति भीमेन वामपादेन दुर्योधन-शिरस्ताडनानौचित्यकथनम् ... | ४२४ |
| | भीमेन युधिष्ठिरं प्रति दुर्योधनवधेन हर्षोत्पादनम् ... | ४२५ |

| अध्यायः | | | पृष्ठम् |
|---|---|---|---|
| ५५ | पाञ्चालादिभिः भीमस्तुतिः | ... | ४२६ |
| | श्रीभगवता दुर्योधनदूषणम् | ... | ४२८ |
| | श्रीभगवद्दुर्योधनाभ्यां परस्परगर्होक्तिः | ... | ४२९ |
| | दुर्योधनशिरसि पुष्पवर्षणम् | ... | ४३३ |
| | श्रीभगवद्वाक्येन दुर्योधनवधहृष्टैः पाण्डवादिभिः शङ्खाद्याध्मानादि करणम् | ... | ४३५ |
| ५६ | पाण्डवैः दुर्योधनशिबिरगमनम् | ... | ४३७ |
| | श्रीभगवता रथादर्जुनावतारणानन्तरं तद्रथस्याग्निना भस्मीकरणम् | ... | ४३८ |
| | श्रीभगवता रथभस्मीभवनकारणकथनम् | ... | ४३९ |
| | श्रीभगवता युधिष्ठिरं प्रति कुशलप्रश्नः | ... | ,, |
| | युधिष्ठिरेण श्रीभगवदनुग्रहस्य जयहेतुत्वनिरूपणम् | ... | ४४० |
| | श्रीभगवताऽर्जुनस्य प्रशंसनम् | ... | ४४१ |
| | पाण्डवैः जितशत्रुभिः दुर्योधनधनलाभेन सुखेनावस्थानम् | ... | ४४२ |
| | पाण्डवैः गान्धार्याश्वासनाय श्रीभगवतः प्रेषणम् | ... | ४४३ |
| ५७ | जनमेजयेन गान्धार्याश्वासनकारणप्रश्नः | ... | ४४४ |
| | श्रीभगवन्तमन्तरा सर्वमूलक्षयहेतुभूतगान्धारीशोकस्याशक्यपरिहरणीयत्वेन श्रीभगवतैव तच्छाम्यत्वकथनम् | ... | ४४५ |
| | युधिष्ठिरेण श्रीभगवन्तं प्रति गान्धार्याश्वासनप्रार्थनम् | ... | ,, |
| | श्रीभगवता धृतराष्ट्रं प्रति पाण्डवादिगुणकथनपूर्वकं दुर्योधनादीनां नाशहेतुत्वस्मारणेन परिसान्त्वनम् | ... | ४४८ |
| | श्रीभगवता गान्धार्याश्वासनम् | ... | ४५० |
| | गान्धार्या श्रीभगवत्सन्निधौ रोदनं श्रीभगवता तदाश्वासनं च | ... | ४५१ |
| | श्रीभगवता पुनः पाण्डवसमीपागमनम् | ... | ४५२ |

| अध्यायः | | | पृष्टम् |
|---|---|---|---|
| ५८ | सञ्जयेन धृतराष्ट्रं प्रति दुर्योधनप्रलापकथनम् | ... | ४५३ |
| | वार्दिकैरश्वत्थाम्नि दुर्योधनवधनिवेदनम् | ... | ४५८ |
| ५९ | अश्वत्थामादिभिः भूपतितदुर्योधनदर्शनेन शोचनम् | ... | ४५९ |
| | अश्वत्थाम्ना दुर्योधनं प्रति संलापपूर्वकमनुशोचनम् | ... | ४६० |
| | दुर्योधनेन स्ववधे विधेः बलवत्तरत्वकथनम् | ... | ४६२ |
| | अश्वत्थाम्ना सपाञ्चालादीनां पाण्डवानां रात्रौ हननप्रतिज्ञानम् | ... | ४६३ |
| | अश्वत्थाम्नः सैनापत्येऽभिषेचनम् | ... | ४६४ |


शल्यपर्व विषयानुक्रमणिका समाप्ता

॥ श्रीरस्तु ॥

महाभारतस्य सौप्तिकपर्व

तत्र

# विषयानुक्रमणिका

## सौप्तिकपर्व


| अध्यायः | | | पृष्ठम् |
|---|---|---|---|
| १ | सञ्जयधृतराष्ट्रयोः संवादः | ... | १ |
| | अश्वत्थामादिभिः वनमध्ये वटवृक्षस्याधोभागे समुपवेशनम् | ... | ४ |
| | अश्वत्थाम्ना वने काकानामुलूकेन वधदर्शनेन पाण्डवानामपि तद्वत् वधकरणप्रतिज्ञानम् | ... | ६ |
| | अश्वत्थाम्ना रात्रौ पाण्डवानां वधस्यान्याय्यत्वेऽपि तत्करणेऽपि नीतिप्रदर्शनम् | ... | ७ |
| | अश्वत्थाम्ना कृपकृतवर्माणौ प्रति स्वकर्तव्यकथनप्रार्थना | ... | ,, |
| २ | कृपेणाश्वत्थामानं प्रति कर्तव्योपदेशः | ... | ९ |
| ३ | अश्वत्थाम्ना कृपवचनानादरणपूर्वकं बुद्धिवैचित्र्येण कार्यकरणकथनम् | ... | १४ |
| | अश्वत्थाम्ना निशि पाण्डवादीनां वधस्य स्वकर्तव्यत्वकथनम् | ... | १६ |
| ४ | कृपेणाश्वत्थाममतानुसरणकथनम् | ... | १८ |
| | अश्वत्थाम्ना पितृवधामर्षस्य दुस्सहत्वनिवेदनपुरस्सरं शत्रुवधे सम्भ्रमप्रदर्शनम् | ... | २१ |
| ५ | कृपेण प्रसुप्तमारणस्याधार्मिकत्वकथनम् | ... | २३ |

अध्यायः पृष्ठम्


५ अश्वत्थाम्ना परेषु दोषप्रदर्शनपूर्वकं तेषां सौप्तिकमारणे सम्भ्रमप्रदर्शनम् ... २५
अश्वत्थाम्ना शत्रुमारणाय तच्छिबिरगमनम् ... २७
६ अश्वत्थाम्ना शत्रुशिबिरद्वारे महाभूतसन्दर्शनम् ... २८
भूतेनाश्वत्थामप्रयुक्तबाणग्रसनम् ... २९
भूतपराजितेनाश्वत्थाम्ना गुरूपदिष्टविषयानुस्मरणेन चिन्ताधिगमः ... ३०
अश्वत्थाम्ना दैवबलीयस्त्वप्रतिपत्त्या महादेवस्य शरणवरणम् ३२
७ अश्वत्थाम्ना शिवस्तुतिः ... ३३
अश्वत्थाम्ना स्वपुरतः काञ्चनवेद्यामग्नेः भूतगणानां च दर्शनम् ... ३४
अश्वत्थाम्नाऽग्नौ स्वात्मनो हविष्ट्वकल्पनम् ... ३९
महादेवेनाश्वत्थाम्ने खड्गदानपूर्वकं तदन्तःप्रवेशः ... ४१
अश्वत्थामदर्शनेन राक्षसादिभिः पलायनम् ... ,,
८ अश्वत्थाम्ना शत्रुवधाय शिबिरान्तः प्रवेशः ... ४३
अश्वत्थाम्ना स्वपादेन शिबिरान्तः धृष्टद्युम्नपोथनम् ... ,,
अश्वत्थाम्ना सकारणकथनं पादेनैव धृष्टद्युम्नहननम् ... ४४
धृष्टद्युम्नहननेन स्त्रीणां रोदनम् ... ४५
अश्वत्थाम्ना युधामन्युमारणम् ... ४६
अश्वत्थाम्ना पाञ्चालादीनां हननम् ... ४७
अश्वत्थाम्ना द्रौपदेयादीनां हननम् ... ४८
कृपकृतवर्मभ्यां शिबिरान्निष्क्रान्तानां वधः ... ५४
प्रसुप्तादिवधाकरणेनार्जुनप्रशंसनम् ... ५६
अश्वत्थाम्ना पाण्डवबलस्य यमलोकप्रापणम् ... ५७
अश्वत्थामकृतरात्रियुद्धे रक्षःपिशाचादीनां कोलाहलवर्णनम् ... ५८
रात्रावश्वत्थामकृतयुद्धस्य श्रीभगवदर्जुनाद्यसान्निध्यहेतुकत्वेन वृत्तत्वकथनम् ... ५९

| अध्यायः | | पृष्ठम् |
|---|---|---|
| ८ | अश्वत्थाम्नो रात्रियुद्धजयेन सन्तोषवर्णनम् ... | ६० |
| ९ | अश्वत्थामादिभिः दुर्योधनं प्राप्य परिशोचनम् ... | ६१ |
| | अश्वत्थाम्नाऽल्पप्राणं दुर्योधनं प्रति पाण्डवधार्तराष्ट्रेष्ववशिष्टानां कथनपूर्वकं रात्रियुद्धे स्वजयकीर्तनम् ... | ६७ |
| | दुर्योधनेनाश्वत्थामानं प्रति तत्कर्मणा सर्वेभ्य आधिक्यवर्णनम् ... | ,, |
| | दुर्योधनमरणम् ... | ६८ |
| | सञ्जयस्य दिव्यज्ञाननाशः ... | ,, |

## ऐषीकपर्व

| अध्यायः | | पृष्ठम् |
|---|---|---|
| १० | धृष्टद्युम्नसारथिना युधिष्ठिरं प्रति शिबिरे रात्रौ वृत्तस्य धृष्टद्युम्नादिहननस्य कथनम् ... | ६९ |
| | युधिष्ठिरेण शिबिरवृत्तान्तश्रवणेन परिशोचनम् ... | ७० |
| | युधिष्ठिरेण नकुलं प्रति द्रौपद्यानयनचोदनम् ... | ७४ |
| | युधिष्ठिरेण शिबिरमुपेत्य हतानां स्वीयजनानां दर्शनेन परिदेवनम् ... | ७४ |
| ११ | सुहृद्भिः युधिष्ठिरसान्त्वनम् ... | ७५ |
| | नकुलानीतया द्रौपद्या शिबिरे मृतानां स्वपुत्राणां दर्शनेन परिदेवनम् ... | ७६ |
| | द्रौपद्या प्रायोपवेशनप्रतिज्ञानम् ... | ७७ |
| | युधिष्ठिरेण द्रौपदीसान्त्वनम् ... | ,, |
| | द्रौपद्या भीमं प्रत्यश्वत्थामशिरोमणिहरणपूर्वकं तद्धननचोदनम् ... | ७८ |
| | भीमेन नकुलसारथिना रथेनाश्वत्थामवधाय प्रस्थानम् ... | ७९ |
| १२ | श्रीभगवता युधिष्ठिरं प्रत्यश्वत्थामक्रौर्यादिवर्णनपूर्वकं भीमस्य ततो रक्षणीयत्वकथनम् ... | ८० |
| १३ | श्रीभगवदादिभिः गङ्गाकूले व्याससमीपेऽश्वत्थामदर्शनम् ... | ८७ |

| अध्यायः | | पृष्टम् |
|---|---|---|
| १४ | श्रीभगवदाज्ञयाऽर्जुनेनाश्वत्थामास्त्रप्रत्यस्त्रप्रयोगः ... | ,, |
| १५ | अर्जुनेन ब्रह्मशिरोस्त्रोपसंहारपूर्वकं व्यासनारदौ प्रति स्वहितप्रश्नः ... | ९१ |
| | अर्जुनेन ब्रह्मशिरोस्त्रोपसंहारे तस्य ब्रह्मचर्यादिनिष्ठत्वकथनम् | ९२ |
| | व्यासाश्वत्थामसंवादः ... | ९३ |
| | अश्वत्थाम्नोत्तरागर्भेऽस्त्रप्रयोगेऽपि श्रीभगवता मृतशिशू-जीवनकथनम् ... | ९५ |
| | अश्वत्थाम्ना पाण्डवगर्भेष्वैषीकास्त्रविसर्जनम् ... | ९६ |
| १६ | श्रीभगवताऽश्वत्थामानं प्रति शापदानम् ... | ९७ |
| | अश्वत्थाम्ना पाण्डवेभ्यो मणिदानम् ... | ९९ |
| | भीमेन द्रौपदीं प्रत्यश्वत्थामशिरोमणिदानम् ... | १०० |
| | युधिष्ठिरेणाश्वत्थाममणेः स्वशिरसि धारणम् ... | १०१ |
| १७ | युधिष्ठिरेण श्रीभगवन्तं प्रत्यश्वत्थाम्न एकस्यैव बहुमारणप्रश्नः | १०२ |
| | श्रीभगवता रुद्रमहिम्नैवाश्वत्थाम्नो बहुमारणशक्तिकथनम् | १०३ |
| १८ | श्रीभगवता रुद्रकोपेन देवानां यज्ञनाशकथनम् ... | १०६ |
| | श्रीभगवता रुद्रानुग्रहेण देवानां यज्ञोद्भवकथनम् ... | १०८ |


॥ सौप्तिकपर्व विषयानुक्रमणिका समाप्ता ॥

॥ श्रीरस्तु ॥

# महाभारतस्य स्त्रीपर्व

तत्र

# विषयानुक्रमणिका

## जलप्रदानपर्व


| अध्यायः | | | पृष्ठम् |
|---|---|---|---|
| १ | सञ्जयेन धृतराष्ट्रसान्त्वनम् | ... | १ |
| | धृतराष्ट्रेण पुत्रान्प्रति परिदेवनम् | ... | २ |
| | सञ्जयेन नीतिप्रदर्शनपूर्वकं धृतराष्ट्रशोककथनम् | ... | ४ |
| २ | विदुरेण धृतराष्ट्रदुःखोपशमनम् | ... | ७ |
| ३ | विदुरेण धृतराष्ट्रं प्रति शास्त्रार्थकथनपुरस्सरं दुःखोपशमनम् | | ११ |
| ४ | विदुरेणात्मनो गर्भवासादिकथनम् | ... | १४ |
| ५ | विदुरेण संसारस्य दुर्गमकान्तारसदृशत्वेन जीवस्य तत्र परिभ्रमणादिकथनम् | ... | १७ |
| ६ | विदुरेण संसारलक्षणादिकथनम् | ... | २१ |
| ७ | विदुरेण धृतराष्ट्रं प्रति संसारसन्तरणाय तत्त्वप्रदर्शनम् | ... | २२ |
| ८ | धृतराष्ट्रेण पुत्रशोकेन भूपतनादिकथनम् | ... | २६ |
| | व्यासेन धृतराष्ट्रं प्रति तत्त्वोपदेशपूर्वकं दुःखोपशमनम् | ... | २७ |
| | धृतराष्ट्रेण व्यासानुग्रहाच्छोकादुपरमः | ... | ३१ |
| ९ | धृतराष्ट्रादिभिः स्त्रीभिस्सह मृतानामवलोकनाय युद्धस्थलं प्रति प्रस्थानम् | ... | ३२ |
| १० | मार्गमध्ये धृतराष्ट्रं प्रति कृपादिभिरुपचारवाक्येन सान्त्वनम् | | ३५ |
| | कृपादिभिः स्वावासं प्रति गमनम् | ... | ३७ |
| ११ | युधिष्ठिरेण सभ्रातृपत्नीकं श्रीभगवता सह धृतराष्ट्राभिवन्दनम् | | ३८ |
| | धृतराष्ट्रेण युधिष्ठिरस्य मृद्वालिङ्गनम् | ... | ३९ |

अध्यायः पृष्ठम्

धृतराष्ट्रेण सक्रोधं भीमभ्रमात् श्रीभगवदुत्पादितस्य लोह-भीमस्य गाढालिङ्गनेन तद्भञ्जनेन च रुधिरोद्गिरण-पूर्वकं भीमपक्षपाताभिनयकथनम् ... ४०

श्रीभगवता भीमं मृतं मन्यमानं धृतराष्ट्रं प्रति तन्मरण-मिथ्यात्वप्रतिपादनम् ... ४१

१२ श्रीभगवदुक्त्या धृतराष्ट्रस्य पाण्डवेषु प्रीत्युत्पत्तिकथनम् ... ४२

धृतराष्ट्रेण भीमादीनां निष्कपटमालिङ्गनम् ... ४४

१३ श्रीभगवदादिभिः गान्धारीं प्रति गमनम् ... "

व्यासेन पाण्डवपक्षपातिना तेषु गान्धार्याः शापप्रद-कोपोपशमनवाक्यकथनम् ... ४५

गान्धार्या भीमे कोपकारणस्य कथनम् ... ४६

१४ भीमेन गान्धारीं प्रति स्वानुष्ठितयुद्धाचरणस्य साधुत्व-कथनम् ... ४७

भीमगान्धारी संलापः ... ४८

१५ युधिष्ठिरेण गान्धार्यभिवादनसमये तया प्रत्युक्ति-कथनाभावः ... ५१

कुन्ती गान्धारीभ्यां द्रौपदीसमाश्वासनम् ... ५२

स्त्रीपर्व

१६ गान्धार्या दिव्यज्ञानेन दूरादेव युद्धस्थलदर्शनम् ... ५४

धृतराष्ट्रादिभिः सस्त्रीकं युद्धभूमि प्रवेशः ... "

युद्धभूमौ स्त्रीभिः परिदेवनम् ... ५५

गान्धार्या श्रीभगवन्तं प्रति स्नुषादीनां विलापं सन्दर्श्य मृतानां दैन्यनिवेदनम् ... ५६

१७ गान्धार्या दुर्योधनालिङ्गनेन परिदेवनम् ... ६२

१८ गान्धार्या श्रीभगवन्तं प्रति पुत्रादिगोचरशोकवचनम् ... ६७

१९ गान्धार्या श्रीभगवन्तं प्रति शोककथनम् ... ७१

२० गान्धार्या श्रीभगवन्तं प्रति विलपन्तीनां स्त्रीणां प्रदर्शनम् ७४

| अध्यायः | | पृष्ठम् |
|---|---|---|
| २१ | गान्धार्या श्रीभगवन्तं प्रति कर्णगोचरदुःखकथनम् ... | ७८ |
| २२ | गान्धार्या आवन्त्यादीनां मरणेन दुःखकथनम् ... | ८१ |
| २३ | गान्धार्या श्रीभगवन्तं प्रति मृतशल्यादिगुणकथनपूर्वकं प्रलपनम् ... | ८३ |
| २४ | गान्धार्या श्रीभगवन्तं प्रति मृतभूरिश्रवःप्रभृतीनां दुःखकथनम् ... | ८९ |
| २५ | गान्धार्या श्रीभगवन्तं प्रति मृतानां काम्भोजादीनां प्रदर्शनम् | ९३ |
| | गान्धार्या सर्वकौरवक्षयस्य श्रीभगवदुपेक्षामूलत्वकथनम्... | ९७ |
| | गान्धार्या श्रीभगवन्तं प्रति सर्वज्ञातिक्षयहेतुशापदानम् ... | ९८ |
| | श्रीभगवता यादवानां परस्परहननकथनेन पाण्डवैरपि जीविते नैराश्याधिगमः ... | ,, |
| २६ | श्रीभगवता खिन्नायाः गान्धार्याः समाश्वासनम् ... | ९९ |
| | धृतराष्ट्रेण युधिष्ठिरं प्रति हतानां परिमाणप्रश्नः ... | १०० |
| | युधिष्ठिरेण धृतराष्ट्रं प्रति हतानां परिमाणकथनम् ... | ,, |
| | धृतराष्ट्रयुधिष्ठिरसंवादः ... | १०१ |

## श्राद्धपर्व

| | | |
|---|---|---|
| २७ | युधिष्ठिरेण विदुरादीन् प्रति मृतानां दाहादिक्रियाकरण-चोदनपूर्वकं तैस्तद्विधानम् ... | १०३ |
| | धृतराष्ट्रादिभिः मृतानामुदकादिदानाय गङ्गाकूलं प्रति गमनम् ... | १०६ |
| | कुन्त्या युधिष्ठिरं प्रति कर्णस्य स्वपुत्रत्वाभिधानेन तस्मा अप्युदकादिदानकरणचोदना ... | १०७ |
| | युधिष्ठिरेण कर्णमुद्दिश्य कुन्तीं प्रत्युपचारवाक्यकथनम् ... | १०८ |
| | युधिष्ठिरेण कर्णं प्रत्युदकदानम् ... | १०९ |
| | महाभारतस्य पठनश्रवणादीनां फलकथनम् ... | ११० |

स्त्रीपर्वणि विषयानुक्रमणिका समाप्ता

॥ श्रीः ॥

# ॥ महाभारतम् ॥



## ॥ शल्यपर्व ॥

( शल्यवधपर्व )



### ॥ प्रथमोऽध्यायः ॥



दुर्योधनेन शल्यस्य सैनापत्येऽभिषेचनपूर्वकं पुनर्युद्धाय निर्याणम् ॥ १ ॥ सञ्जयात् शल्यदुर्योधनादिवधश्रवणेन मूर्च्छितस्य धृतराष्ट्रस्य विदुरेण समाश्वासनम् ॥ २ ॥



जनमेजयः—

एवं निपातिते कर्णे समरे सव्यसाचिना ।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज ॥ १

विदीर्यमाणं च बलं दृष्ट्वा राजा सुयोधनः ।
पाण्डवैः प्राप्तकालं किं प्रत्यपद्यन्त कौरवाः ॥ २

एतदिच्छाम्यहं श्रोतुं तदाचक्ष्व द्विजोत्तम ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ ३

वैशम्पायनः—

ततः कर्णे हते राजन् धार्तराष्ट्रस्सुयोधनः ।
भृशं शोकार्णवे मग्नो निराशस्सर्वतोऽभवत् ॥ ४

हा कर्ण हा कर्ण इति शोचमानो मुहुर्मुहुः ।
कृच्छ्रात् स्वशिबिरं प्रायाद्धतशिष्टैर्नृपैस्सह ॥ ५

स समाश्वास्यमानोऽपि हेतुभिश्शास्त्रनिश्चितैः ।
[1]शाश्वतीं भूतिमिच्छद्भिस् सूतपुत्रमनुस्मरन् ॥ ६

स दैवं बलवन्मत्वा प्रभाते विमले सति ।
सङ्ग्रामे निश्चयं कृत्वा पुनर्युद्धाय निर्ययौ ॥ ७

शल्यं सेनापतिं कृत्वा विधिवद्राजपुङ्गवम् ।
रणाय निर्ययौ राजन् हतशिष्टैर्नृपैस्सह ॥ ८

ततस्सुतुमुलं युद्धं कुरुपाण्डवसेनयोः ।
बभूव भरतश्रेष्ठ [2]यथा दैवासुरे पुरा ॥ ९

ततश्शल्यो महाराज कृत्वा कदनमाहवे ।
पाण्डुसैन्यस्य मध्याह्ने धर्मराजेन पातितः ॥ १०

ततो दुर्योधनो राजा हतबन्धू रणाजिरात् ।
अपसृत्य ह्रदं घोरं विवेश रिपुजाद्भयात् ॥ ११

1. ख—राजा हि नालभच्छर्म क-ब—राजन् विभूतिमन्विच्छत्
2. ख—देवासुररणोपमम्

अथापराह्णे तस्याह्नः परिवार्य महारथैः ।
ह्रदादाहूय युद्धाय भीमसेनेन पातितः ॥ १२

तस्मिंस्तु निहते वीरे महेष्वासास्त्रयो रणे ।
कृतवर्मा कृपो द्रौणिर् जघ्नुः पाञ्चालसैनिकान् ॥ १३

ततोऽपराह्णसमये शिबिरादेत्य सञ्जयः ।
प्रविवेश पुरीं दीनो दुःखशोकसमन्वितः ॥ १४

प्रविश्य तु पुरं तूर्णं भुजावुद्यम्य दुःखितः ।
वेपमानस्तदा राज्ञः प्रविवेश निवेशनम् ॥ १५

धावतश्चाप्यपश्यत् स तत्रत्यान् पुरुषर्षभान् ।
नष्टचित्तानिवोन्मत्ताञ् शोकेन भृशदुःखितान् ॥ १६

दृष्ट्वैव च नराञ् शीघ्रं व्याजहारातिदुःखितान् ।
रुरोद च नरव्याघ्र हा राज इति दुःखितः ॥ १७

सञ्जयः—

अहो बत विपन्नोऽस्मि निधनेन महात्मनः ।
असौ सुबलवान् कालो गतिश्च परमा तथा ॥ १८

शक्रतुल्यबलास्सर्वे यत्राहन्यन्त पार्थिवाः ॥ १८॥

वैशम्पायनः—

दृष्ट्वैव हि पुरे राजञ् जनस्सर्वो हि सञ्जयम् ।
प्ररुरोद भयोद्विग्नो हा राजन्निति सस्वनम् ॥ १९॥

आकुमारं नरव्याघ्र तत् पुरं वै समन्ततः ।
आर्तनादं महच्चक्रे श्रुत्वा विनिहतं नृपम् ॥ २०॥

तथा स विह्वलस्सूतः प्रविश्य नृपतिक्षयम् ।
ददर्श नृपतिश्रेष्ठं प्रज्ञाचक्षुषमीश्वरम् ॥ २१॥

दृष्ट्वा चासीनमनघं समन्तात् परिवारितम् ।
स्नुषाभिर्भरतश्रेष्ठ गान्धार्या विदुरेण च ॥ २२॥

तथाऽन्यैश्च सुहृद्भिश्च ज्ञातिभिश्च हितैषिभिः ।
तमेव चार्थं ध्यायन्तं कर्णस्य निधनं प्रति ॥ २३॥

[1]रुदन्नेवाब्रवीद्वाक्यं राजानं जनमेजय ।
नातिहृष्टमनास्सूतो बाष्पसन्दिग्धया गिरा[2] ॥ २४॥

सञ्जयः—

सञ्जयोऽहं नरव्याघ्र नमस्ते भरतर्षभ ॥ २५

मद्राधिपो हतश्शल्यस् सौबलश्शकुनिस्तथा ।
उलूकः पुरुषव्याघ्र कैतव्यो दृढविक्रमः ॥ २६

संशप्तका हतास्सर्वे काम्भोजाश्च शकैस्सह ।
म्लेच्छाश्च पार्वतीयाश्च यवनाश्च निपातिताः ॥ २७

प्राच्या हता महाराज दाक्षिणात्याश्च सर्वशः ।

1. ख—इदमर्धं नास्ति
2. ख—उवाच भरतश्रेष्ठं धृतराष्ट्रं नराधिपम् । [अधिकः पाठः]

[1]उदीच्याश्च हतास्सर्वे प्रतीच्याश्च परन्तप ॥ २८
राजानो राजपुत्राश्च सर्वे विनिहता नृप ।
कर्णपुत्रो हतश्शूरस् सत्यसेनो महाबलः ॥ २९
दुर्योधनो हतो राजन् यथोक्तं पाण्डुसूनुना ।
भग्नसक्थिर्महाराज शेते पांसुषु [2]रूषितः ॥ ३०
धृष्टद्युम्नो हतो राजन् शिखण्डी चापराजितः ।
उत्तमौजा युधामन्युस् तथा सर्वे प्रभद्रकाः ॥ ३१
पाञ्चालाश्च महाराज चेदयश्च निषूदिताः ।
तव पुत्रा हतास्सर्वे द्रौपदेयाश्च भारत ॥ ३२
नरा विनिहतास्सर्वे [3]गजाश्च विनिषूदिताः ।
रथिनश्च नरव्याघ्र तथाऽश्वा निहता युधि ॥ ३३
निश्शेषं शिबिरं राजंस् तावकानां कृतं प्रभो ।
पाण्डवानां च शूराणां समासाद्य परस्परम् ॥ ३४
स्त्रीशेषमभवत् सर्वं जगत् कालेन मोहितम् ।
सप्त वै पाण्डवाश्शिष्टा धार्तराष्ट्रास्त्रयो जनाः ॥ ३५
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः ।
कृपश्च कृतवर्मा च द्रौणिश्च जयतां वरः ॥ ३६
[4]एते शेषा महाराज रथिनो राजसत्तम ।

---

1. ख—इदमर्धं नास्ति　　2. ख—कुण्ठितः
3. घ—हयाश्च विनिपातिताः　　4. ख—अर्धद्वयं नास्ति

अक्षौहिणीनामष्टानां दशानां च नरेश्वर ॥ ३७

एते शेषा महाराज सर्वेऽन्ये निधनं गताः ॥ ३७॥

कालेन निहतं सर्वं जगद्वै भरतर्षभ ।
दुर्योधनं वै पुरतः कृत्वा सर्वे हता नराः ॥ ३८॥

वैशम्पायनः—

एतच्छ्रुत्वा वचः क्रूरं धृतराष्ट्रो जनेश्वरः ।
निपपात महाराज गतसत्त्वो महीतले ॥ ३९॥

तस्मिन् निपतिते वीरे विदुरोऽपि महायशाः ।
निपपात महाराज पुत्रव्यसनकर्शितः ॥ ४०॥

गान्धारी च महाभागा सर्वाश्च कुरुयोषितः ।
पतितास्सहसा भूमौ श्रुत्वा घोरतरं वचः ॥ ४१॥

विसंज्ञं पतितं भूमौ तदासीद्राजमण्डलम् ।
विलापमूर्च्छोपहतं चित्रं न्यस्तं पटे यथा ॥ ४२॥

कृच्छ्रेण तु ततस्तत्र धृतराष्ट्रो महीपतिः ।
शनैरलभत प्राणान् [1]पुत्रव्यसनकर्शितः ॥ ४३॥

लब्ध्वा तु नृपतिः प्राणान् वेपमानः पुनः पुनः ।
निरीक्ष्य च दिशस्सर्वाः क्षत्तारं वाक्यमब्रवीत् ॥ ४४॥

1. घ—अयं पादोऽनन्तरश्च न स्तः

धृतराष्ट्रः—

विद्वन् क्षत्तर्महाप्राज्ञ त्वं गतिर्भरतर्षभ ॥
ममानाथस्य सुभृशं पुत्रहीनस्य सर्वशः ॥　　४५॥

वैशम्पायनः—

एवमुक्त्वा ततो भूयो निस्संज्ञः पतितो भुवि ॥　　४६
तं तथा पतितं दृष्ट्वा बान्धवास्तस्य केचन ।
ते शीतैस्सिषिचुस्तोयैर् विविजुर्व्यजनैरपि ॥　　४७
तूष्णीमासीन्महीपालः पुत्रव्यसनकर्शितः ॥　　४७॥
स तु दीर्घेण कालेन प्रत्याश्वस्तो महीपतिः ।
निश्श्वसञ्जिह्मग इव कुम्भक्षिप्तोऽभवन्नृप ॥　　४८॥
सञ्जयोऽप्यरुदत् तत्र दृष्ट्वा राजानमातुरम् ।
तथा सर्वास्स्त्रियश्चैव गान्धारी च यशस्विनी ॥　　४९॥
ततो दीर्घस्य कालस्य विदुरं वाक्यमब्रवीत् ।
धृतराष्ट्रो नरव्याघ्रो मुह्यमानः पुनः पुनः ॥　　५०॥

धृतराष्ट्रः—

[1]गच्छन्तु योषितस्सर्वाः गान्धारी च यशस्विनी ।
तथेमे सुहृदस्सर्वे मुह्यते मे मनो भृशम् ॥　　५१॥

वैशम्पायनः—

एवमुक्तस्ततः क्षत्ता तास्स्त्रियो भरतर्षभ ।

---

1. ह्व—अर्धचतष्टयं नास्ति

विसर्जयामास तदा मुह्यमानो नराधिप ॥ ५२॥

निर्जग्मुश्च ततस्सर्वास् तास्स्त्रियो जनमेजय ।
सुहृदश्च तथा सर्वे दृष्ट्वा राजानमातुरम् ॥ ५३॥
[1]ततो नरपतिस्तत्र संज्ञां लब्ध्वा परन्तप ।
गतिर्मे को भवेदद्य इति चिन्तासमाकुलः ॥ ५४॥

अवैक्षत् सञ्जयं तत्र रुदमानो महीपतिः ॥ ५५

प्राञ्जलिं सञ्जयं दृष्ट्वा रुदमानं मुहुर्मुहुः ।
[2-3]बहुशश्चिन्तयित्वा तु सञ्जयं वाक्यमब्रवीत् ॥ ५६

राजानं शोचमानस्तु तं शोचन्तं मुहुर्मुहुः ।
समाश्वासयत क्षत्ता वचसा मधुरेण च ॥ ५७

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि प्रथमोऽध्यायः ॥ १ ॥
॥ ७४ ॥ शल्यवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ५७ श्लोकाः]

---

1. ख—धृतराष्ट्रस्ततस्संज्ञां लब्ध्वा परमदुर्मनाः । [पाठान्तरम्]
2. क-ख—ज्ञातीन् स्त्रियोऽथ निर्याप्य प्रविश्य विदुरः पुनः ।
[अधिकः पाठः]
3. ख—अर्धद्वयं नास्ति

## ॥ द्वितीयोऽध्यायः ॥

धृतराष्ट्रेण सञ्जयस्य पुरतो दुर्योधनवचनानुस्मरणेन विलापः ॥ १ ॥

वैशम्पायनः—

विसृष्टास्वथ नारीषु धृतराष्ट्रोऽम्बिकासुतः ।
विललाप महाराज दुःखाद्दुःखतरं गतः ॥ १

सधूममिव निश्वस्य करौ धून्वन् पुनः पुनः ।
बहुशश्चिन्तयित्वा तु सञ्जयं वाक्यमब्रवीत् ॥ २

धृतराष्ट्रः—

अहो बत महद्दुःखं यदहं पाण्डवान् रणे ।
क्षेमिणश्चाव्ययांश्चैव त्वत्तस्सूत शृणोमि वै ॥ ३

वज्रसारमयं नूनं हृदयं मम दुर्भिदम् ।
यच्छ्रुत्वा निहतान् पुत्रान् दीर्यते न सहस्रधा ॥ ४

चिन्तयित्वा वचस्तेषां बालक्रीडां च सञ्जय ।
अद्य चैव हताञ् श्रुत्वा भृशं मे दूयते मनः ॥ ५

अन्धत्वाद्यदि पुत्राणां न मे रूपनिदर्शनम् ।
पुत्रस्नेहकृता प्रीतिर् नित्यमेतेषु धारिता ॥ ६

बालभावमतिक्रान्तान् यौवनस्थांश्च तानहम् ।

तानद्य निहताञ् श्रुत्वा हृतैश्वर्यान् हृतौजसः ।
न लभे वै क्वचिच्छान्तिं पुत्राधिभिरभिप्लुतः ॥　　८

एह्येहि वत्स राजेन्द्र ममानाथस्य पुत्रक ।
त्वया हीनो महाबाहो कां नु यास्याम्यहं गतिम् ॥　　९

गतिर्भूत्वा महाराज ज्ञातीनां सुहृदां तथा ।
अन्धं वृद्धं च मां वीर विहाय त्वं क्व गच्छसि ॥　　१०

या कृपा या च ते प्रीतिर् या च राजसु मानिता ।
कथं त्वं निहतः पार्थैस् संयुगेष्वपराजितः ॥　　११

कथं त्वं पृथिवीपालांस् त्यक्त्वा तात समागतान् ।
शेषेऽद्य निहतो भूमौ प्राकृतः कुनृपो यथा ॥　　१२

को नु मामुत्थितः काले तात तातेति वक्ष्यति ।
महाराजेति सततं लोकनाथेति चासकृत् ॥　　१३

परिष्वज्य तु कं कण्ठे स्नेहेन क्लिन्नलोचनः ।
अनुशास्तास्मि कौरव्य तत् साधु वद मे वचः ॥　　१४

ननु नामाहमश्रौषं वचनं तव पुत्रक ।
भूयसी मम सेना च तात पार्थस्य नो तथा ॥　　१५

भगदत्तः कृपश्शल्य आवन्त्यौ च जयद्रथः ।
भूरिश्रवास्सोमदत्तो महाराजश्च बाह्लिकः ॥　　१६

अश्वत्थामा कृतवर्मा मागधश्च महाबलः ।

बृहद्बलश्च क्राथश्च शकुनिश्चापि सौबलः ॥　　१७

म्लेच्छाश्च बहुसाहस्राश् शकाश्च यवनैस्सह ।
सुदक्षिणश्च काम्भोजस् त्रिगर्ताधिपतिस्तथा ॥　　१८

भीष्मः पितामहश्चैव भारद्वाजोऽथ गौतमः ।
श्रुतायुश्चाश्रुतायुश्च शतायुश्चापि वीर्यवान् ॥　　१९

जलसन्धोऽप्यार्श्यश्रृङ्गी राक्षसश्चाप्यलायुधः ।
अलम्बुसो वीरबाहुस् सुबाहुश्च शतायुधः ॥　　२०

एते चान्ये च बहवो राजानो राजसत्तम ।
मदर्थं प्रहरिष्यन्ति प्राणांस्त्यक्त्वा महारणे ॥　　२१

तेषां मध्ये स्थितो युद्धे भ्रातृभिः परिवारितः ।
योधयिष्याम्यहं पार्थान् पाञ्चालान् सृञ्जयांस्तथा ॥　　२२

सोमकान् नृपशार्दूल द्रौपदेयांश्च संयुगे ।
सात्यकिं कुन्तिभोजं च राक्षसं च घटोत्कचम् ॥　　२३

एकोऽप्येषां महाराज समर्थस्सन्निवारणे ।
[1]समरे पाण्डुयोधानां सङ्क्रुद्धो ह्यभिधावताम् ॥　　२४

किं पुनस्सहितो वीरैः कृतवैरश्च पाण्डवैः ॥　　२४॥

अथवा सर्वपाञ्चालैः पाण्डवस्यानुसैनिकैः ।
योत्स्यामि सह राजेन्द्र हनिष्यामि च तान् मृधे ॥　　२५॥

---

1. ख—इदमर्धं नास्ति

कर्णस्त्वेको मया सार्धं निहनिष्यति पाण्डवान् ।
ते वै नृपतयो वीरास् स्थास्यन्ति मम शासने ॥ २६॥

यश्च तेषां प्रणेता वै वासुदेवो महाबलः ।
न स संनह्यते राजन्निति मामब्रवीद्वचः ॥ २७॥

एवं च वदतस्सूत बहुशो मम सन्निधौ ।
युक्तितोऽप्यनुपश्यामि निहतान् पाण्डवान् मृधे ॥ २८॥

तेषां मध्ये स्थितो यत्र हन्यते मम पुत्रकः ।
व्यायच्छमानस्समरे किमन्यद्भागधेयतः ॥ २९॥

भीष्मश्च निहतो यत्र लोकनाथः प्रतापवान् ।
[1]शिखण्डिनं समासाद्य मृगेन्द्र इव कुञ्जरम् ॥ ३०॥

द्रोणश्च ब्राह्मणो वृद्धस् सर्वशस्त्रास्त्रपारगः ।
निहतः पाण्डवैस्सङ्ख्ये किमन्यद्भागधेयतः ॥ ३१॥

*[2]भूरिश्रवा हतो यत्र सोमदत्तश्च संयुगे ।

---

1. ख—इदमर्धं नास्ति
2. ख—इदमाद्यर्धपञ्चकं नास्ति
* इतः ख कोशे पाठक्रमो व्यत्यस्तः —
महाबलस्तथा पुत्रस् सर्वशस्त्रास्त्रपारगः ।
निहतः पाण्डवैस्सङ्ख्ये किमन्यद्भागधेयतः ॥
जयद्रथो हतश्शूरो किमन्यद्भागधेयतः ॥
जयद्रथो हतश्शूरो मागधेयो बृहद्बलः ।
शतायुश्चापि विक्रान्तः किमन्यद्भागधेयतः ॥
आवन्त्यौ निहतौ यत्र त्रिगर्तश्च महाबलः ।

[3]बाह्लिकश्च महाराजः किमन्यद्भागधेयतः ॥ ३२॥

भगदत्तो हतो यत्र गजयुद्धविशारदः ।
जयद्रथश्च निहतः किमन्यद्भागधेयतः ॥ ३३॥

सुदक्षिणो हतो यत्र जलसन्धश्च कौरवः ।
श्रुतायुश्च शतायुश्च किमन्यद्भागधेयतः ॥ ३४॥

महाबलस्तथा पुण्ड्रस् सर्वशस्त्रास्त्रपारगः ।
निहतः पाण्डवैस्सङ्ख्ये किमन्यद्भागधेयतः ॥ ३५॥

---

संशप्तकाश्च बहवः किमन्यद्भागधेयतः ॥
नारायणा हता यत्र गोपाला युद्धदुर्मदाः ।
रथाश्च बहुसाहस्राः किमन्यद्भागधेयतः ॥
अलम्बुसस्तथा शूरो राक्षसश्चाप्यलायुधः ।
आर्ष्यशृङ्गी च निहतः किमन्यद्भागधेयतः ॥
शकुनिस्सौबलो यत्र कैतव्यश्च महायशाः ।
निहतः पाण्डवेयेन किमन्यद्भागधेयतः ॥
राजानो राजपुत्राश्च शूराः परमदुर्जयाः ।
निहता बहवो यत्र किमन्यद्भागधेयतः ॥
यत्र शूरा महेष्वासाः कृतास्त्रा युद्धदुर्मदाः ।
राजानो राजपुत्राश्च महेन्द्रसमविक्रमाः ॥
नानादेशसमावृत्ताः क्षत्रिया यत्र सञ्जय ।
निहतास्समरे वीराः किमन्यद्भागधेयतः ॥
पुत्राश्च निहतास्सर्वे पौत्राश्चैव महाबलाः ।
वयस्या भ्रातरश्चैव किमन्यद्भागधेयतः ॥
भागधेयसमायुक्तो ध्रुवमुत्पद्यते नरः ।
यश्च भाग्यसमायुक्तस् स शुभं प्राप्नुयाद्भुवि ॥

3. अ-ख-घ—नास्तीदमर्धम्

बृहद्बलो हतो यत्र [1]मागधश्च महाबलः ।
आवन्त्यौ निहतौ यत्र शकुनिश्चापि सौबलः ॥ ३६॥

त्रिगर्तश्च महाबाहुस् संशप्ताश्च महाबलाः ।
नारायणा हता यत्र गोपाला युद्धदुर्मदाः ॥ ३७॥

म्लेच्छाश्च बहुसाहस्राः किमन्यद्भागधेयतः ॥ ३८

अलम्बुसस्तथा शूरो राक्षसश्चाप्यलायुधः ।
[2]आर्श्यशृङ्गश्च निहतः किमन्यद्भागधेयतः ॥ ३९

राजानो राजपुत्राश्च शूराः परिघबाहवः ।
[3]नानादेशसमावृत्ताः क्षत्रिया यत्र सञ्जय ॥ ४०
निहताः पाण्डवेयैस्तैः किमन्यद्भागधेयतः ॥ ४०॥
[4]दुर्योधनो हतो यत्र पुत्राश्चास्य महात्मनः ।
सोदराश्च महेष्वासाः किमन्यद्भागधेयतः ॥ ४१॥

यश्च भाग्यसमायुक्तस् स शिवं प्राप्नुयाद्भुवि ॥ ४२

अहं वियुक्तस्तैर्भाग्यैः पुत्रैश्च सह सञ्जय ।
कथमन्धो भविष्यामि वृद्धश्शत्रुवशं गतः ॥ ४३

नान्यदद्य परं मन्ये वनवासादृते प्रभो ।

---

1. ब—इतः अष्टौ पादा न सन्ति
2. ब—कोश एकस्मिन्नेवेदमर्धं वर्तते
3. ब—इदमर्धं नास्ति
4. अ-क-ब—अर्धत्रयं नास्ति

[1]सोऽहं वनं गमिष्यामि निर्बन्धुर्ज्ञातिसङ्क्षये ॥ ४४

न हि मेऽन्यद्भवेच्छ्रेयो वनाभ्युपगमादृते ।
[2]एतामवस्थां प्राप्तस्य लूनपक्षस्य सञ्जय ॥ ४५

दुर्योधनो हतो यत्र शल्यश्च बलवान् युधि ।
दुश्शासनो [3]विशस्तश्च विकर्णश्च महाबलः ॥ ४६

कथं नु भीमसेनस्य श्रोष्येऽहं शब्दमुत्तमम् ।
एकेन समरे येन हतं पुत्रशतं मम ॥ ४७

असकृद्वदतस्तस्य दुर्योधनवधेन च ।
पुत्रशोकाभिसन्तप्तो न श्रोष्ये परुषा गिरः ॥ ४८

वैशम्पायनः—

एवं स शोकसन्तप्तः पार्थिवो हतबान्धवः ।
मुहुर्मुहुर्मुह्यमानः पुत्राधिभिरभिप्लुतः ॥ ४९

विलप्य सुचिरं कालं धृतराष्ट्रोऽम्बिकासुतः ।
दीर्घमुष्णं विनिश्वस्य चिन्तयित्वा पराभवम् ॥ ५०

दुःखेन महता राजन् सन्तप्तो भरतर्षभ ।
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ॥ ५१

---

1. ख—एतामवस्थां संप्राप्तः पुत्रपक्षैः क्षयं गतः ।　　[अधिकः पाठः]
2. ख—इदमर्धं नास्ति
3. अ—वितस्तश्च　　ख—विविंशश्च

धृतराष्ट्रः—

भीष्मद्रोणौ हतौ श्रुत्वा सूतपुत्रं च पातितम् ।
[1]सेनापतिं महेष्वासं कमकुर्वत मामकाः ॥ ५२

[2]यं यं सेनाप्रणेतारं युद्धे कुर्वन्ति मामकाः ।
अचिरेणैव कालेन तं तं निघ्नन्ति पाण्डवाः ॥ ५३

रणमूर्ध्नि हतो भीष्मः पश्यतां वः किरीटिना ।
एवमेव हतो द्रोणस् सर्वेषामेव पश्यताम् ॥ ५४

एवमेव हतः कर्णस् सूतपुत्रः प्रतापवान् ।
सराजकानां सर्वेषां पश्यतां वः किरीटिना ॥ ५५

पूर्वमेवाहमुक्तोऽस्मि विदुरेण महात्मना ।
दुर्योधनापराधेन प्रजेयं विनशिष्यति ॥ ५६

केचित् सम्यक् प्रपश्यन्ति मूढास्तु न तथा परे ।
तदिदं मम मूढस्य तथा भूतं वचस्स्मृतम् ॥ ५७

यदब्रवीन्मां धर्मात्मा विदुरो दीर्घदर्शिवान् ।
तत् तथा समनुप्राप्तं वचनं दीर्घदर्शिनः ॥ ५८

[3]दैवोपहतचित्तेन यन्मयानुष्ठितं पुरा ।
अनयस्य फलं तस्य ब्रूहि गावल्गणे पुनः ॥ ५९

---

1. ख—तथा शल्यं महेष्वासं मद्राणामीश्वरं विभुम् । [अधिकः पाठः]
2. अ-क-ख—नास्तीदमर्धम्
3. ख—उपेक्षितं तथा चेदं वचनं दीर्घदर्शिनः । [अधिकः पाठः]

को वा मुखमनीकानाम् आसीत् कर्णे निपातिते ॥ ५९॥
अर्जुनं वासुदेवं च को वा प्रत्युद्ययौ रथी ॥ ६०

केऽरक्षन् दक्षिणं चक्रं मद्रराजस्य संयुगे ।
वामं वा योद्धुकामस्य के वा वीरस्य पृष्ठतः ॥ ६१

कथं च वस्समेतानां मद्रराजो महाबलः ।
निहतः पाण्डवैस्सङ्ख्ये पुत्रा वा मम सञ्जय ॥ ६२

ब्रूहि सर्वं यथातत्त्वं भारतानां महाक्षयम् ॥ ६२॥

यथा स निहतस्सङ्ख्ये पुत्रो दुर्योधनो मम ।
पाञ्चालाश्च यथा सर्वे निहतास्सपदानुगाः ॥ ६३॥

धृष्टद्युम्नश्शिखण्डी च द्रौपद्याः पञ्च चात्मजाः ।
पाण्डवाश्च यथा मुक्तास् तथा तौ सात्वतौ युधि ॥ ६४॥

कृपश्च कृतवर्मा च [1]भारद्वाजात्मजस्तथा ॥ ६५

यद्यथा यादृशं वृत्तं यथा चैवेह साम्प्रतम् ।
निखिलं श्रोतुमिच्छामि कुशलो ह्यसि सञ्जय ॥ ६६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
॥ ७४ ॥ शल्यवधपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ६६ श्लोकाः ]

---

1, ख—द्रौणिश्च जयतां वरः
यथैतद्यादृशं चैवं वृद्धं वृत्तं च साम्प्रतम् । [ पाठान्तरम् ]

## ॥ तृतीयोऽध्यायः ॥

कृपेण कर्णवधदुःखितं दुर्योधनं प्रति स्वपरपक्षयोर्दौर्बल्यप्राबल्याभिधानपूर्वकमुपायं प्रदर्श्य सन्धिविधानम् ॥

सञ्जयः—

शृणु राजन्नवहितो यथा वृत्तो महान् क्षयः ।
कुरूणां पाण्डवानां च समासाद्य परस्परम् ॥ १

निहते सूतपुत्रे तु फल्गुनेन महात्मना ।
विद्रुतेषु च सैन्येषु समानीतेषु चासकृत् ॥ २

विमुखे तव पुत्रे च शोकोपहतचेतसि ।
भृशोद्विग्नेषु सैन्येषु दृष्ट्वा पार्थस्य विक्रमम् ॥ ३

ध्यायमानेषु योधेषु दुःखं प्राप्तेषु भारत ।
बलानां वध्यमानानां श्रुत्वा निनदमुत्तमम् ॥ ४

अभिज्ञानां नरेन्द्राणां विकृतं प्रेक्ष्य संयुगे ।
पतितानि च नीडानि ध्वजांश्चैव महात्मनाम् ॥ ५

रणे विनिहतान् नागान् दृष्ट्वा पत्तींश्च मारिष ।
आयोधनं चातिघोरं रुद्रस्याक्रीडसन्निभम् ॥ ६

अप्रख्यातिं गतानां तु राज्ञां शतसहस्रशः ।
कृपाविष्टः कृपो दृष्ट्वा वयश्शीलसमन्वितः ॥ ७

अब्रवीत् तत्र तेजस्वी सोऽभिसृत्य जनाधिपम् ।
दुर्योधनमनुक्रोशाद् वचनं वचनक्षमः ॥　　८

कृपः—

दुर्योधन निबोधेदं यत् त्वा वक्ष्यामि कौरव ।
श्रुत्वा कुरु महाराज यदि ते रोचते मनः ॥　　९

न युद्धधर्माच्छ्रेयान् वै पन्था राजेन्द्र विद्यते ।
[1]यं समाश्रित्य युध्यन्ते क्षत्रियाः क्षत्रियर्षभ ॥　　१०

पुत्रो भ्राता पिता चैव स्वस्रीयो मातुलस्तथा ।
सम्बन्धिबान्धवाश्चैव योद्धव्याः क्षत्रजीविनः ॥　　११

वधे चैव परो धर्मस् तथाऽधर्मः पलायने ।
ते सुघोरां समापन्ना जीविकां जीवितार्थिनः ॥　　१२

तत्र त्वां नृप वक्ष्यामि किञ्चिदेव हितं वचः ।
हते भीष्मे हते द्रोणे कर्णे चैव महारथे ॥　　१३

जयद्रथे च निहते तव भ्रातृषु चानघ ।
लक्ष्मणे तव पुत्रे च किं शेषं पर्युपास्महे ॥　　१४

येषु भारं समासज्य राज्ये मतिमकुर्महि ।
ते सन्त्यज्य तनूर्याताश् शूरा ब्रह्मविदां गतिम् ॥　　१५

वयं त्विह विनाभूता गुणवद्भिर्महारथैः ।

---

1. ख—तस्मात् सर्वे हि युध्यन्ते

कृपणं वर्तयिष्यामः पातयित्वा नृपान् बहून् ॥ १६

सर्वैरपि च जीवद्भिर् बीभत्सुर्न पराजितः ।
कृष्णो नेता महाबाहुर् दैवैरपि दुरासदः ॥ १७

इन्द्रकार्मुकवज्राभम् इन्द्रकेतुमिवोच्छ्रितम् ।
वानरं केतुमासाद्य सञ्चचाल महाचमूः ॥ १८

सिंहनादेन भीमस्य पाञ्चजन्यस्वनेन च ।
गाण्डीवस्य च निर्घोषात् संमुह्यन्ते मनांसि नः ॥ १९

चलन्तीव महाविद्युन्मुष्णन्ती नयनप्रभाम् ।
अलातमिव [1]चाविद्धं गाण्डीवं समदृश्यत ॥ २०

जाम्बूनदविचित्रं यद्धूयमानं महद्धनुः ।
दृश्यते दिक्षु सर्वासु विद्युदभ्रगणेष्विव ॥ २१

वाह्यमानाश्च कृष्णेन वायुनेव वलाहकाः ।
[2]जाम्बूनदविचित्राङ्गा वहन्त्येवार्जुनं हयाः ॥ २२

तावकं तद्बलं सर्वम् अर्जुनोऽस्त्रविदां वरः ।
गहनं शिशिरापाये ददाहाग्निरिवोत्थितः ॥ २३

गाहमानमनीकानि महेन्द्रसदृशं प्रभुम् ।
[3]धनञ्जयमपश्याम चतुर्दन्तमिव द्विपम् ॥ २४

---

1. ख—बीभत्सोः 2. ब—इदमर्धं नास्ति
3. ब—इदमर्धं नास्ति

विक्षोभयन्तं सेनां वै त्रासयन्तं च पार्थिवान् ।
धनञ्जयमपश्याम नलिनीष्विव कुञ्जरम् ॥　　२५

त्रासयन्तं तथा योधान् [1]रथघोषेण पाण्डवम् ।
भूय एव हि पश्यामस् सिंहं मृगगणा इव ॥　　२६

सर्वलोकमहेष्वासौ वृषभौ सर्वधन्विनाम् ।
आमुक्तकवचौ कृष्णौ लोकमध्ये विरेजतुः ॥　　२७

अद्य सप्तदशाहानि वर्तमानस्य भारत ।
सङ्ग्रामस्यातिघोरस्य युध्यतां चापि नो युधि ॥　　२८

वायुनेव विधूतानि तवानीकानि गच्छता ।
शरदम्भोदजालानि व्यशीर्यन्त बलानि नः ॥　　२९

तां नावमिव पर्यस्तां [2]भ्रान्तवातां महार्णवे ।
तव सेनां महाराज सव्यसाची व्यकम्पयत् ॥　　३०

क नु ते सूतपुत्रोऽभूत् क नु द्रोणस्सहात्मजः ।
अहं क नु क चात्मा ते हार्दिक्यश्च तथा क नु ॥　　३१

दुश्शासनश्च भ्राता ते भ्रातृभिस्सहितः क नु ॥　　३१॥

बाणगोचरसम्प्राप्तं प्रेक्ष्य चैव जयद्रथम् ।
सम्बन्धिनस्ते भ्रातॄंश्च सहायान् मातुलांस्तथा ॥　　३२॥

सर्वक्षत्रस्य मिषतो लोकानाक्रम्य मूर्धनि ।

---

1. क-ध—धनुर्घो　　2. ध—मज्जमानां

[1]जयद्रथो हतो राजन् किं नु शेषमुपास्महे ॥ ३३॥

को वेह स पुमानस्ति यो विजेष्यति पाण्डवम् ।
तस्य चास्त्राणि दिव्यानि विविधानि महात्मनः ॥ ३४॥

गाण्डीवस्य च निर्घोषो वीर्याणि हरते हि नः ॥ ३५

नष्टचन्द्रा यथा रात्रिस् सेनेयं हतनायका ।
नागनक्रझषाकीर्णा [2]नदी विलुलिता यथा ॥ ३६

ध्वजिन्यां हतनेत्रायां यथेष्टं श्वेतवाहनः ।
चरिष्यति महाराज कक्षेऽग्निरिव स ज्वलन् ॥ ३७

सात्यकेश्चैव यो वेगो भीमसेनस्य चोभयोः ।
दारयेत गिरीन् सर्वाञ् शोषयेतापि सागरान् ॥ ३८

उवाच वाक्यं यद्भीमस् सभामध्ये विशां पते ।
कृतं तत् सफलं सर्वं भूयश्चैव करिष्यति ॥ ३९

प्रमुखस्थे तदा कर्णे बलं पाण्डवरक्षितम् ।
दुरासदं तथा गुप्तं व्यूढं गाण्डीवधन्वना ॥ ४०

युष्माभिस्तानि चीर्णानि यान्यसाधूनि साधुषु ।
अकारणकृतान्येव तेषां वः फलमागतम् ॥ ४१

आत्मनोऽर्थे त्वया लोको यत्नतस्सर्व आहृतः ।

---

1. ख—जयद्रथं रणे हत्वा तच्छीर्षं चाप्यपातयत् । [अधिकः पाठः]

स ते संशयितस्तात आत्मा च भरतर्षभ ॥　　४२

रक्ष दुर्योधनात्मानम् आत्मा सर्वस्य भाजनम् ।
भिन्ने हि भाजने तात दिशो गच्छति तद्गतम् ॥　　४३

हीयमानेन चेत् सन्धिः पर्येष्टव्यस्समेन च ।
विग्रहो वर्धमानेन नीतिरेषा बृहस्पतेः ॥　　४४

ते वयं पाण्डुपुत्रेभ्यो हीनास्स्म बलशक्तितः ।
अत्र तैः पाण्डवैस्सार्धं सन्धिं मन्ये क्षमं प्रभो ॥　　४५

न जानीते हि यश्श्रेयश् श्रेयसश्चावमन्यते ।
स क्षिप्रं भ्रश्यते राज्यान्न च श्रेयोऽनुविन्दति ॥　　४६

प्रणिपत्य हि राजानं राज्यं यदि लभेमहि ।
श्रेयस्स्यान्न तु मौर्ख्येण राजन् गन्तुं पराभवम् ॥　　४७

वैचित्रवीर्यवचनात् कृपाशीलो युधिष्ठिरः ।
विनियुञ्जीत राज्ये त्वां गोविन्दवचनेन च ॥　　४८

अजातशत्रुः कौरव्यो गुरुशुश्रूषणे रतः ।
धृतराष्ट्रस्य वचनं नावमंस्यति धार्मिकः ॥　　४९
कुर्वन्ति भ्रातरश्चास्य वचनं नात्र संशयः ॥　　४९॥

यद्यद्ब्रूयाद्धृषीकेशो राजानमपराजितम् ।
अर्जुनो भीमसेनश्च सर्वे कुर्युरसंशयम् ॥　　५०॥

नातिक्रामति तत् कृष्णो वचनं पाण्डवस्य तु ।

धृतराष्ट्रस्य मन्येऽहं नापि कृष्णस्य पाण्डवः ॥ ५१॥

एतत् क्षममहं मन्ये तव पार्थैरविग्रहम् ॥ ५२

नैतद्ब्रवीमि कार्पण्यान्न प्राणपरिरक्षणात् ।
पथ्यं राजन् ब्रवीमि त्वां तत् परासुस्स्मरिष्यसि ॥ ५३

सञ्जयः—

इति वृद्धो विलप्यैतत् कृपश्शारद्वतो वचः ।
दीर्घमुष्णं च निश्श्वस्य शुशोच च मुमोह च ॥ ५४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
॥ ७४ ॥ शल्यवधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ५४ श्लोकाः]

## ॥ चतुर्थोऽध्यायः ॥

दुर्योधनेन कृपं प्रति कारणकथनपूर्वकं सन्ध्यनङ्गीकरणम्

सञ्जयः—

एवमुक्तस्ततो राजा गौतमेन महात्मना ।
निश्श्वस्य दीर्घमुष्णं च तूष्णीमासीद्विशां पते ॥ १

ततो मुहूर्तं स ध्यात्वा पुत्रस्तव महामनाः ।
कृपं शारद्वतं वाक्यम् इत्युवाच परन्तपः ॥ २

दुर्योधनः—

[1]यत् किञ्चित् सुहृदा वाच्यं तत् सर्वं श्रावितं त्वया ।
कृतं च भवता सर्वं प्राणान् सन्त्यज्य युध्यता ॥　　३

गाहमानमनीकानि युध्यमानं महारथैः ।
पाण्डवैरतितेजोभिर् लोकस्त्वामनुदृष्टवान् ॥　　४

सुहृदा यद्धितं वाच्यं भवता श्रावितोऽस्म्यहम् ।
नाभिनन्दामि तत् सर्वं मुमूर्षुरिव भेषजम् ॥　　५

हेतुकारणसंयुक्तं हितं वचनमुत्तमम् ।
उच्यमानं महाबाहो न मे विप्राग्र्य रोचते ॥　　६

बहु विप्रकृतोऽस्माभिः कथं सोऽस्मासु विश्वसेत् ॥　　६॥

अक्षद्यूते च नृपतिर् जित्वा राज्यं महद्धनम् ।
स कथं मम वाक्यानि श्रद्दध्याद्भूय एव तु ॥　　७॥

तथा दौत्येन सम्प्राप्तः कृष्णः पार्थहिते रतः ।
प्रलब्धश्च हृषीकेशस् तच्च कर्म विरोधितम् ॥　　८॥

स हि मे वचनं ब्रह्मन् कथमेवाभिमंस्यते ॥　　९

विललाप च यत् कृष्णा सभामध्ये समेयुषी ।
तन्न मर्षयते कृष्णो न राज्यहरणं तथा ॥　　१०

एकप्राणौ हि तौ कृष्णावन्योन्यमभिसंहितौ ।

---

1. ख—आचार्य यत्तेऽभिमतं तत्सर्वं श्रावितोऽस्म्यहम् ॥ [पाठान्तरम्]

पुरा यच्छ्रुतमस्माभिर् अद्य पश्यामि तत् प्रभो ॥ ११

स्वस्रीयं च हतं दृष्ट्वा दुःखं स्वपिति केशवः ।
कृतागसो वयं तस्य स मदर्थे कथं क्षमेत् ॥ १२

अभिमन्योर्विनाशेन न शर्म लभतेऽर्जुनः ।
स कथं मद्धिते यत्नं प्रकरिष्यति याचितः ॥ १३

मध्यमः पाण्डवस्तीक्ष्णो भीमसेनो महाबलः ।
प्रतिज्ञातं च तेनोग्रं भग्नदर्पः कथं क्षमेत् ॥ १४

उभौ च बद्धनिस्त्रिंशौ कालाग्निसदृशद्युती ।
कृतवैरौ तु तौ वीरौ यमावपि यमोपमौ ॥ १५

धृष्टद्युम्नशिखण्डी च कृतवैरौ मया सह ।
तौ कथं मद्धिते यत्नं कुर्यातां द्विजसत्तम ॥ १६

दुश्शासनेन यत् कृष्णा एकवस्त्रा रजस्वला ।
परिक्लिष्टा सभामध्ये सर्वलोकस्य पश्यतः ॥ १७

तथा विवसनां दीनां स्मरन्तोऽद्यापि पाण्डवाः ।
न निवारयितुं शक्यास् सङ्ग्रामात् ते परन्तपाः ॥ १८

सदा च द्रौपदी क्रुद्धा मद्विनाशाय दीक्षिता ।
उग्रं तेपे तपः कृष्णा भर्तृभिस्सहिता वने ॥ १९

[1]स्थण्डिले नित्यदा शेते यावद्वैरस्य यातना ।

---

1. घ—इदमर्धं नास्ति

निक्षिप्य मानं दर्पं च वासुदेवसहोदरी ॥ २०

कृष्णायाः प्रेष्यवद्भूत्वा शुश्रूषां कुरुते सदा ।
इति सर्वं समुन्नद्धं न निर्वाति कथञ्चन ॥ २१

अभिमन्योर्विनाशेन स सन्धेयः कथं भवेत् ॥ २१॥

कथं नु राजा भुक्त्वेमां पृथिवीं सागराम्बराम् ।
पाण्डवानां प्रसादेन सम्भोज्यं राज्यमल्पकम् ॥ २२॥

उपर्युपरि राज्ञां वै ज्वलित्वा भास्करो यथा ।
युधिष्ठिरं कथं पश्चाद् अनुयास्यामि दासवत् ॥ २३॥

कथं भोगान् स्वयं भुक्त्वा दत्वा देयांश्च पुष्कलान् ।
कृपणं वर्तयिष्यामि कुनृपैस्सह जीविकाम् ॥ २४॥

नाभ्यसूयामि ते वाक्यम् उक्तं स्नेहादिदं त्वया ।
न तु सन्धिमहं मन्ये प्राप्तकालं कथञ्चन ॥ २५॥

सुनीतमनुपश्यामि सुयुद्धेन परन्तप ।
नायं क्लीबायितुं कालस् संयोद्धुं काल एव नः ॥ २६॥

इष्टं मे बहुभिर्यज्ञैर् दत्ता [1]विप्रेषु दक्षिणाः ।
प्राप्ताः क्रमश्रुता वेदाश् शत्रूणां मूर्ध्नि च स्थितम् ॥ २७॥

भृत्या मे सम्भृतास्तात दीनश्चाप्युद्धृतो जनः ।
[2]नोत्सहेऽहं द्विजश्रेष्ठ पाण्डवं वक्तुमीदृशम् ॥ २८॥

---

1. अ-क—सर्वा च दक्षिणा 2. ख-ध—इदमर्धं नास्ति

जितानि परराष्ट्राणि स्वराष्ट्रमनुपालितम् ।
भुक्ताश्च विविधा भोगास् त्रिवर्गास्सेविता मया ॥ २९॥

[1]मित्राणां गतमानृण्यं क्षत्रधर्मस्य चोभयोः ॥ ३०

न ध्रुवं सुखमस्तीह कुतो राज्यं कुतो यशः ।
इह कीर्तिर्विचेतव्या सा च युद्धेन नान्यथा ॥ ३१

[2]वृथा च यत् क्षत्रियस्य निधनं तद्विगर्हितम् ।
अधर्मस्सुमहानेष [3]विण्मूत्रमरणं गृहे ॥ ३२

अरण्ये यो विमुञ्चेत सङ्ग्रामे वा तनुं नृपः ।
क्रतूनाहृत्य महतो महिमानं स गच्छति ॥ ३३

कृपणं विलपन्नार्तो जरया च परिप्लुतः ।
म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः ॥ ३४

त्यक्त्वा नानाविधान् भोगान् प्राप्तानां परमां गतिम् ।
अपीदानीं सुयुद्धेन गच्छेयं तत्सलोकताम् ॥ ३५

शूराणामार्यवृत्तानां सङ्ग्रामेष्वनिवर्तिनाम् ।
धीमतां सत्यसन्धानां सर्वेषां क्रतुयाजिनाम् ॥ ३६

शस्त्रावभृथमाप्तानां ध्रुवो वासस्त्रिविष्टपे ॥ ३६॥

मुदा नूनं प्रपश्यन्ति योधानप्सरसां गणाः ॥ ३७

---

1. ख—पितृणां 2. ख—गृहे च यत्

3. ख—विप्रियं घ—विप्रवन्म,

पश्यन्ति नूनं पितरः पूजितास्सुरसंसदि ।
अप्सरोभिः परिवृता मोदमानास्त्रिविष्टपे ॥　　३८

पन्थानममरैः प्राप्तं शूरैश्चाप्यनिवर्तिभिः ।
अपि तैस्सङ्गतं मार्गं वयमध्यारुहेमहि ॥　　३९

पितामहेन वृद्धेन तथाऽऽचार्येण धीमता ।
जयद्रथेन कर्णेन तथा दुश्शासनादिभिः ॥　　४०

घटमाना मदर्थेऽस्मिन् हताश्शूरा जनाधिपाः ।
शेरते लोहिताक्ताङ्गाः पृथिव्यां शरविक्षताः ॥　　४१

नानाशस्त्रवृताश्शूरा यथोक्तक्रतुयाजिनः ।
त्यक्त्वा प्राणान् यथान्यायम् इमे समिति शेरते ॥　　४२

स्वैरं च चरितः पन्था दुर्गमो हि पुनर्भवेत् ।
सम्पतद्भिर्महावेगैर् इतो यास्यामि सद्गतिम् ॥　　४३

ये मदर्थं हताश्शूरास् तेषां कृतमनुस्मरन् ।
ऋणं तत् प्रतिमुञ्चानो न राज्ये मन आदधे ॥　　४४

घातयित्वा वयस्यांश्च भ्रातॄनथ पितामहान् ।
जीवितं परिरक्षेयं लोको मां गर्हयेद्ध्रुवम् ॥　　४५

कीदृशं च भवेद्राज्यं मम हीनस्य बन्धुभिः ।
सखिभिश्च सुहृद्भिश्च प्रणिपत्य च पाण्डवम् ॥　　४६

सोऽहमेतादृशं कृत्वा जगतोऽस्य पराभवम ।

सुयुद्धेन हतस्स्वर्गं प्राप्स्यामि न तदन्यथा ॥ ४७

सञ्जयः—

[1]एवं दुर्योधनेनोक्तं सर्वं सम्पूज्य तद्वचः ।
साधु साध्विति राजानं क्षत्रियास्सम्बभाषिरे ॥ ४८

पराजयमशोचन्तः कृतचित्ताश्च विक्रमे ।
सर्वे सुनिश्चिता योद्धुम् उदग्रमनसोऽभवन् ॥ ४९

समाश्वास्य च राजानं सर्वे युद्धाभिनन्दिनः ।
[2]उदग्द्वियोजनं गत्वा प्रत्यतिष्ठन्त कौरवाः ॥ ५०

आकाशे विद्रुमे पुण्ये प्रस्थे हिमवतश्शुभे ।
अरुणां सरस्वतीं प्राप्य पपुस्सस्नुश्च ते जलम् ॥ ५१

तव [3]वत्साः कृतोत्साहाः पर्यवर्तन्त भारत ।
पराजयमशोचन्तः कृतचित्ताश्च योधने ॥ ५२

पर्यवस्थाप्य चात्मानम् अन्योन्येन पुनः पुनः ।
सर्वे राजन् न्यवर्तन्त क्षत्रियाः कालचोदिताः ॥ ५३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
॥ ७४ ॥ शल्यवधपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ५३ श्लोकाः ]

---

1. ख—तच्छ्रुत्वा तव पुत्रस्य सत्त्वयुक्तस्य भाषितम् । [पाठान्तरम्]
2. क-ख—उभे द्वियोजने घ—ऊनं द्वियोजनं
3. ख-घ—पुत्राः

## ॥ पञ्चमोऽध्यायः ॥

दुर्योधनेन सैनापत्यविधानप्रार्थनायामश्वत्थाम्ना शल्यस्य सेनापतित्वविधानम् ॥ १ ॥ दुर्योधनेन शल्यं प्रति सैनापत्यस्वीकारप्रार्थना ॥ २ ॥

सञ्जयः—

तथा हिमवतः प्रस्थे सर्वे युद्धाभिनन्दिनः ।
सर्व एव महाराज योधास्तत्र समागताः ॥ १

शल्यश्च चित्रसेनश्च शकुनिश्च महारथः ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ २

सुषेणोऽरिष्टसेनश्च धृतसेनश्च वीर्यवान् ।
जयत्सेनश्च राजानस् ते रात्रिमुषितास्ततः ॥ ३

रणे कर्णे हते वीरे त्रासिता जितकाशिभिः ।
नालभञ्शर्म ते पुत्रा हिमवन्तमृते गिरिम् ॥ ४

तेऽब्रुवन् सहितास्तत्र राजानं सैन्यसन्निधौ ॥ ४॥

सैनिकाः—

कृतयत्ना रणे राजन् सम्पूज्य विधिवत् तदा ।
कृत्वा सेनाप्रणेतारं परांस्त्वं योद्धुमर्हसि ॥ ५॥
येनाभिगुप्ता यास्यामो जयेमासुहृदो वयम् ॥ ६

सञ्जयः—

ततो दुर्योधनस्स्थित्वा रणे रथवरोत्तमे ।

सर्वसत्त्वविभागज्ञम् अन्तकप्रतिमं रणे ॥ ७

स्वाङ्गप्रच्छन्नशिरसं कम्बुग्रीवं प्रियंवदम् ।
व्याकोचपद्माभमुखं व्याघ्रास्यं मेरुगौरवम् ॥ ८

शम्भोर्वृषस्य सदृशं स्कन्धनेत्रगतिस्वरैः ।
पुष्टश्लिष्टायतभुजं सुविस्तीर्णोरसं शुभम् ॥ ९

जवे बले च सदृशम् अरुणानुजवातयोः ।
आदित्यस्य त्विषा तुल्यं बुद्ध्या चोशनसा समम् ॥ १०

कान्तिरूपमुखैश्वर्यैस् त्रिभिश्चन्द्रमसोपमम् ।
काञ्चनोपलसङ्घातसदृशं श्लिष्टसन्धिकम् ॥ ११

सुवृत्तोरुकटीजङ्घं [1]सुपादं स्वङ्गुलीयकम् ।
स्मृत्वा स्मृत्वैव च गुणान् धात्रा यत्नेन निर्मितम् ॥ १२

सर्वलक्षणसम्पूर्णं निपुणं श्रुतिसागरम् ।
जेतारं तरसाऽरीणाम् अजय्यं शत्रुभिर्बलात् ॥ १३

[2]प्रयोगबलसंहारप्रायश्चित्तं सुमङ्गलम् ।
प्रयोगविनियोगौ च स्मृतिं यस्य गुणान् विदुः ॥ १४

दशाङ्गं यश्चतुष्पादम् इष्वस्त्रं वेद तत्त्वदः ॥ १४॥
साङ्गांश्च चतुरो वेदान् सम्यगाख्यानपञ्चमान् ।

---

1. क-ख—सुपार्श्वं स्वङ्गुलीनखम्
2. ख-घ—अर्धद्वयं नास्ति

आराध्य त्र्यम्बकं यत्नाद् व्रतैरुग्रैर्महातपाः ॥ १५॥

[1]लब्धवानस्त्रजालं च शिक्षां च शशिशेखरात् ॥ १६

अयोनिजायामुत्पन्नो द्रोणेनायोनिजेन यः ।

तमप्रतिमकर्माणं रूपेणाप्रतिमं भुवि ॥ १७

पारगं सर्वविद्यानां गुणवन्तमनिन्दितम् ।

तं समेत्यात्मनस्तुल्यम् अश्वत्थामानमब्रवीत् ॥ १८

दुर्योधनः—

यं पुरस्कृत्य सहिता युधि जेष्याम पाण्डवान् ।

गुरुपुत्रोऽद्य सर्वेषाम् अस्माकं परमा गतिः ॥ १९

भवांस्तस्मान्नियोगात् ते कोऽस्तु सेनापतिर्मम ॥ १९॥

द्रौणिः—

अयं कुलेन वीर्येण तेजसा यशसा श्रिया ।

सर्वैर्गुणैस्समुदितश् शल्यो नोऽस्तु चमूपतिः ॥ २०॥

भागिनेयान् निजांस्त्यक्त्वा कृतज्ञोऽस्मानुपागतः ।

महासेनो महाबाहुर् महासेन इवापरः ॥ २१॥

एनं सेनापतिं कृत्वा नृपतिं नृपसत्तम ।

शक्यः प्राप्तुं जयोऽस्माभिर् देवैस्स्कन्दमिवोर्जितम् ॥ २२॥

सञ्जयः—

तथोक्ते द्रोणपुत्रेण सर्व एव नराधिपाः ।

---

1. ख—कोश एकस्मिन्नेवेदमर्धं वर्तते

परिवार्य स्थिताश्शल्यं जयशब्दं च चक्रिरे ॥ २३॥

युद्धाय च मनश्चक्रुर् आवेशं च परं ययुः ॥ २४

ततो दुर्योधनश्शल्यं भूमौ स्थित्वा रथे स्थितम् ।
प्रोवाच प्राञ्जलिर्भूत्वा [1]रामभीमसमं रणे ॥ २५

दुर्योधनः—

अयं स कालस्सम्प्राप्तो मित्राणां मित्र[2]सत्तम ।
यत्र मित्रममित्रं वा परीक्षन्ते बुधा जनाः ॥ २६

स भवानस्तु नश्शूरः प्रणेता वाहिनीमुखे ॥ २६॥

रणं तु याते भवति पाण्डवा मन्दचेतसः ।
भविष्यन्ति सहामात्यास् [3]सबला अपि दुर्बलाः ॥ २७॥

शल्यः—

यत्तु मां मन्यसे राजन् कुरुराज करोमि तत् ।
त्वत्प्रियार्थं हि मे सर्वं प्राणा राज्यं धनानि च ॥ २८॥

दुर्योधनः—

सैनापत्येन वरये त्वामहं मातुला[4]तुलम् ।
सोऽस्मान् पाहि युधां श्रेष्ठ स्कन्दो देवानिवाहवे ॥ २९॥

1. क—द्रोणभीष्मसमं घ—भीमसेनसमं
2. ख—वत्सल
3. ख-घ—पाञ्चालाश्च निरुद्यमाः
4. क—ऽनघ

अभिषिञ्चस्व राजेन्द्र देवानामिव पावकिः ।
जहि शत्रून् रणे वीर महेन्द्रो दानवानिव ॥ ३०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
॥ ७४ ॥ शल्यवधपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये ३०॥ श्लोकाः ]

## ॥ षष्ठोऽध्यायः ॥

दुर्योधनेन शल्यस्य सैनापत्येऽभिषेचनम् ॥ १ ॥ कृष्णेन युधिष्ठिरं प्रति शल्यवधविधानम् ॥ २ ॥

सञ्जयः—

एतच्छ्रुत्वा वचो राज्ञो मद्रराजः प्रतापवान् ।
दुर्योधनं तदा राजन्निदं वचनमब्रवीत् ॥ १

शल्यः—

दुर्योधन महाबाहो शृणु वाक्यमरिन्दम ।
यावेतौ मन्यसे कृष्णौ रथस्थौ रथिनां वरौ ॥ २
न मे तुल्यावुभावेतौ [1]बाहुवीर्ये कथञ्चन ॥ २॥
उद्यतां पृथिवीं सर्वां ससुरासुरमानवाम् ।
योधयेयं रणमुखे सङ्क्रुद्धः किमु पाण्डवान् ॥ ३॥

1. ख—बले वीर्ये

विजेष्ये च रणे पार्थान् सोमकांश्च समागतान् ॥ ४

अहं सेनाप्रणेता वै भविष्यामि न संशयः ।
तं च व्यूहं विधास्यामि न करिष्यन्ति यं परे ॥ ५

अद्यैवाहं रणे सर्वान् पाञ्चालान् सह पाण्डवैः ।
निहनिष्यामि राजेन्द्र स्वर्गं यास्यामि वा हतः ॥ ६

अद्य पश्यन्तु मां लोका विचरन्तमभीतवत् ।
अद्य पाण्डुसुतास्सर्वे वासुदेवोऽथ सात्यकिः ॥ ७

पाञ्चालाश्चेदयश्चैव द्रौपदेयाश्च सर्वशः ।
धृष्टद्युम्नश्शिखण्डी च सर्वे चापि प्रभद्रकाः ॥ ८

विक्रमं मम पश्यन्तु धनुषश्च महद्बलम् ।
लाघवं चास्त्रवीर्यं च भुजयोश्च बलं युधि ॥ ९

अद्य पश्यन्तु मे पार्थास् सिद्धाश्च सह चारणैः ।
यादृशं मे बलं बाह्वोस् सम्पदस्त्रेषु या च मे ॥ १०

अद्य मे विक्रमं दृष्ट्वा पाण्डवानां महारथाः ।
प्रतीकारपरा भूत्वा चेष्टन्तां विविधाः क्रियाः ॥ ११

अद्य सैन्यानि पाण्डूनां द्रावयिष्ये समन्ततः ।
भीष्मद्रोणावति विभो सूतपुत्रं च संयुगे ॥ १२

विचरिष्ये रणमुखे प्रियार्थं तव कौरव ।

इति सत्यं ब्रवीम्येतद् दुर्योधन न संशयः ॥ १३

सञ्जयः—

एवमुक्तस्तदा राजा मद्राधिपतिमञ्जसा ।
अभ्यषिञ्चच्च सेनायां मध्ये भारतसत्तम ॥ १४

विधिना शास्त्रदृष्टेन हृष्टरूपो विशां पते ।
अभिषिक्ते ततश्शल्ये सिंहनादो महानभूत् ॥ १५

तव सैन्येष्ववाद्यन्त वादित्राणि च सङ्घशः ।
हृष्टाश्चासंस्तदा योधा मद्रकाश्च महारथाः ॥ १६

तुष्टुवुश्चैव राजानं शल्यमाहवशोभिनम् ॥ १६॥

सैनिकाः—

जय राजंश्चिरं जीव जहि शत्रून् समागतान् ॥ १७

तव बाहुबलं प्राप्य धार्तराष्ट्रो महाबलः ।
निखिलां [1]पृथिवीं सर्वां प्रशास्तु निहतद्विषम् ॥ १८

त्वं हि शक्तो रणे जेतुं देवगन्धर्वदानवान् ।
मर्त्यधर्माण इह तु किं न सोमकसृञ्जयान् ॥ १९

सञ्जयः—

एवं संस्तूयमानस्तु मद्राणामधिपो बली ।
हर्षं प्राप तदा वीरो दुष्प्रापमकृतात्मभिः ॥ २०

---

1. ख—भोक्ष्यते राजा सशैलवनपत्तनाम्

अभिषिक्ते तदा शल्ये तव सैन्येषु मानद ।
न कर्णव्यसनं किञ्चिन्मेनिरे तत्र भारत ॥ २१

हृष्टास्सुमनसश्चैव बभूवुस्तत्र सैनिकाः ।
मेनिरे च तदा पार्थान् मद्रराजवशं गतान् ॥ २२

प्रहर्षं प्राप्य सेना तु तावकी भरतर्षभ ।
तां रात्रिं सुखिनी सुप्ता स्वस्थचित्तेव चाभवत् ॥ २३

सैन्यस्य तव तं श्रुत्वा शब्दं राजा युधिष्ठिरः ।
वार्ष्णेयमब्रवीद्वाक्यं सर्वक्षत्रस्य पश्यतः ॥ २४

युधिष्ठिरः—

मद्रराजः कृतश्शल्यो धार्तराष्ट्रेण मारिष ।
सेनापतिर्महेष्वासस् सर्वसैन्येषु पूजितः ॥ २५

एतज्ज्ञात्वा तथा भूतं कुरु माधव नः क्षमम् ।
[1]भवान् नेता च गोप्ता च विधत्स्व यदनन्तरम् ॥ २६

सञ्जयः—

तमब्रवीन्महाराज वासुदेवो महारथम् ॥ २६॥

श्रीभगवान्—

आर्तायनिमहं जाने यथा तत्त्वेन भारत ।
वीर्यवांश्च महेष्वासो महात्मा च विशेषतः ॥ २७॥

कृती च चित्रयोधी च संयुक्तो लाघवेन च ॥ २८

1. अ—नास्तीदमर्धम्

यादृग्भीष्मस्तथा द्रोणो यादृक् कर्णश्च संयुगे ।
तादृशस्तद्विशिष्टो वा मद्रराजो न संशयः ॥　　२९

युध्यमानस्य तस्याजौ चिन्तयन्नेव भारत ।
योद्धारं नाधिगच्छामि तुल्यरूपं जनाधिपम् ॥　　३०

शिखण्ड्यर्जुनभीमानां सात्वतस्य च भारत ।
धृष्टद्युम्नस्य च तथा बलेनाभ्यधिको रणे ॥　　३१

मद्रराजो महाराज सिंहद्विरदविक्रमः ।
विचरिष्यत्यभीः काले कालः क्रुद्धः प्रजास्विव ॥　　३२

तस्याद्य न प्रपश्यामि प्रतियोद्धारमाहवे ।
त्वामृते पुरुषव्याघ्र शार्दूलसमविक्रमम् ॥　　३३

स त्वमेको हि लोकेऽस्मिन् नान्यस्त्वत्तः पुमान् भवेत् ।
मद्रराजं रणे क्रुद्धं यो हन्यात् कुरुनन्दन ॥　　३४
अहन्यहनि युध्यन्तं क्षोभयन्तं बलं तव ॥　　३४॥

तस्माज्जहि रणे शल्यं मघवानिव शम्बरम् ।
सौतेः पश्चादसौ वीरो धार्तराष्ट्रेण सत्कृतः ॥　　३५॥

तवैव विजयो नूनं हतो मद्रेश्वरो भवेत् ।
तस्मिन् हते हतं सर्वं धार्तराष्ट्रबलं महत् ॥　　३६॥

एतच्छ्रुत्वा महाराज वचनं मम साम्प्रतम् ।

प्रत्युद्याहि रणे पार्थ मद्रराजं महारथम् ॥ ३७॥

जहि चैनं महाबाहो वासवो नमुचिं यथा ।
न चैवात्र दया कार्या मातुलोऽयं ममेति च ॥ ३८॥

क्षत्रधर्मं पुरस्कृत्य जहि मद्रजनेश्वरम् ॥ ३९

द्रोणभीष्मार्णवं तीर्त्वा कर्णपातालसम्भवम् ।
मा निमज्जस्व सगणश् शल्यमासाद्य गोष्पदम् ॥ ४०

यच्च वै तपसो वीर्यं यच्च क्षत्रबलं तव ।
तद्दर्शय रणे सर्वं जहि चैनं महाबलम् ॥ ४१

सञ्जयः—

एतावदुक्त्वा वचनं केशवः परवीरहा ।
जगाम शिबिरं सायं पूज्यमानो हि पाण्डवैः ॥ ४२

केशवे तु तथा याते धर्मराजो युधिष्ठिरः ।
विसृज्य सर्वान् भ्रातृंश्च पाञ्चालानथ सोमकान् ॥ ४३

सुष्वाप रजनीं तां तु विशल्य इव कुञ्जरः ॥ ४३॥

ते च सर्वे महेष्वासाः पाञ्चालाः पाण्डवास्तदा ।
कर्णस्य निधने हृष्टास् सुषुपुस्तां निशां तदा ॥ ४४॥

गतज्वरं महेष्वासं तीर्णपारं महारथम् ।

बभूव पाण्डवेयानां सैन्यं प्रमुदितं निशि ॥ ४५॥

सूतपुत्रस्य निधनाज् जयं लब्ध्वा च मारिष ॥ ४६

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
॥ ७४ ॥ शल्यवधपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ४६ श्लोकाः]

---

## ॥ सप्तमोऽध्यायः ॥

उभयसैन्यानां व्यूहकरणपूर्वकं द्वन्द्वीभूय युद्धाय निर्गमनम् ॥

---

सञ्जयः—

[1]व्यतीतायां रजन्यां तु राजा दुर्योधनस्तदा ।
अब्रवीत् तावकान् सर्वान् सन्नह्यन्तां महारथाः ॥ १

राज्ञस्तु मतमास्थाय समनह्यत सा चमूः ।
अचोदयंस्तदा तूर्णं पर्यधावंस्तथा परान् ॥ २

अकल्प्यन्त च मातङ्गास् समनह्यन्त पत्तयः ।
हयानास्तरणोपेतांश् चक्रुरन्ये सहस्रशः ॥ ३

---

1. घ—अयनं मरुतां ततामृतानाममृतानां तनुगौर्गवां खगानाम् ।
अपदस्य च भेदभेदसंख्ययाजावचलो योगकृतान्तरो बलानाम् ॥
अर्धरात्रे विबुद्धस्सन् बहुचिन्तासमाकुलः ।
कृतशेषश्रियश्शोघ्रं युद्धोद्योगसमाकुलः ॥ [अधिकः पाठः]

वादित्राणां च निनदः प्रादुरासीद्दिशां पते ।
चोदनार्थं च सैन्यानां योधानां चाप्यनेकशः ॥ ४

ततो बलानि सर्वाणि हतशिष्टानि भारत ।
सन्नद्धान्येव दृश्यन्ते मृत्युं कृत्वा निवर्तनम् ॥ ५

शल्यं सेनापतिं कृत्वा मद्रराजं महारथम् ।
प्रविभज्य बलं सर्वम् अनीकेषु व्यवस्थिताः ॥ ६

ततस्सर्वे समागम्य पुत्रेण तव चोदिताः ।
कृपश्च कृतवर्मा च द्रौणिश्शल्योऽथ सौबलः ॥ ७

अन्ये च पार्थिवास्सर्वे समयं चक्रिरे तदा ॥ ७॥

कौरवसैनिकाः—

न त्वेकेन च योद्धव्यं कथञ्चिदिह पाण्डवैः ॥ ८

यो ह्येकः पाण्डवैर्युध्येद् यो वा युध्यन्तमुत्सृजेत् ।
स पञ्चभिर्भवेद्युक्तः पातकैश्चोपपातकैः ॥ ९

[1]अद्याचार्यसुतो द्रौणिर् नैको युध्येत शत्रुभिः ।
अन्योन्यं परिरक्षद्भिर् योद्धव्यं सहितैश्च नः ॥ १०

सञ्जयः—

एवं ते समयं कृत्वा सर्वे तत्र महारथाः ।
मद्राधिपं पुरस्कृत्य तूर्णमभ्यद्रवन् परान् ॥ ११

---

1. ख—इदमर्धं नास्ति

तथैव पाण्डवा राजन् व्यूह्य सैन्यं महारथाः ।
अभ्ययुः कौरवान् युद्धे योत्स्यमानास्समन्ततः ॥ १२

ततो बलं समभवत् क्षुब्धार्णवसमस्वनम् ।
समुद्धतपदात्यश्वम् उद्धूतरथकुञ्जरम् ॥ १३

धृतराष्ट्रः—

द्रोणस्येव च भीष्मस्य राधेयस्य मया श्रुतम् ।
पतनं शंस मे भूयश् शल्यस्याथ सुतस्य मे ॥ १४

कथं रणे हतश्शल्यो धर्मराजेन सञ्जय ।
भीमसेनेन बलिना पुत्रो दुर्योधनो मम ॥ १५

सञ्जयः—

क्षयं मनुष्यदेहानां रथनागाश्वसंक्षयम् ।
शृणु राजन् स्थिरो भूत्वा सङ्ग्रामं शंसतो मम ॥ १६

आशा बलवती राजन् पुत्राणां तेऽभवत् तदा ।
हते भीष्मे हते द्रोणे सूतपुत्रे च पातिते ॥ १७

शल्यः पार्थान् रणे सर्वान् निहनिष्यति पार्थिवः ।
तामाशां हृदये कृत्वा समाश्वास्य च भारत ॥ १८

मद्रराजं च समरे समाश्रित्य महारथम् ।
नाथवन्तमिवात्मानम् अमन्यत सुतस्तव ॥ १९

यदा कर्णे हते पार्थास् सिंहनादं प्रचक्रिरे ।

तदा राजन् धार्तराष्ट्रान् आविवेश महद्भयम् ॥ २०

तान् समाश्वासयामास मद्रराजो महारथः ।
व्यूह्य व्यूहं महाराज सर्वतोभद्रमृद्धिमत् ॥ २१

प्रत्युद्यातो रणे पार्थान् मद्रराजः प्रतापवान् ।
विधून्वन् कार्मुकं चित्रं [1]भारघ्नं वेगवत्तरम् ॥ २२

रथप्रवरमास्थाय सैन्यपार्श्वे महारथः ।
तस्य नेता महाराज रथस्थोऽशोभयद्रथम् ॥ २३

स तेन संवृतो राजा बलेनामित्रकर्शनः ।
तस्थौ शूरो महाराज पुत्राणां ते भयप्रणुत् ॥ २४

प्रयाणे मद्रराजोऽभून्मुखं व्यूहस्य दंशितः ।
मद्रकैस्सहितो वीरैः कर्णपुत्रैश्च रक्षितः ॥ २५

सव्येऽभूत् कृतवर्मा तु त्रिगर्तैः परिवारितः ।
गौतमो दक्षिणे पार्श्वे शकैश्च यवनैस्सह ॥ २६

अश्वत्थामा पृष्ठतोऽभूत् काम्भोजैः परिवारितः ।
दुर्योधनोऽभवन्मध्ये रक्षितः कुरुपुङ्गवैः ॥ २७

हयानीकेन महता सौबलश्चापि संवृतः ।
प्रययौ सर्वसैन्यानि कैतव्यश्च महारथः ॥ २८

पाण्डवेया महेष्वासा व्यूह्य सैन्यमरिन्दमाः ।

---

1. ख-घ—वेगवद्बलवत्तरम्

त्रिधा भूता महाराज तव सैन्यमभिद्रवन् ॥ २९

धृष्टद्युम्नश्शिखण्डी च सात्यकिश्च महारथः ।
शल्यस्य वाहिनीं तूर्णम् अभिदुद्रुवुराहवे ॥ ३०

ततो युधिष्ठिरो राजा स्वेनानीकेन संवृतः ।
शल्यमेवाभिदुद्राव जिघांसुर्भरतर्षभ ॥ ३१

हार्दिक्यं तु महेष्वासम् अर्जुनश्शत्रुपूगहा ।
संशप्तकगणांश्चैव वेगितोऽभिविदुद्रुवे ॥ ३२

गौतमं भीमसेनोऽपि सोमकाश्च महारथाः ।
अभ्यद्रवन्त राजेन्द्र जिघांसन्तः परान् युधि ॥ ३३

माद्रीपुत्रौ च शकुनिम् उलूकं च महारथम् ।
ससैन्यौ सहसैवोभावुपतस्थतुराहवे ॥ ३४

तथैवायुतशो योधास् तावकाः पाण्डवान् रणे ।
अभ्यद्रवन्त सङ्क्रुद्धा विविधायुधपाणयः ॥ ३५

धृतराष्ट्रः—

हते भीष्मे महेष्वासे द्रोणे कर्णे जयद्रथे ।
कुरुष्वल्पावशिष्टेषु पाण्डवेषु च संयुगे ॥ ३६

संरब्धेषु च पार्थेषु पराक्रान्तेषु सञ्जय ।
मामकानां परेषां च किं शिष्टमभवद्बलम् ॥ ३७

सञ्जयः—

यथा वयं परै राजन् युद्धाय समवस्थिताः ।
यावच्चासीद्बलं शिष्टं सङ्ग्रामे तन्निबोध मे ॥ ३८

एकादशसहस्राणि रथानां भरतर्षभ ।
[1]दश दन्तिसहस्राणि सप्त चैव शतानि च ॥ ३९

पूर्णे शतसहस्रे द्वे हयानां भरतर्षभ ।
नव कोट्यस्तथा तिस्रो बलमेतत्तवानघ ॥ ४०

रथानां षट् सहस्राणि षट्सहस्राश्च कुञ्जराः ।
दश चाश्वसहस्राणि पत्तिकोटिशतानि च ॥ ४१

एतद्बलं पाण्डवानाम् अभवच्छेषमाहवे ।
एत एव समाजग्मुर् युद्धाय भरतर्षभ ॥ ४२

एवं विभज्य राजेन्द्र मद्रराजमते स्थिताः ।
पाण्डवान् प्रत्युपाजग्मुर् जयगृद्धाः प्रमन्यवः ॥ ४३

तथैव पाण्डवाश्शूरास् समरे जितकाशिनः ।
[2]उपयाता नरव्याघ्राः पाञ्चालाश्च यशस्विनः ॥ ४४

एवमेते बलौघेन परस्परजयैषिणः ।
उपयाता महावीराः पूर्वां सन्ध्यां प्रति प्रभो ॥ ४५

1. अ—अर्धद्वयं नास्ति
2. ख—इदमर्धद्वयं नास्ति

ततः प्रववृते युद्धं घोररूपं भयानकम् ।
तावकानां परेषां च निघ्नतामितरेतरम् ॥ ४६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
॥ ७४ ॥ शल्यवधपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये ४६ श्लोकाः]

---

## ॥ अष्टमोऽध्यायः ॥

अष्टादशदिवसयुद्धारम्भः ॥ १ ॥ सङ्कुलयुद्धम् ॥ २ ॥

---

सञ्जयः—

ततः प्रववृते युद्धं घोररूपं भयानकम् ।
सृञ्जयैस्सह राजेन्द्र देवासुररणोपमम् ॥ १

नरौघाश्च गजौघाश्च वाजिनश्च सहस्रशः ।
सादिनश्च पराक्रान्तास् समाजग्मुः परस्परम् ॥ २

नागानां भीमरूपाणां द्रवतां निस्स्वनो महान् ।
अश्रूयत यथा काले जलदानां नभस्स्थले ॥ ३

नागैरभ्याहताः केचित् सरथा रथिनो भृशम् ।
व्यद्रवन्त रणे भीता द्राव्यमाणा मदोत्कटैः ॥ ४

हयौघान् पादरक्षांश्च रथिनस्तत्र शिक्षिताः ।

शरैस्सम्प्रेषयामासुः परलोकाय भारत ॥ ।

सादिनश्शिक्षिता राजन् परिवार्य महारथान् ।
विचरन्तो रणे घ्नन्त् प्रासशक्त्यादिभिस्तदा ॥ ६

धन्विनः पुरुषाः केचित् सन्निवार्य महारथम् ।
एकं बहव आसाद्य प्रैषयन् वै यमक्षयम् ॥ ७

नागं रथगताश्चान्ये परिवार्य महारथाः ।
सोत्तरायुधिनं जघ्नुर् द्रवमाणा महारथाः ॥ ८

तथा वरूथिनः क्रुद्धा विकिरन्तश्शरान् बहून् ।
नागाञ् जघ्नुर्महाराज परिवार्य समन्ततः ॥ ९

नागो नागमभिद्रुत्य रथी च रथिनं रणे ।
शक्तितोमरनाराचैर् निर्जघ्ने तत्र तत्र ह ॥ १०

पादातानवमर्दन्तो रथवारणवाजिनः ।
रथमध्ये व्यदृश्यन्त कुर्वन्तो महदाकुलम् ॥ ११

हयाश्च पर्यधावन्त [1]चामरैरुपशोभिताः ।
हंसा हिमवतः प्रस्थे पिबन्त इव मेदिनीम् ॥ १२

तेषां तु वाजिनां भूमिः खुरैश्चित्रा विशां पते ।
अशोभत यथा नारी करजैः क्षतविक्षता ॥ १३

वाजिनां खुरशब्देन रथनेमिस्वनेन च ।

1. ख-घ—चामरापीडधारिणः

पत्तीनां पदशब्देन नागानां बृंहितेन च ॥ १४

वादित्राणां च घोषेण शङ्खानां निस्स्वनेन च ।
अभवन्नादिता भूमिर् निर्घातैरिव भारत ॥ १५

धनुषां कूजमानानां निस्त्रिंशानां च दीप्यताम् ।
कवचानां प्रभाभिश्च न प्राज्ञायत किञ्चन ॥ १६

बहवो बाहवश्छिन्ना नागराजकरोपमाः ।
उद्वेष्टन्ति विचेष्टन्ति वेगं कुर्वन्ति दारुणम् ॥ १७

शिरसां च महाराज पततां वसुधातले ।
च्युतानामिव तालेभ्यः फलानां श्रूयते स्वनः ॥ १८

शिरोभिः पतितैर्भाति रुधिरार्द्रैर्वसुन्धरा ।
तपनीयनिभैः काले नलिनैरिव भारत ॥ १९

उद्वृत्तनयनैस्तैस्तु गतसत्त्वैर्मही तदा ।
व्यभ्राजत महाराज पुण्डरीकैरिवावृता ॥ २०

बाहुभिश्चन्दनादिग्धैस् सकेयूरैर्महाधनैः ।
पतितैर्भाति राजेन्द्र मही शक्रध्वजैरिव ॥ २१

ऊरुभिश्च नरेन्द्राणां विनिकृत्तैर्महाहवे ।
हस्तिहस्तोपमैरन्यैस् संवृतं तद्रणाङ्गणम् ॥ २२

कबन्धशतसङ्कीर्णं छत्रचामरशोभितम् ।
सेनावनं तच्छुशुभे वनं पुष्पचितं यथा ॥ २३

तत्र योधा महाराज विचरन्तो ह्यभीतवत् ।
दृश्यन्ते रुधिरार्द्राङ्गाः पुष्पिता इव किंशुकाः ॥ २४

मातङ्गाश्चाप्यदृश्यन्त शरतोमरपीडिताः ।
पतन्तस्तत्र तत्रैव श्वेताभ्रसदृशा रणे ॥ २५

गजानीकं महाराज वध्यमानं महारथैः ।
[1]व्यकीर्यत दिशस्सर्वा वाततुन्ना घना इव ॥ २६

ते गजा गिरिसङ्काशाः पेतुरुर्व्यां समन्ततः ।
वज्रभुग्ना इव बभुः पर्वता युगपर्यये ॥ २७

हयानां सादिभिस्सार्धं पतितानां महीतले ।
राशयः प्रत्यदृश्यन्त गिरिमात्रास्ततस्ततः ॥ २८

सञ्जज्ञे रणभूमौ तु परलोकवहा नदी ।
शोणितोदा रथावर्ता ध्वजवृक्षास्थिशर्करा ॥ २९

भुजनक्रा धनुस्स्रोता हस्तिशैला हयोरगा ।
मेदोमज्जाकर्दमिनी छत्रहंसोपशोभिता ॥ ३०

कवचोष्णीषसञ्छन्ना पताकारुचिरद्रुमा ।
चक्रनक्रावलीजुष्टा त्रिवेणूरगसंवृता ॥ ३१

शूराणां हर्षजननी भीरूणां भयवर्धनी ।
प्रावर्तत नदी रौद्रा कुरुसृञ्जयसङ्कुले ॥ ३२

---

1. घ—अर्धचतुष्टयं नास्ति

तां नदीं पितृलोकाय वहन्तीमतिभैरवाम् ।
तेरुर्वाहननौभिस्ते शूराः परिघबाहवः ॥ ३३

वर्तमाने तथा युद्धे निर्मर्यादे विशां पते ।
चतुरङ्गक्षये घोरे युद्धे देवासुरोपमे ॥ ३४

आक्रोशन् बान्धवांश्चान्ये भयार्तानां निवर्तने ॥ ३४॥

निर्मर्यादे तथा युद्धे वर्तमाने भयानके ।
अर्जुनो भीमसेनश्च मोहयांचक्रतुः परान् ॥ ३५॥

सा वध्यमाना महती सेना तव जनाधिप ।
अमुह्यन् तत्र तत्रैव योषिन्मदवशादिव ॥ ३६॥

मोहयित्वा च तां सेनां भीमसेनधनञ्जयौ ।
दध्मतुर्वारिजौ तत्र सिंहनादं च नेदतुः ॥ ३७॥

श्रुत्वैव च महाशब्दं धृष्टद्युम्नशिखण्डिनौ ।
धर्मराजं पुरस्कृत्य मद्रराजमभिद्रुतौ ॥ ३८॥

तत्राश्चर्यमपश्याम घोररूपं विशां पते ।
शल्येन सङ्गताश्शूरा यद्युध्यन्त भागशः ॥ ३९॥

माद्रीपुत्रौ सरभसौ कृतास्त्रौ युद्धदुर्मदौ ।
अभीतौ त्वरया युक्तौ जिगीषन्तौ बलं तव ॥ ४०॥

ततोऽभ्यवर्तत बलं तावकं भरतर्षभ ॥ ४१

ततश्शरप्रवृद्धैश्च पाण्डवैर्जितकाशिभिः ।

वध्यमाना चमूस्सा तु पुत्राणां प्रेक्षतां तव ॥ ४२

भेजे दश दिशो राजन् प्रणुन्ना दृढविक्रमैः ॥ ४२॥

हाहाकारो महाञ्जज्ञे योधानां तव भारत ॥ ४३

तिष्ठ तिष्ठेति वागासीद् द्रावितानां महात्मभिः ।
क्षत्रियाणां तदाऽन्योन्यं सङ्ग्रामे जयमिच्छताम् ॥ ४४

आद्रवन्ते च भग्नास्ते पाण्डवैस्तव सैनिकाः ।
त्यक्त्वा युद्धे प्रियान् पुत्रान् भ्रातृनपि पितामहान् ॥ ४५

मातुलान् भागिनेयांश्च तथा सम्वन्धिबान्धवान् ।
हया द्विपाश्च रथिनो भिया जग्मुस्समन्ततः ॥ ४६

आत्मत्राणकृतोत्साहास् तावका भरतर्षभ ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

॥ ७४ ॥ शल्यवधपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[अस्मिन्नध्याये ४६॥ श्लोकाः]

## ॥ नवमोऽध्यायः ॥



नकुलेन कर्णपुत्राणां त्रयाणां मारणम् ॥

सञ्जयः—

तत् प्रभग्नं बलं दृष्ट्वा [1]तावका भरतर्षभ ।
[2]मद्रराजं पुरस्कृत्य जग्मुर्युद्धाय भारत ॥ १

मद्रराजो महाराज सारथिं वाक्यमब्रवीत् ॥ १॥

शल्यः—

एष तिष्ठति वै राजा पाण्डुपुत्रो युधिष्ठिरः ।
छत्रेण ध्रियमाणेन पाण्डुरेण विराजता ॥ २॥

तत्र मां प्रापय क्षिप्रं सारथे पश्य मे बलम् ।
न समर्थास्तु मे पार्थास् स्थातुमद्याग्रतो युधि ॥ ३॥

सञ्जयः—

एवमुक्तस्ततः प्रायान्मद्रराजस्य सारथिः ।
यत्र राजा धर्मपुत्रस् सत्यसन्धो युधिष्ठिरः ॥ ४॥

आपतत्तच्च सहसा पाण्डवानां महद्बलम् ।
दधारैको रणे शल्यो वेलेवोद्वृत्तमर्णवम् ॥ ५॥

---

1. क-घ—मद्रराजः प्रतापवान्
उवाच सारथिं तूर्णं चोदयाश्वान् मनोजवान् । [अधिकः पाठः]
2. क-ख-घ—इदमर्धद्वयं नास्ति

पाण्डवानां बलौघस्तु शल्यमासाद्य मारिष ।
व्यतिष्ठत तदा युद्धे सिन्धोर्वेग इवाचलम् ॥ ६॥

मद्रराजं तु समरे दृष्ट्वा युद्धाय विष्ठितम् ।
कुरवस्सन्न्यवर्तन्त मृत्युं कृत्वा निवर्तनम् ॥ ७॥

तेषु राजन्निवृत्तेषु व्यूढानीकेषु भागशः ।
प्रावर्तत महारौद्रस् सङ्ग्रामश्शोणितोदकः ॥ ८॥

सङ्गतश्चित्रसेनेन नकुलो युद्धदुर्मदः ॥ ९

तौ परस्परमासाद्य चित्रकार्मुकयोधिनौ ।
मेघाविव यथोद्वृत्तौ दक्षिणोत्तरवर्षिणौ ॥ १०

शरतोयैस्सिषिचतुस् तौ परस्परमाहवे ॥ १०॥

नान्तरं तत्र पश्यामः पाण्डवस्येतरस्य वा ॥ ११

उभौ कृतास्त्रौ बलिनौ रथचर्याविशारदौ ।
परस्परवधे युक्तौ छिद्रान्वेषणतत्परौ ॥ १२

चित्रसेनस्तु भल्लेन पीतेन निशितेन च ।
नकुलस्य महाराज मुष्टिदेशेऽच्छिनद्धनुः ॥ १३

अथैनं छिन्नधन्वानं रुक्मपुङ्खैश्शिलाशितैः ।
त्रिभिश्शरैरसम्भ्रान्तो ललाटे वै समर्पयत् ॥ १४

हयांश्चास्य शरैस्तीक्ष्णैः प्रेषयामास मृत्यवे ।
तथा ध्वजं सारथिं च त्रिभिस्त्रिभिरताडयत् ॥ १५

स शत्रुभुजनिर्मुक्तैर् ललाटस्थैस्त्रिभिश्शरैः ।
नकुलश्शुशुभे राजंस् त्रिशृङ्ग इव पर्वतः ॥ १६

सञ्छिन्नधन्वा विरथः खड्गमादाय चर्म च ।
रथादवातरद्वीरश् शैलाग्रादिव केसरी ॥ १७

पद्भ्यामापततस्तस्य शरवृष्टिमवासृजन् ।
नकुलोऽप्यग्रहीत् तां वै चर्मणा लघुविक्रमः ॥ १८

[1]चित्रसेनरथं प्राप्य चित्रयोधी जितश्रमः ।
आरुरोह महाबाहुस् सर्वसैन्यस्य पश्यतः ॥ १९

सकुण्डलं समकुटं सुनासं स्वायतेक्षणम् ।
चित्रसेनशिरः कायाद् अपाहरत पाण्डवः ॥ २०
स पपात रथोपस्थाद् दिवाकरसमप्रभः ॥ २०॥

चित्रसेनशिरस्तत् तु दृष्ट्वा तत्र महारथाः ।
सिंहनादस्वनांश्चक्रुस् साधुवादांश्च पुष्कलान् ॥ २१॥

विशस्तं भ्रातरं दृष्ट्वा कर्णपुत्रौ महारथौ ।
सुशर्मा सत्यसेनश्च मुञ्चन्तौ निशिताञ् शरान् ॥ २२॥

ततोऽभ्यधावतां तूर्णं पाण्डवं रथिनां वरम् ।
जिघांसन्तौ यथानागं व्याघ्रौ राजन् महावने ॥ २३॥

तावभ्यवर्षतां तीक्ष्णैर् द्वावप्येनं महारथौ ।

1. घ—इदमर्धं नास्ति

शरौघान् सम्यगस्यन्तौ जीमूतौ सलिलं यथा ॥ २४॥
स शरैस्सर्वतो विद्धः प्रहृष्ट इव पाण्डवः ।
अन्यत् कार्मुकमादाय रथमारुह्य वीर्यवान् ॥ २५॥
अतिष्ठत रणे वीरः क्रुद्धरूप इवान्तकः ॥ २६
तौ तस्य भ्रातरौ वीरौ शरैस्सन्नतपर्वभिः ।
रथं विशकलीकर्तुं समारब्धौ विशां पते ॥ २७
ततः प्रसह्य नकुलश् चतुर्भिश्चतुरो हयान् ।
जघान निशितैर्बाणैस् सत्यसेनस्य संयुगे ॥ २८
ततस्सन्धाय नाराचं रुक्मपुङ्खं शिलाशितम् ।
धनुश्चिच्छेद राजेन्द्र सत्यसेनस्य पाण्डवः ॥ २९
अथान्यं रथमास्थाय धनुरादाय चापरम् ।
सत्यसेनस्सुशर्मा च पाण्डवं पर्यधावताम् ॥ ३०
अविध्यत् तावसम्भ्रान्तौ माद्रीपुत्रश्च वीर्यवान् ।
द्वाभ्यां द्वाभ्यां महाराज शराभ्यां रणमूर्धनि ॥ ३१
सुशर्मा तु ततः क्रुद्धः पाण्डवस्य महद्धनुः ।
चिच्छेद प्रहसन् युद्धे क्षुरप्रेण महारथः ॥ ३२
अथान्यद्धनुरादाय नकुलः क्रोधमूर्च्छितः ।
[1]सुशर्माणं त्रिभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे ॥ ३३

1. ख—इदमर्धं नास्ति

सत्यसेनस्य च धनुर् हस्तावापं च मारिष ।
[1]चिच्छेद तरसा युद्धे तत उच्चुक्रुशुर्जनाः ॥ ३४

अथान्यद्धनुरादाय वेगघ्नं भारसाधनम् ।
शरैस्सञ्छादयामास समन्तात् पाण्डुनन्दनम् ॥ ३५

सन्निवार्य तु तान् बाणान् नकुलः परवीरहा ।
सत्यसेनसुशर्माणौ द्वाभ्यां द्वाभ्यामविध्यत ॥ ३६

तावेनं प्रत्यविध्येतां पृथक् पृथगजिह्मगैः ।
सारथिं चास्य राजेन्द्र शरैर्विव्यथतुश्शितैः ॥ ३७

सत्यसेनो रथेषां तु नकुलस्य धनुस्तदा ।
पृथक् शराभ्यां चिच्छेद कृतहस्तः प्रतापवान् ॥ ३८

स रथेऽतिरथस्तिष्ठन् रथशक्तिं परामृशन् ।
स्वर्णदण्डामकुण्ठाग्रां तैलधौतां सुनिर्मलाम् ॥ ३९

लेलिहानां महाबाहो नागकन्यां महाविषाम् ।
समुद्यम्य प्रचिक्षेप सत्यसेनस्य संयुगे ॥ ४०

सा तस्य हृदयं सङ्ख्ये बिभेद शतधा नृप ।
स पपात रथाद्भूमिं गतसत्त्वोऽल्पचेतनः ॥ ४१

भ्रातरं निहतं दृष्ट्वा सुशर्मा क्रोधमूर्च्छितः ।
अभ्यवर्षच्छरैस्तूर्णं पदातिं पाण्डुनन्दनम् ॥ ४२

---

1. ख—अर्धद्वयं नास्ति

नकुलं विरथं दृष्ट्वा द्रौपदेयो महारथः ।
सुतसोमोऽभिदुद्राव परीप्सन् पितरं रणे ॥ ४३

ततोऽधिरुह्य नकुलस् सुतसोमस्य तं रथम् ।
शुशुभे भरतश्रेष्ठो गिरिस्थ इव केसरी ॥ ४४

सोऽन्यत् कार्मुकमादाय सुशर्माणमयोधयत् ॥ ४४॥

तावुभौ शरवर्षाभ्यां समासाद्य परस्परम् ।
परस्परवधे यत्नं चक्रतुस्सुमहारथौ ॥ ४५॥

सुशर्मा तु सुसङ्क्रुद्धः पाण्डवं विशिखैस्त्रिभिः ।
सुतसोमं च विंशत्या बाह्वोरुरसि चार्पयत् ॥ ४६॥

ततः क्रुद्धो महाराज नकुलः परवीरहा ।
शरैस्तस्य दिशस्सर्वाश् छादयामास वीर्यवान् ॥ ४७॥

ततो गृहीत्वा तीक्ष्णाग्रम् अर्धचन्द्रं सुतेजनम् ।
[1]सवेगयुक्तं चिक्षेप कर्णपुत्रस्य संयुगे ॥ ४८॥

तस्य तेन शिरः कायाज् जहार नृपसत्तम ।
पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ॥ ४९॥

स हतः प्रापतद्राजन् नकुलेन महात्मना ।
नदीवेगाद्यथा भग्नस् तीरजः पादपो महान् ॥ ५०॥

कर्णपुत्रवधं दृष्ट्वा नकुलस्य च विक्रमम् ।

---

1. घ-ख—आकर्णापूर्ण

प्रदुद्राव भयात् सेना तावकी भरतर्षभ ॥　　　५१॥
तां तु सेनां महाराज मद्रराजः प्रतापवान् ।
अपालयद्रणे शूरस् सेनापतिररिन्दमः ॥　　　५२॥
विभीस्तस्थौ महाराज व्यवस्थाप्य च वाहिनीम् ॥　　　५३
सिंहनादं भृशं कृत्वा धनुश्शब्दं च दारुणम् ।
तावकास्समरे राजन् रक्षिता दृढधन्वना ॥　　　५४
प्रत्युद्ययुररीन् सर्वान् समन्ताद्विगतव्यथाः ।
मद्रराजं महेष्वासं परिवार्य समन्ततः ॥　　　५५
स्थिता राजन् महासेना योद्धुकामा समन्ततः ।
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ॥　　　५६
युधिष्ठिरं पुरस्कृत्य ह्रीनिषेधमरिन्दमम् ।
परिवार्य [1]महेष्वासास् सिंहनादं प्रचक्रिरे ॥　　　५७
बाणशङ्खरवांश्चोग्रान् क्ष्वेलांश्च विविधान् दधुः ॥　　　५७॥
तथैव तावकास्सर्वे मद्राधिपतिमञ्जसा ।
परिवार्य सुसंरब्धाः पुनर्युद्धमरोचयन् ॥　　　५८॥
ततः प्रववृते युद्धं भीरूणां भयवर्धनम् ।
तावकानां परेषां च मृत्युं कृत्वा निवर्तनम् ॥　　　५९॥
यथा दैवासुरं युद्धं पूर्वमासीद्विशां पते ।
अभीतानां तदा राजन् यमराष्ट्रविवर्धनम् ॥　　　६०॥

---

1. ख-घ—रणे वीराः

ततः कपिध्वजो राजन् हत्वा संशप्तकान् रणे ।
अभ्यद्रवत तां सेनां कौरवीं पाण्डुनन्दनः ॥ ६१॥

तथैव पाण्डवाश्शेषाः धृष्टद्युम्नपुरोगमाः ।
अभ्यधावन्त तां सेनां विसृजन्तश्शिताञ् शरान् ॥ ६२॥

पाण्डवैरभिकीर्णानां सम्मोहस्समजायत ।
न विजानन्त्यनीकानि दिशो वा प्रदिशस्तथा ॥ ६३॥

आपूर्यमाणानि शितैश् शरैः पाण्डवचोदितैः ॥ ६४

हतप्रवीरा विध्वस्ता कीर्यमाणास्समन्ततः ।
कौरव्याऽवध्यत चमूः पाण्डुपुत्रैर्महारथैः ॥ ६५

तथैव पाण्डवी सेना शरै राजन् समन्ततः ।
रणेऽहन्यत पुत्रैस्ते शतशोऽथ सहस्रशः ॥ ६६

ते सेने भृशसन्तप्ते वध्यमाने परस्परम् ।
व्याकुले समपद्येतां वर्षासु सरिताविव ॥ ६७

आविवेश ततस्तीव्रं तावकानां महद्भयम् ।
पाण्डवानां च राजेन्द्र तथा भूते महाहवे ॥ ६८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि नवमोऽध्यायः ॥ ९ ॥
॥ ७४ ॥ शल्यवधपर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये ६८ श्लोकाः ]

## ॥ दशमोऽध्यायः ॥



सङ्कुलयुद्धम् ॥



सञ्जयः—

तस्मिन् विलुलिते सैन्ये वध्यमाने परस्परम् ।
द्रवमाणेषु सैन्येषु विनदत्सु च दन्तिषु ॥ १

कूजतां स्तनतां चापि पदातीनां महाहवे ।
विद्रुतेषु महाराज हयेषु बहुधा तदा ॥ २

सङ्क्षये दारुणे जाते सङ्करे सर्वदेहिनाम् ।
नानाशस्त्रसमावापे व्यतिषक्तरथद्विपे ॥ ३

हर्षणे युद्धशौण्डानां भीरूणां भयवर्धने ।
[1]गाहमानेषु योधेषु परस्परवधैषिषु ॥ ४

प्राणादाने महाघोरे वर्तमाने दुरोदरे ।
सङ्ग्रामे घोररूपे तु यमराष्ट्रविवर्धने ॥ ५

पाण्डवास्तावकं सैन्यं व्यधमन् निशितैश्शरैः ॥ ५॥
तथैव तावका योधा जघ्नुः पाण्डवसैनिकान् ॥ ६

तस्मिंस्तथा वर्तमाने युद्धे भीरुभयङ्करे ।
पूर्वाह्णे चापि सम्प्राप्ते भास्करोदयनं प्रति ॥ ७

---

1. ख—इदमर्धत्रयं नास्ति

लब्धलक्षाः परे राजन् रक्षिताश्च महात्मभिः ।
अयोधयंस्तव बलं मृत्युं कृत्वा निवर्तनम् ॥ ८

बलिभिः पाण्डवैर्दृप्तैर् लब्धलक्षैः प्रहारिभिः ।
कौरव्यसीदत्पृतना गौरीवाग्निसमाकुला ॥ ९

तां दृष्ट्वा सीदतीं सेनां पङ्कगामिव दुर्बलाम् ।
उज्जिहीर्षुस्तदा शल्यः प्रदुद्राव चमूपतिः ॥ १०

मद्रराजस्तु सङ्क्रुद्धो गृहीत्वा धनुरुत्तमम् ।
अभ्यद्रवत सङ्ग्रामे पाण्डवानाततायिनः ॥ ११

पाण्डवाश्च महाराज समरे जितकाशिनः ।
मद्रराजं समासाद्य विव्यधुर्निशितैश्शरैः ॥ १२

ततश्शरशतैस्तीक्ष्णैर् मद्रराजो महारथः ।
अर्दयामास तां सेनां धर्मराजस्य पश्यतः ॥ १३

प्रादुरासन् निमित्तानि घोररूपाण्यनेकशः ।
चचाल शब्दं कुर्वाणा मही चापि सपर्वता ॥ १४

[1]सदण्डशूला दीप्ताग्राश् शीर्यमाणास्समन्ततः ।
उल्का भूमौ दिवः पेतुर् आहत्य रविमण्डलम् ॥ १५

मृगाश्च महिषाश्चैव पक्षिणश्च विशां पते ।
अपसव्यं तदा चक्रुस् सेनां ते बहुशो नृप ॥ १६

---

1. ब—इदमर्धं नास्ति

ततस्तु युद्धमत्युग्रम् अभवन् सङ्कचारिणाम् ॥ १६॥

तथा सर्वाण्यनीकानि सन्निपत्य जनाधिप ।
अभ्ययुः कौरवा राजन् पाण्डवानामनीकिनीम् ॥ १७॥

शल्यस्तु शरवर्षेण वर्षन्निव सहस्रदृक् ।
अभ्यवर्षददीनात्मा कुन्तीपुत्रं युधिष्ठिरम् ॥ १८॥

भीमसेनं शरैश्चापि रुक्मपुङ्खैश्शिलाशितैः ।
द्रौपदेयांस्ततस्सर्वान् माद्रीपुत्रौ च पाण्डवौ ॥ १९॥

धृष्टद्युम्नं स शैनेयं शिखण्डिनमथाहवे ।
एकैकं दशभिर्बाणैर् विव्याध च महाबलः ॥ २०॥

ततोऽसृजद्बाणवर्षं घर्मान्ते मघवानिव ॥ २१

ततः प्रभद्रका राजन् सोमकाश्च सहस्रशः ।
पतिताः पात्यमानाश्च दृश्यन्ते तस्य सायकैः ॥ २२

भ्रमराणामिव व्राताश् शलभानामिव व्रजाः ।
ह्रादिन्य इव मेघेभ्यश् शल्यस्य न्यपतञ् शराः ॥ २३

द्विरदास्तुरगाश्चार्ताः पत्तयो रथिनस्तथा ।
शल्यस्य बाणैर्न्यपतन् बभ्रमुर्व्यनदंस्तथा ॥ २४

आविष्ट इव मद्रेशो मन्युना पौरुषेण च ।
प्रोत्सादयदरीन् सङ्ख्ये कालसृष्ट इवान्तकः ॥ २५

विनर्दमानो मद्रेशो मेघह्रादो महाबलः ॥ २५॥

सा वध्यमाना शल्येन पाण्डवानामनीकिनी ।
अजातशत्रुं कौन्तेयम् अभ्यधावद्युधिष्ठिरम् ॥ २६॥

तां समर्प्य ततस्सङ्क्रुद्धो लघुहस्तश्शितैश्शरैः ।
शरवर्षेण महता युधिष्ठिरमपीडयत् ॥ २७॥

तमापतन्तं जात्यश्वैः क्रुद्धो राजा युधिष्ठिरः ।
अवारयच्छरैस्तीक्ष्णैर् मत्तद्विपमिवाङ्कुशैः ॥ २८॥

तस्य शल्यश्शरं घोरं मुमोचाशीविषोपमम् ।
सोऽतिविद्धो महात्मा वै वेगेनाभ्यपतच्च गाम् ॥ २९॥

ततो वृकोदरः क्रुद्धश् शल्यं विव्याध सप्तभिः ।
पञ्चभिस्सहदेवस्तु नकुलो [1]दशभिश्शरैः ॥ ३०॥

द्रौपदेयाश्च शत्रुघ्नं शूरमार्तायनिं शरैः ।
अभ्यवर्षन् महामेघा महीधरमिवोन्नतम् ॥ ३१॥

ततो दृष्ट्वा विनर्दन्तं [2]शल्यं पार्थैस्समन्ततः ।
कृतवर्मा कृपश्चैव सङ्क्रुद्धावभ्यधावताम् ॥ ३२॥

उलूकश्चापि कौरव्यश् शकुनिश्चापि सौबलः ।
स्मयमानश्च शनकैर् अश्वत्थामा [3]महाबलः ॥ ३३॥

---

1. ख-ब—नवभि
2. ख-ब—शल्यमाहवशोभिनम्
3. ख-ब—रथोत्तमः

तव पुत्राश्च सबला जुगुपुश्शल्यमाहवे ॥ ३४

भीमसेनं त्रिभिर्विद्ध्वा कृतवर्मा शिलीमुखैः ।
बाणवर्षेण महता क्रुद्धरूपमवारयत् ॥ ३५

धृष्टद्युम्नं कृपः क्रुद्धो बाणवर्षै[1]रवर्षयत् ।
द्रौपदेयांश्च शकुनिर् यमौ च द्रौणिरभ्ययात् ॥ ३६

दुर्योधनो युधां श्रेष्ठो ह्याहवे केशवार्जुनौ ।
समभ्यगादुग्रतेजाश् शरैश्चाभ्यहनद्युधि ॥ ३७

एवं द्वन्द्वशतान्यासंस् त्वदीयानां परैस्सह ।
घोररूपाणि चित्राणि तत्र तत्र विशां पते ॥ ३८

[2]ऋश्यवर्णाञ् जघानाश्वान् भोजो भीमस्य संयुगे ॥ ३८॥

सोऽवतीर्य रथोपस्थाद्धताश्वः पाण्डुनन्दनः ।
कालो दण्डमिवोद्यम्य गदापाणिरयुध्यत ॥ ३९॥

प्रमुखे सहदेवस्य जघानाश्वांस्तु मद्रराट् ।
ततश्शल्यस्य तनयं सहदेवोऽसिनाऽवधीत् ॥ ४०॥

गौतमः पुनराचार्यो धृष्टद्युम्नमयोधयत् ।
असम्भ्रान्तो ह्यसम्भ्रान्तं यत्नवान् यत्नवत्तरम् ॥ ४१॥

द्रौपदेयांस्तथा वीरान् एकैकं दशभिश्शरैः ।
अविध्यदाचार्यसुतो नातिक्रुद्धस्स्मयन्निव ॥ ४२॥

---

1. ख-घ—रपीडयत्  2. क—अर्धलयं नास्ति

[1]शल्योऽपि राजन् सङ्क्रुद्धो निघ्नन् पाण्डवसोमकान् ।
पुनरेव शितैर्बाणैर् युधिष्ठिरमपीडयत् ॥ ४३॥

तस्य भीमो रणे क्रुद्धस् सन्दष्टदशनच्छदः ।
विनाशायाभिसन्धाय गदामादत्त वीर्यवान् ॥ ४४॥

यमदण्डप्रतीकाशां कालरात्रिमिवोद्यताम् ।
गजवाजिमनुष्याणां प्राणान्तकरणीमपि ॥ ४५॥

हेमपट्टपरिक्षिप्ताम् उल्कामापतितामिव ।
[2]शैक्यां व्यालीमिवात्युग्रां वज्र[3]कल्पामयस्मयीम् ॥ ४६॥

चन्दनागरुपङ्काक्तां प्रमदामीप्सितामिव ।
वसामेदोऽसृगादिग्धां जिह्वां वैवस्वतीमिव ॥ ४७॥

बद्धघण्टारवयुतां वासवीमशनीमिव ।
निर्मुक्ताशीविषाकारां पृक्तां गजमदैरपि ॥ ४८॥

त्रासनीं परसैन्यानां स्वसैन्यपरिहर्षिणीम् ।
मनुष्यलोके विख्यातां गिरिशृङ्गविदारिणीम् ॥ ४९॥

---

1. अ-क—भोजश्च भीमसेनस्य जघानाश्वान् महाहवे ।
सोऽवतीर्य रथात् तूर्णं हताश्वः पाण्डुनन्दनः ॥
कालो दण्डमिवोद्यम्य गदां क्रुद्धो महाबलः ।
पोथयामास तुरगान् रथं च कृतवर्मणः ॥
कृतवर्मा त्ववप्लुत्य रथात् तस्मादपाक्रमत् ।
[अधिकः पाठः]

2. क—दुष्टां

3. क-ख—कल्पामयोमयीम्

यया कैलासशिखरे महेश्वरसखं बली ।
आह्वयामास कौन्तेयस् सङ्क्रुद्धमलकापतिम् ॥ ५०॥

यया मायाविनो दृप्तान् सुबहून् धनदालये ।
जघान गुह्यकान् क्रुद्धः [1]कल्हारार्थे महाबलः ॥ ५१॥

निवार्यमाणो बहुभिर् द्रौपद्याः प्रियमास्थितः ॥ ५२

तां वज्रमणिरत्नाङ्काम् अष्टाश्रां वज्रगौरवाम् ।
समुद्यम्य महाबाहुश् [2]शल्यमभ्यद्रवद्रणे ॥ ५३

गदया युद्धकुशलस् तया दारुणनादया ।
पोथयामास शल्यस्य चतुरोऽश्वान् महाजवान् ॥ ५४

ततश्शल्यो रणे क्रुद्धः पीने वक्षसि तोमरम् ।
[3]चिक्षेप भीमसेनस्य सोऽस्रवच्छोणितं बहु ॥ ५५

तमेवादाय भीमस्तु ततः कोपसमन्वितः ।
यन्तारं मद्रराजस्य निर्बिभेद तदा हृदि ॥ ५६

स भिन्नवर्मा रुधिरं वमन् वित्रस्तमानसः ।
पपाताभिमुखो वीरो मद्रराजस्त्वपाक्रमन् ॥ ५७

कृतप्रतिकृतं दृष्ट्वा शल्यो विस्मितमानसः ।

---

1. क—जघान यक्षान् सङ्क्रुद्धो मन्दारार्थे; ख-घ—मन्दारार्थे
2. ख-घ—शल्यस्याभिमुखोऽभवत् ।
3. ख-घ—निजघान नदन् वीरो वर्म भित्त्वा च सोऽत्यगात् ।
वृकोदरस्त्वसम्भ्रान्तस्तमेवोद्धृत्य तोमरम् ॥ [पाठान्तरम्]

गदामाश्रित्य धीरात्मा प्रत्यमित्रमुदैक्षत ॥ ५८

ततस्सुमनसः पार्था भीमसेनमपूजयन् ।
तद्दृष्ट्वा कर्म सङ्ग्रामे घोरमक्लिष्टकर्मणः ॥ ५९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि दशमोऽध्यायः ॥ १० ॥
॥ ७४ ॥ शल्यवधपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये ५९ श्लोकाः]

---

## ॥ एकादशोऽध्यायः ॥

---

शल्यभीमयोर्गदायुद्धम् ॥

---

सञ्जयः—

पतितं प्रेक्ष्य यन्तारं शल्यश्शैक्यायसीं गदाम् ।
आदाय तरसा राजंस् तस्थौ गिरिरिवाचलः ॥ १

तं दीप्तमिव कालाग्निं पाशहस्तमिवान्तकम् ।
सश्टृङ्गमिव कैलासं सवज्रमिव वासवम् ॥ २

सशूलमिव[1] हि त्र्यक्षं [2]सचक्रमिव चक्रिणम् ।
सशक्तिमिव सेनान्यं वने मत्तमिव द्विपम् ॥ ३

जवेनाभ्यद्रवद्भीमं प्रगृह्य महतीं गदाम् ॥ ३॥

---

1. क-ख-घ—हर्यक्षं 2. ख—अयं पादोऽनन्तरश्च न स्तः

ततश्शङ्खप्रणादश्च तूर्याणां च सहस्रशः ।
सिंहनादश्च सञ्जज्ञे शूराणां हर्षवर्धनः ॥ ४॥

प्रेक्षन्ते सर्वतस्ते हि योधा मत्ताविव द्विपौ ।
तावकाश्च परे चैव साधु साध्वित्यपूजयन् ॥ ५॥

न हि मद्राधिपादन्यो रामाद्वा यदुनन्दनात् ।
सोढुमुत्सहते वेगं भीमसेनस्य संयुगे ॥ ६॥

तथा मद्राधिपस्यापि गदावेगं महात्मनः ।
सोढुमुत्सहते नान्यः पुमान् युधि वृकोदरात् ॥ ७॥

[1]गोवृषाविव नर्दन्तौ मण्डलानि विचेरतुः ।
[2]आवल्गन्तौ गदाहस्तौ मद्रराजवृकोदरौ ॥ ८॥

मण्डलावर्तमार्गेषु गदाविहरणेषु च ।
निर्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः ॥ ९॥

तप्तहेममयैश्शुभ्रैर् बभूव भयवर्धिनी ।
अग्निज्वालैरिवाविद्धा पट्टैश्शल्यस्य सा गदा ॥ १०॥

तथैव चरतो मार्गान् मण्डलेषु महात्मनः ।
विद्युदभ्रप्रतीकाशा भीमस्य शुशुभे गदा ॥ ११॥

[3]ताडिता मद्रराजस्य भीमस्य गदया गदा ।

---

1. ख-घ—तौ वृषाविव गर्जन्तौ
2. घ—अर्धषट्कं नास्ति क—आवल्गितगदा ख—आवर्तित
3. क—अर्धद्वयं नास्ति

दीप्यमानेव खे राजन् ससृजे पावकार्चिषः ॥ १२॥

तथा भीमेन शल्यस्य ताडिता गदया गदा ।
अङ्गारवर्षं मुमुचे तदद्भुतमिवाभवत् ॥ १३॥

दन्तैरिव महानागौ शृङ्गैरिव महावृषौ ।
तौ विरेजतुरन्योन्यं गदाभ्यां सुपरिक्षतौ ॥ १४॥

तौ गदाभिहतैर्गात्रैः क्षणेन रुधिरोक्षितौ ।
प्रेक्षणीयतरावास्तां पुष्पिताविव किंशुकौ ॥ १५॥

गदया मद्रराजेन सव्यं दक्षिणमाहतः ।
भीमसेनो महाबाहुर् न चचालाचलो यथा ॥ १६॥

तथा भीमगदावेगैस् ताड्यमानो मुहुर्मुहुः ।
शल्यो न विव्यथे धीमान् दन्तिनेव हतो गिरिः ॥ १७॥

शुश्रुवे दिक्षु सर्वासु तयोः पुरुषसिंहयोः ।
गदानिपातसंह्रादो वज्रयोरिव निस्वनः ॥ १८॥

निवृत्य तु महावीर्यौ समुच्छ्रितगदावुभौ ।
पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः ॥ १९॥

[1]तदाऽभ्येत्य पदान्यष्टौ सन्निपातोऽभवत् तयोः ।
उद्यम्य बाहुदण्डाभ्याम् अतिमानुषकर्मणोः ॥ २०॥

प्रार्थयानौ तदाऽन्योन्यं मण्डलानि विचेरतुः ।

1. ख—अर्धद्वयं नास्ति

क्रियाविशेषं कृतिनौ दर्शयामासतुस्तदा ॥ २१॥

अभ्युद्यतगदौ वीरौ सशृङ्गाविव पर्वतौ ।
तावाजघ्नतुरन्योन्यं यथा भूमिचलेऽचलौ ॥ २२॥

तौ परस्परसंवेगाद् गदाभ्यां च भृशाहतौ ।
युगपत् पेततुर्वीरावुभाविन्द्रध्वजाविव ॥ २३॥

उभयोस्सेनयोश्शब्दस् तदा हाहाकृतोऽभवत् ।
भृशं मर्मण्यभिहतावुभावास्तां सुविह्वलौ ॥ २४॥

ततस्स्वरथमारोप्य मद्राणामधिपं रणे ।
अपोवाह कृपश्शल्यं तूर्णमायोधनाद्बहिः ॥ २५॥

क्षीववद्विह्वलो राजन् निमेषात् पुनरुत्थितः ।
भीमसेनो गदापाणिस् समाह्वयत मद्रपम् ॥ २६॥

ततस्तु तावकाश्शूरा नानादेशसमागताः ।
नानावादित्रशब्देन पाण्डुसैन्यमयोधयन् ॥ २७॥

भुजावुद्धृत्य शस्त्रं च शब्देन महता वृताः ।
अभ्यद्रवन् महाराज दुर्योधनपुरोगमाः ॥ २८॥

तदनीकमभिप्रेक्ष्य ततस्ते पाण्डुनन्दनाः ।
आययुस्सिंहनादेन दुर्योधनवधेप्सया ॥ २९॥

तेषामापततां तूर्णं पुत्रस्ते भरतर्षभ ।

प्रासेन चेकितानं च विव्याध हृदये भृशम् ॥ ३०॥
स पपात रथोपस्थात् तव पुत्रेण ताडितः ।
रुधिरौघपरिक्लिन्नः प्रविश्य विपुलं तमः ॥ ३१॥
चेकितानं हतं दृष्ट्वा पाण्डवेया महारथाः ।
असक्तमभ्यवर्षन्त शरवर्षाणि भागशः ॥ ३२॥
तावकानामनीकेषु पाण्डवा जितकाशिनः ।
व्यचरन्त महाराज प्रेक्षणीयास्समन्ततः ॥ ३३॥
कृपश्च कृतवर्मा च सौबलश्च महाबलः ।
अयोधयन् धर्मराजं मद्रराजपुरस्कृताः ॥ ३४॥
भारद्वाजस्य हन्तारं भूरिवीर्यसमन्वितम् ।
दुर्योधनो महाराज धृष्टद्युम्नमयोधयत् ॥ ३५॥
त्रिसहस्ररथा राजंस् तव पुत्रेण चोदिताः ।
अयोधयन्त विजयं त्रिगर्तानां महारथाः ॥ ३६॥
विजये धृतसङ्कल्पास् समभित्यक्तजीविताः ।
प्राविशंस्तावका राजन् हंसा इव महत् सरः ॥ ३७॥
ततो युद्धमभूद्घोरं [1]परस्परवधैषिणाम् ।
अन्योन्यस्तवसंयुक्तम् अन्योन्यप्रीतिवर्धनम् ॥ ३८॥
तस्मिन् प्रवृत्ते सङ्ग्रामे राजन् वीरवरक्षये ।

1. ख—सङ्ग्रामे विजयैषिणाम्

अनिलेनेरितं घोरम् उत्तस्थौ पार्थिवं रजः ॥　　३९॥

श्रवणान्नामधेयानां पार्थिवानां च कीर्तनात् ।
परान् वयं विजानीमो ये वाऽयुध्यन्नभीतवत् ॥　　४०॥

तद्रजः पुरुषव्याघ्र शोणितेन प्रणाशितम् ।
दिशश्च विमला जातास् तस्मिन् रजसि नाशिते ॥　　४१॥

ततः प्रवृत्ते सङ्ग्रामे घोररूपे समन्ततः ।
तावकानां परेषां च नासीन् कश्चित् पराङ्मुखः ॥　　४२॥

ब्रह्मलोकपरा भूत्वा प्रार्थयन्तो जयं युधि ।
सुयुद्धेन पराक्रान्ता नरास्स्वर्गमभीप्सवः ॥　　४३॥

भर्तृपिण्डविमोक्षार्थं मित्रकार्ये च विष्ठिताः ।
स्वर्गे [1]संयुक्तमनसो योधा युयुधिरे तदा ॥　　४४॥

नानारूपाणि शस्त्राणि विसृजन्तो महारथाः ।
अन्योन्यमभिगर्जन्तः प्रहरन्तः परस्परम् ॥　　४५॥

योधाः—

हत वध्यत गृह्णीत प्रहरध्वं निकृन्तत ॥　　४६

सञ्जयः—

इति स्म वाचोऽश्रूयन्त तत्र तेषां च वै बले ॥　　४६॥

ततश्शल्यो महाराज धर्मराजं युधिष्ठिरम् ।

---

1. क—सुरक्त

विव्याध निशितैर्बाणैर् हन्तुकामो महारथः ॥ ४७॥
तस्य पार्थो महाराज नाराचान् वै चतुर्दश ।
मर्माण्युद्दिश्य मर्मज्ञो निजघान हसन्निव ॥ ४८॥
संवार्य पाण्डवं बाणैर् हन्तुकामो महायशाः ।
विव्याध समरे क्रुद्धो बहुभिः कङ्कपत्रिभिः ॥ ४९॥
अथ मद्रो महाराज शरेण नतपर्वणा ।
युधिष्ठिरं समाजघ्ने सर्वसैन्यस्य पश्यतः ॥ ५०॥
धर्मराजोऽपि सङ्क्रुद्धो मद्रराजं महारथम् ।
जघान निशितैर्बाणैः कङ्कबर्हिणवाजितैः ॥ ५१॥
चन्द्रसेनं च सप्तत्या सूतं च नवभिश्शरैः ।
द्रुमत्सेनं चतुष्षष्ट्या निजघान महाबलः ॥ ५२॥
चक्ररक्षे हते शल्यः पाण्डवेन महात्मना ।
निजघान महाराज चेदीन् वै पञ्चविंशतिम् ॥ ५३॥
सात्यकिं पञ्चविंशत्या भीमसेनं च [1]पञ्चभिः ।
माद्रीपुत्रौ [2]च विंशत्या विव्याध निशितैश्शरैः ॥ ५४॥
एवं विचरतस्तस्य सङ्ग्रामे राजसत्तम ।
सम्प्रैषयच्छितान् पार्थश् शरानाशीविषोपमान् ॥ ५५॥
ध्वजाग्रं चास्य समरे कुन्तीपुत्रो युधिष्ठिरः ।

---

1. घ—सप्तभिः 2. क—शतेनाजौ

प्रमुखे युध्यमानस्य भल्लेनापाहरद्रथात् ॥　　५६॥
पाण्डुपुत्रेण वै तस्य केतुश्छिन्नो महात्मना ।
निपतन्तमपश्याम गिरेश्शृङ्गमिवाहतम् ॥　　५७॥
ध्वजं निपतितं दृष्ट्वा पाण्डवं चाप्यवस्थितम् ।
सङ्क्रुद्धो मद्रराजोऽभूच्छरवर्षं मुमोच ह ॥　　५८॥
शल्यस्सायकवर्षेण पर्जन्य इव वृष्टिमान् ।
अभ्यवर्षदमेयात्मा क्षत्रियं क्षत्रियर्षभः ॥　　५९॥
सात्यकिं भीमसेनं च माद्रीपुत्रौ च पाण्डवौ ।
एकैकं दशभिर्विद्ध्वा युधिष्ठिरम्[1]पीडयत् ॥　　६०॥
तेन बाणमयं जालं विसृष्टं पाण्डवोरसि ।
अपश्याम महाराज मेघजालमिवोत्थितम् ॥　　६१॥
तस्य शल्यो रणे क्रुद्धो बाणैस्सन्नतपर्वभिः ।
दिशः प्रच्छादयामास प्रदिशश्च महारथः ॥　　६२॥
ततो युधिष्ठिरो राजा बाणवर्षेण पीडितः ।
बभूव भृशविक्रान्तो जम्भो वज्रभृता यथा ॥　　६३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि एकादशोऽध्यायः ॥ ११ ॥
॥ ७५ ॥ शल्यवधपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये ६३॥ श्लोकाः]

---

1. ख—पोथयत्

## ॥ द्वादशोऽध्यायः ॥

शल्यपराक्रमवर्णनम् ॥

सञ्जयः—

पीडिते धर्मराजे तु मद्रराजेन मारिष ।
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च दुर्जयौ ॥ १

परिवार्य रथैश्शल्यं पीडयामासुराहवे ॥ १॥

तमेकं बहुभिर्दृष्ट्वा पीड्यमानं महारथैः ।
साधुवादो महाञ्जज्ञे सिद्धाश्चासन् प्रहर्षिताः ॥ २॥
आश्चर्यमित्यभाषन्त मुनयश्चापि सङ्गताः ॥ ३

भीमसेनो रणे शल्यं शल्यभूतं पराक्रमे ।
एकेन विद्ध्वा बाणेन पुनर्विव्याध सप्तभिः ॥ ४

[1]सात्यकिश्च शतेनैनं धर्मराजपरीप्सया ।
मद्रेश्वरमवाकीर्य सिंहनादमथानदत् ॥ ५

नकुलः पञ्चभिश्चैव सहदेवश्च सप्तभिः ।
विद्ध्वा तत्र ततस्तूर्णं पुनर्विव्याध सप्तभिः ॥ ६

स तु शूरो रणे यत्तः पीडितस्तैर्महारथैः ।
विकृष्य कार्मुकं घोरं वेगघ्नं भारसाधनम् ॥ ७

1. ब—अर्धचतुष्टयं नास्ति

[1]सात्यकिं पञ्चविंशत्या शल्यो विव्याध मारिष ॥ ७॥
भीमसेनं त्रिसप्तत्या नकुलं पञ्चभिस्तथा ॥ ८

सम्यक् सविशिखं चापं सहदेवस्य धन्विनः ।
छित्त्वा भल्लेन समरे विव्याधैनं त्रिसप्तभिः ॥ ९

सहदेवस्तु समरे मातुलं भूरिवर्चसम् ।
सज्जमन्यद्धनुः कृत्वा पञ्चभिस्समताडयत् ॥ १०

शरैराशीविषाकारैर् [2]अर्कज्वलनसन्निभैः ।
सारथिं चास्य समरे शरेणानतपर्वणा ॥ ११

विव्याध भृशसङ्क्रुद्धस् तं च भूयस्त्रिभिश्शरैः ॥ ११॥
भीमसेनस्त्रिसप्तत्या सात्यकिर्नवभिश्शरैः ।
धर्मराजस्तथा षष्ट्या गात्रे शल्यं समर्पयत् ॥ १२॥

ततश्शल्यो महाराज निर्विद्धस्तैर्महारथैः ।
सुस्राव रुधिरं गात्रैर् गैरिकं पर्वतो यथा ॥ १३॥

तांश्च सर्वान् महेष्वासान् पञ्चभिः पञ्चभिश्शरैः ।
[3]विव्याध तरसा राजंस् तदद्भुतमिवाभवत् ॥ १४॥
ततोऽपरेण भल्लेन धर्मपुत्रस्य मारिष ।

---

1. घ—सात्यकिश्च शतेनैवं धर्मराजपरीप्सया ।
मद्रेश्वरमवाकीर्य सिंहनादमथानदत् ॥ [पाठान्तरम्]
2. ख-घ—राजन्
3. क—भीमसेनं च सप्तत्या सप्तभिर्नवभिश्शरैः । [अधिकः पाठः]

चिच्छेद समरे सज्यं धनुस्तस्य महात्मनः ॥ १५॥

अथान्यद्धनुरादाय धर्मपुत्रो [1]महारथः ।
साश्वसूतध्वजरथं शल्यं प्राच्छादयच्छरैः ॥ १६॥

प्रच्छाद्यमानस्समरे धर्मपुत्रस्य सायकैः ।
युधिष्ठिरमथाविध्यद् दशभिर्निशितैश्शरैः ॥ १७॥

सात्यकिस्तु ततः क्रुद्धो धर्मपुत्रे शरार्दिते ।
मद्राणामधिपं शूरं शरैर्विव्याध पञ्चभिः ॥ १८॥

स सात्यकेश्च चिच्छेद क्षुरप्रेण महद्धनुः ।
भीमसेनमुखांस्तांस्तान् त्रिभिस्त्रिभिरताडयत् ॥ १९॥

ततः क्रुद्धो महाराज सात्यकिस्सत्यविक्रमः ।
तोमरं प्रेषयामास स्वर्णदण्डं महारणे ॥ २०॥

भीमसेनश्शरं घोरं कार्तस्वरविभूषितम् ।
नकुलस्समरे शक्तिं सहदे[2]वो गदां शुभाम् ॥ २१॥

धर्मराजश्शतघ्नीं तु जिघांसुश्शल्यमाहवे ॥ २२

तानापतत एवाशु पञ्चानां वै भुजच्युतान् ।
सात्यकिप्रहितं शल्यो भल्लैश्चिच्छेद तोमरम् ॥ २३

वृकोदरेण प्रहितं शरं कनकभूषितम् ।

---

1. ख-ब—युधिष्ठिरः 2. ख—यश्च तोमरम्

[1]द्विधा चिच्छेद समरे कृतहस्तः प्रतापवान् ॥　　२४

नकुलप्रेषितां शक्तिं हेमदण्डां भयावहाम् ।
[2]गदां च सहदेवेन शरौघैस्समवारयन् ॥　　२५

शराभ्यां च शतघ्नीं तां राज्ञश्चिच्छेद भारत ।
पश्यतां पाण्डुपुत्राणां सिंहनादमनादयत् ॥　　२६

नामृष्यत् तत्तु शैनेयश् शत्रोर्विजयलक्षणम् ॥　　२६॥

अथान्यद्धनुरादाय सात्यकिः क्रोधमूर्च्छितः ।
द्वाभ्यां मद्रेश्वरं विद्ध्वा सारथिं च त्रिभिश्शरैः ॥　　२७॥

ततश्शल्यो रणे राजन् सर्वांस्तान् दशभिश्शरैः ।
विव्याध सुभृशं क्रुद्धस् तोत्रैरिव महाद्विपान् ॥　　२८॥

ते वार्यमाणास्समरे मद्रराजेन धीमता ।
न शेकुः प्रमुखे स्थातुं तस्य शत्रुनिषूदन ॥　　२९॥

ततो दुर्योधनो राजा दृष्ट्वा शल्यस्य विक्रमम् ।
निहतान् पाण्डवान् मेने पाञ्चालांश्च ससृञ्जयान् ॥　　३०॥

[3]तथाविधं महाराज मद्रराजस्य विक्रमम् ।
असह्यं मानवैर्युद्धे तद्बभूव नरर्षभ ॥　　३१॥

ततो राजन् महाबाहुर् भीमसेनः प्रतापवान् ।

---

1. ख—भल्लैश्चिच्छेद　　2. ख—तोमरं
3. ख—अर्धद्वयं नास्ति

संत्यज्य मनसा प्राणान् मद्रराज[1]मयोधयत् ॥ ३२॥

नकुलस्सहदेवश्च सात्यकिश्च महारथः ।
[2]परिवार्य तदा शल्यं समन्ताद्व्यकिरच्छरैः ॥ ३३॥

स चतुर्भिर्महेष्वासैः पाण्डवानां महारथैः ।
वृतस्तान् योधयामास मद्रराजः प्रतापवान् ॥ ३४॥

तस्य धर्मसुतो राजन् क्षुरप्रेण महाहवे ।
चक्ररक्षं जघानाशु मद्रराजस्य पार्थिवः ॥ ३५॥

तस्मिंस्तु निहते वीरे चक्ररक्षे महाबले ।
मद्रराजोऽतिबलवान् सैनिकानावृणोच्छरैः ॥ ३६॥

समाच्छन्नांस्ततस्तांस्तु राजन् वीक्ष्य स्वसैनिकान् ।
चिन्तयामास समरे धर्मपुत्रो युधिष्ठिरः ॥ ३७॥

युधिष्ठिरः—

कथं नु न भवेत् सत्यं माधवस्य वचो महत् ।
अभिक्रुद्धो महाराज क्षपयेत बलं मम ॥ ३८॥

[3]अहं मद्भ्रातरश्चैव सात्यकिश्च महारथः ।
पाञ्चालास्सृञ्जयाश्चैव न शक्ता[4]स्स्म हि मद्रपम् ॥ ३९॥

निहनिष्यति चैवाद्य मातुलोऽस्मान् महाबलः ॥ ४०
गोविन्दवचनं सत्यं कथं भवति किंत्विदम् ॥ ४०॥

1. क—मपोथयत्　2. ब—अर्धद्वयं नास्ति
3. ख—अर्धचतुष्टयं नास्ति　4. अ—समभिद्रताः

सञ्जयः—

ततस्सरथनागाश्वाः पाण्डवाः पाण्डुपूर्वज ।
मद्रेश्वरं समासेदुः पीडयन्तस्समन्ततः ॥ ४१॥

नानाशस्त्रौघवहुलां शस्त्रवृष्टिं समुत्थिताम् ।
व्यधमत् समरे राजन् महाभ्राणीव मारुतः ॥ ४२॥

ततः कनकपुङ्खान्तां शल्यक्षिप्तां वियद्गताम् ।
शरवृष्टिमपश्याम शलभानामिवायतिम् ॥ ४३॥

ते शरा मद्रराजेन प्रेपिता रणमूर्धनि ।
सम्पतन्तस्स दृश्यन्ते शलभानां व्रजा इव ॥ ४४॥

[1]मद्रराजधनुर्मुक्तैश् शरैः कनकभूषणैः ।
निरन्तरमिवाकाशं सम्बभूव जनाधिप ॥ ४५॥

न पाण्डवानां नास्माकं तत्र कश्चिद्व्यदृश्यत ।
बाणान्धकारे महति कृते तत्र महाहवे ॥ ४६॥

मद्रराजेन बलिना लाघवाच्छरवृष्टिभिः ।
लोड्यमानं तदा दृष्ट्वा पाण्डवानां बलार्णवम् ॥ ४७॥

विस्मयं परमं जग्मुर् देवगन्धर्वदानवाः ॥ ४८

स तु तान् सर्वतो यत्नाच् छरैस्सम्पीड्य मारिष ।
धर्मराजमवच्छाद्य सिंहवद्व्यनदन्मुहुः ॥ ४९

1. ब—अर्धत्रयं नास्ति

ते च्छन्नास्समरे तेन[1] पाण्डवानां महारथाः ।
न शेकुस्ते तदा युद्धे प्रत्युद्यातुं महारथाः ॥ ५०

धर्मराजपुरोगास्तु भीमसेनमुखा रथाः ।
निजघ्नुस्समरे शूरं शल्यमाहवशोभिनम् ॥ ५१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ ७४ ॥ शल्यवधपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये ५१ श्लोकाः]

## ॥ त्रयोदशोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

सञ्जयः—

अर्जुनो द्रौणिना विद्धो युद्धे बहुभिरायसैः ।
तस्य चानुचरैश्शूरैस् त्रिगर्तानां महारथैः ॥ १

द्रौणिं विव्याध समरे त्रिभिरेव शिलीमुखैः ।
तथेतरान् महेष्वासान् द्वाभ्यां द्वाभ्यां समाच्छिनत् ॥ २

भूयश्चैतान् महाबाहुश् शरवर्षैरवाकिरत् ॥ २॥

शरकण्टकिनस्ते तु तावका भरतर्षभ ।

1. ख-घ—मद्रपेण महात्मना

न जहुस्समरे पार्थं वध्यमानाश्शिलीमुखैः ॥ ३॥

अर्जुनं रथवंशेन द्रोणपुत्रपुरोगमाः ।
[1]अयोधयन्त समरे परिवार्य महारथम् ॥ ४॥

तैस्तु क्षिप्ताश्शरा राजन् कार्तस्वरविभूषिताः ।
अर्जुनस्य रथोपस्थं पूरयामासुरञ्जसा ॥ ५॥

तथा कृष्णौ महेष्वासौ वृषभौ सर्वधन्विनाम् ।
[2]शरैर्वीक्ष्य वितुन्नाङ्गौ प्रहृष्टौ युद्धदुर्मदौ ॥ ६॥

कूबरं रथचक्राणि [3]ईषान् योक्त्राणि चाभि भो ।
युगं चैवानुकर्षं च शरभूतमभूत् तदा ॥ ७॥

न तादृशं दृष्टपूर्वं राजन् नैव च मे श्रुतम् ।
यादृशं तस्य पार्थस्य तावकास्सम्प्रचक्रिरे ॥ ८॥

स रथस्सर्वतो भाति रुक्मपुङ्खैश्शिलाशितैः ।
उल्काशतैस्सम्प्रदीप्तं विमानमिव भूतले ॥ ९॥

ततोऽर्जुनो महाराज शरैस्सन्नतपर्वभिः ।
अवाकिरत्तां पृतनां मेघो वृष्ट्या यथाऽचलम् ॥ १०॥

ते वध्यमानास्समरे पार्थनामाङ्कितैश्शरैः ।

---

1. ख-ध—परिवार्य मुदा युक्ता योधयन्तश्चकाशिरे ।
2. ध—विव्यथुश्च शरैर्घोरैः प्रहृष्टा युद्धदुर्मदाः ।
   क—विव्यथुश्च शरैः घोरैः प्र+दौ ।

पार्थभूतममन्यन्त प्रेक्षमाणास्तथाविधम् ॥ ११॥

[1]कोपोद्भूतशरज्वालो धनुश्शब्दानिलो महान् ।
सेनेन्धनं ददाहाशु तावकं पार्थपावकः ॥ १२॥

चक्राणां पततां चैव युगानां च धरातले ।
तूणीराणां पताकानां [2]ध्वजानां च रथैस्सह ॥ १३॥

ईषाणामनुकर्षाणां त्रिवेणूनां च भारत ।
अक्षाणामथ योक्त्राणां प्रतोदानां च राशयः ॥ १४॥

शिरसां पततां चैव कुण्डलोष्णीषधारिणाम् ।
भुजानां च महाराज सुस्कन्धानां समन्ततः ॥ १५॥

छत्राणां व्यजनैस्सार्धं मकुटानां च राशयः ।
समदृश्यन्त पार्थस्य रथमार्गेषु सर्वशः ॥ १६॥

[3]ततः क्रुद्धस्य पार्थस्य रथमार्गे विशां पते ।
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ १७॥

बभूव भरतश्रेष्ठ रुद्रस्याक्रीडनं यथा ॥ १८
भीरूणां त्रासजननी शूराणां हर्षवर्धनी ॥ १८॥

हत्वा तु समरे पार्थस् सहस्रे द्वे परन्तपः ।
रथानां सवरूथानां विधूमोऽग्निरिव ज्वलन् ॥ १९॥

---

1. ख-घ—ततोद्भुत 2. ख—नागानां
3. ख-घ—इदमर्धं नास्ति

यथा हि भगवान् वह्निर् जगद्दग्ध्वा चराचरम् ।
विधूमो दृश्यते राजन् ज्वलमानस्तथाऽर्जुनः ॥ २०॥

द्रौणिस्तु समरे दृष्ट्वा पाण्डवस्य पराक्रमम् ।
रथेनातिपताकेन पाण्डवं पर्यवारयत् ॥ २१॥

तावुभौ पुरुषव्याघ्रौ श्वेताश्वौ धन्विनां वरौ ।
समीयतुस्तदा तूर्णं परस्परवधैषिणौ ॥ २२॥

तयोरासीन्महाराज बाणवर्षं सुदारुणम् ।
जीमूतयोर्यथा वृष्टिस् तपान्ते भरतर्षभ ॥ २३॥

अन्योन्यस्पर्धिनौ तौ तु शरैस्सन्नतपर्वभिः ।
ततक्षतुर्मृधेऽन्योन्यं शृङ्गाभ्यां वृषभाविव ॥ २४॥

तयोर्युद्धं महाराज चिरं सममिवाभवत् ।
अस्त्राणां सङ्गमश्चैव घोरस्तत्राभवत् पुनः ॥ २५॥

ततोऽर्जुनं द्वादशभी रुक्मपुङ्खैः[1] सुतेजनैः ।
वासुदेवं च दशभिर् द्रौणिर्विव्याध भारत ॥ २६॥

ततः प्रहस्य बीभत्सुर् विक्षिपन् गाण्डिवं धनुः ।
मानयित्वा मुहूर्तं तु गुरुपुत्रं महारथम् ॥ २७॥

व्यश्वसूतरथं चक्रे सव्यसाची महाहवे ।
मृदुपूर्वं ततश्चैनं त्रिभिर्विव्याध सायकैः ॥ २८॥

1. ख-घ—श्शिलाशितैः

हताश्वे तु रथे तिष्ठन् द्रोणपुत्रोऽप्यविस्मयन् ।
मुसलं पाण्डुपुत्राय चिक्षेप परिघोपमम् ॥ २९॥

तमापतन्तं सहसा हेमपट्टविभूषितम् ।
चिच्छेद सप्तधा वीरः पार्थश्शत्रुनिबर्हणः ॥ ३०॥

सञ्छिन्नं मुसलं दृष्ट्वा द्रौणिः परमकोपनः ।
आददे परिघं घोरं नगेन्द्रशिखरोपमम् ॥ ३१॥

चिक्षेप चैव पार्थाय द्रौणिर्युद्धविशारदः ॥ ३२

तमन्तकमिव क्रुद्धं परिघं प्रेक्ष्य पाण्डवः ।
अर्जुनस्त्वरितो जघ्ने पञ्चभिस्सायकोत्तमैः ॥ ३३

स च्छिन्नः पतितो भूमौ पार्थबाणैर्महाहवे ।
दारयन् पृथिवीन्द्राणां मनश्शब्देन भारत ॥ ३४

ततोऽपरैस्त्रिभिर्बाणैर् द्रौणिं विव्याध पाण्डवः ॥ ३४॥

सोऽतिविद्धो बलवता पार्थेन सुमहाबलः ।
न मुमोह तदा द्रौणिः पौरुषे स्वे व्यवस्थितः ॥ ३५॥

[1]सुरथं तु महाराज भारद्वाजो महारथः ।
अवाकिरच्छरशतैस् सर्वक्षत्रस्य पश्यतः ॥ ३६॥

ततस्तु सुरथोऽप्याजौ पाञ्चालानां महारथः ।
रथेन मेघघोषेण द्रौणिमेवाभ्यधावत ॥ ३७॥

---

1. ख-घ—सुशर्मा तु तदा राजन् भारद्वाजमुपस्थितम् ।

विचकर्ष धनुश्श्रेष्ठं सर्वभारसहं दृढम् ।
ज्वलदाशीविषसमैश् शरैश्चैनमवाकिरत् ॥ ३८॥

सुरथं तं ततः क्रुद्धम् आपतन्तं महारथम् ।
चुकोप समरे द्रौणिर् दण्डाहत इवोरगः ॥ ३९॥

त्रिशिखां भ्रुकुटीं कृत्वा सृक्किणी परिलेलिहन् ।
उद्वीक्ष्य सुरथं रोषाद् धनुर्ज्यामवमृज्य च ॥ ४०॥

मुमोच तीक्ष्णं नाराचं यमदण्डसमप्रभम् ॥ ४१

स तस्य हृदयं भित्त्वा प्रविवेशातिवेगितः ।
शक्राशनिरिवोत्सृष्टो विदार्य धरणीतलम् ॥ ४२

ततस्तं निहतं दृष्ट्वा नाराचेन समाहतम् ।
वज्रेणेव महाशृङ्गं पर्वतस्य महावने ॥ ४३

तस्मिंस्तु निहते शूरे द्रोणपुत्रः प्रतापवान् ।
आरुरोह रथं तूर्णं तमेव रथिनां वरः ॥ ४४

ततस्सद्यो महाराज द्रौणिराहवदुर्मदः ।
अर्जुनं योधयामास संशप्तकवृतो रणे ॥ ४५

तत्र युद्धं महच्चासीद् अर्जुनस्य परैस्सह ।
[1]मध्यंदिनगते सूर्ये यमराष्ट्रविवर्धनम् ॥ ४६

तत्राश्चर्यमपश्याम दृष्ट्वा तेषां पराक्रमम् ।

---

1. घ—अर्धचतुष्टयं नास्ति

यदेको युगपद्वीरान् समयोधयदर्जुनः ॥ ४७

विमर्दश्च महानासीद् एकस्य बहुभिस्सह ।
शतक्रतोर्यथा पूर्वं महत्या दैत्यसेनया ॥ ४८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
॥ ७४ ॥ शल्यवधपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[ अस्मिन्नध्याये ४८ श्लोकाः ]



## ॥ चतुर्दशोऽध्यायः ॥



सङ्कुलयुद्धम् ॥

---

सञ्जयः—

दुर्योधनो महाराज धृष्टद्युम्नश्च पार्षतः ।
चक्रतुस्सुमहद्युद्धं शरशक्तिसमाकुलम् ॥ १

तयो राजन् समापेतुश् शरधारास्सहस्रशः ।
अम्बुदानां यथा काले जलधारास्समन्ततः ॥ २

राजा तु पार्षतं विद्ध्वा शरैस्सन्नतपर्वभिः ।
द्रोणहन्तारमुग्रैस्तु पुनर्विव्याध सप्तभिः ॥ ३

धृष्टद्युम्नश्च समरे बलवान् दृढविक्रमः ।
सप्तत्या विशिखानां वै दुर्योधनमपीडयत् ॥ ४

पीडितं प्रेक्ष्य राजानं सोदर्या भरतर्षभ ।
महत्या सेनया सार्धं परिवव्रुश्च पार्षतम् ॥ ५

स तैः परिवृतश्शूरैस् सर्वतोऽतिरथैर्भृशम् ।
व्यचरत् समरे राजन् दर्शयन् हस्तलाघवम् ॥ ६

शिखण्डी कृतवर्माणं गौतमं च महारथम् ।
प्रभद्रकैस्समायुक्तो योधयामास धन्विनौ ॥ ७

तत्रासीत् सुमहद्युद्धं घोररूपं विशां पते ।
प्राणान् संत्यजतोर्युद्धे प्राणद्यूताभिदेविनोः ॥ ८

शल्यस्तु शरवर्षाणि विमुञ्चन् सर्वतो दिशम् ।
पाण्डवान् पीडयामास [1]ससात्यकिवृकोदरान् ॥ ९

तथोभौ च यमौ युद्धे यमतुल्यपराक्रमौ ।
योधयामास समरे वीर्येणास्त्रबलेन च ॥ १०

शल्यसायकभिन्नानां पाण्डवानां महामृधे ।
त्रातारं नाध्यगच्छन्त तत्र केचिन्महारथाः ॥ ११

ततस्तु नकुलश्शूरो धर्मराजे प्रपीडिते ।
अभिदुद्राव वेगेन मातुलं माद्रिनन्दनः ॥ १२

सञ्छाद्य समरे शल्यं नकुलः परवीरहा ।

---

1. ख—त्रिभिस्सन्नतपर्वभिः
सात्यकिस्तु महावीर्यस् समरे युद्धदुर्मदः ।
वृकोदरस्तथोभौ च यमतुल्यपराक्रमौ ॥ [पाठान्तरम्]

विव्याध चैनं दशभिस् स्मयमानस्स्तनान्तरे ॥　१३
सर्वपारशवैर्बाणैः कर्मारपरिमार्जितैः ।
सुवर्णपुङ्खैर्विशिखैर् धनुर्यन्त्रप्रपीडितैः ॥　१४
शल्यस्तु पीडितस्तेन स्वस्रीयेण तु मातुलः ।
नकुलं पीडयामास शरैस्सन्नतपर्वभिः ॥　१५
ततो युधिष्ठिरो राजा भीमसेनश्च सात्यकिः ।
सहदेवश्च माद्रेयो मद्रराजमुपाद्रवन् ॥　१६
तानापतत एवाशु पूरयाणान् रथस्वनैः ।
दिशश्च प्रदिशश्चैव कम्पयानांश्च मेदिनीम् ॥　१७
प्रतिजग्राह समरे सेनापतिरमित्रजित् ॥　१७॥
युधिष्ठिरं त्रिभिर्विद्ध्वा भीमसेनं च [1]पञ्चभिः ।
सात्यकिं च शतेनाजौ सहदेवं त्रिभिश्शरैः ॥　१८॥
ततस्तु सशरं चापं नकुलस्य महात्मनः ।
मद्रेश्वरः क्षुरप्रेण मध्ये चिच्छेद मारिष ॥　१९॥
तदपास्य धनुश्छिन्नं ततश्शल्यस्य सायकैः ।
अथान्यद्धनुरादाय माद्रीपुत्रो महाबलः ॥　२०॥
मद्रराजरथं तूर्णं पूरयामास पत्रिभिः ॥　२१
युधिष्ठिरस्तु मद्रेशं सहदेवश्च मारिष ।

---
1. ख-घ—सप्तभिः

दशभिर्दशभिर्भल्लैस् तदा तूर्णमविध्यताम् ॥ २२

भीमसेनस्तथा षष्ट्या सात्यकिर्नवभिश्शरैः ।
मद्रराजमभिद्रुत्य जघ्नतुः कङ्कपत्रिभिः ॥ २३

मद्रराजस्ततः क्रुद्धस् सात्यकिं दशभिश्शरैः ।
विव्याध भूयस्सप्तत्या शराणां नतपर्वणाम् ॥ २४

अथास्य सशरं चापं मुष्टौ चिच्छेद मारिष ।
हयांश्च चतुरस्सङ्ख्ये प्रेषयामास मृत्यवे ॥ २५

विरथं सात्यकिं कृत्वा मद्रराजो महाबलः ।
विशिखानां शतेनैनम् आजघान समन्ततः ॥ २६

माद्रीपुत्रौ च [1]संरब्धौ भीमसेनं च पाण्डवम् ।
युधिष्ठिरं च कौरव्य विव्याध निशितैश्शरैः ॥ २७

तत्राद्भुतमपश्याम मद्रराजस्य पौरुषम् ।
यदेनं सहिताः पार्थान् अभ्यवर्तन्त संयुगे ॥ २८

अथान्यं रथमास्थाय सात्यकिस्सत्यविक्रमः ।
पीडितान् पाण्डवान् दृष्ट्वा मद्रराजवशं गतान् ॥ २९

अभिदुद्राव वेगेन मद्राणामधिपं बली ॥ २९॥

आपतन्तं रथं तस्य शल्यस्समितिशोभनः ।
प्रत्युद्ययौ रथेनैनं मत्तो मत्तमिव द्विपम् ॥ ३०॥

---

1. क-ख-ध—सङ्क्रुद्धौ

स सन्निपातस्तुमुलो बभूवाद्भुतदर्शनः ।
सात्यकेश्चैव शूरस्य मद्राणामधिपस्य च ॥ ३१॥

यादृशो वै पुरा वृत्तश् शम्बरामरराजयोः ॥ ३२

सात्यकिः प्रेक्ष्य समरे मद्रराजमवस्थितम् ।
विव्याध निशितैर्बाणैस् तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३३

मद्रराजस्तु सुभृशं विद्धस्तेन महात्मना ।
सात्यकिं प्रतिविव्याध विंशत्या निशितैश्शरैः ॥ ३४

ततः पार्था महेष्वासास् सात्वताभिमुखं नृपम् ।
अभ्यद्रवन् रथैस्तूर्णं मातुलं वधकाम्यया ॥ ३५

तत आसीत् परामर्दस् तुमुलश्शोणितोदकः ।
शूराणां युध्यमानानां सिंहानामिव गर्जताम् ॥ ३६

तेषामासीन्महाराज व्यतिक्षेपः परस्परम् ।
सिंहानामामिषेप्सूनां गर्जतामिव संयुगे ॥ ३७

ततो बाणसहस्रौघैर् आकीर्णा वसुधाऽभवत् ।
अन्तरिक्षं च सहसा बाणभूतमभूत् तदा ॥ ३८

शरान्धकारे महति कृते तत्र समन्ततः ।
अभ्रच्छायेव सञ्जज्ञे शरैः पूर्णैर्महात्मभिः ॥ ३९

तत्र राजन् शरैर्मुक्तैर् निर्मुक्तैरिव पन्नगैः ।
रुक्मपुङ्खैः प्रकाशद्भिर् व्यराजन्त दिशस्तथा ॥ ४०

तत्राद्भुतं परं चक्रे शल्यश्शत्रुनिबर्हणः ।
यदेकस्समरे शूरोऽयोधयद्वै तथा बहून् ॥　४१

मद्रराजभुजोत्सृष्टैः कङ्कबर्हिणवाजितैः ।
सम्पतद्भिश्शरैर्घोरैर् अवाकीर्यत मेदिनी ॥　४२

तत्र शल्यरथं घोरं विचरन्तं महाहवे ।
अपश्याम यथापूर्वं शक्रस्यासुरसङ्क्षये ॥　४३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ ७४ ॥ शल्यवधपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[अस्मिन्नध्याये ४३ श्लोकाः]

## ॥ पञ्चदशोऽध्यायः ॥

शल्ययुधिष्ठिरयोर्युद्धम् ॥

सञ्जयः—

ततस्सेना तव विभो मद्रराजपुरस्कृता ।
पुनरभ्यद्रवत् पार्थान् वेगेन महता रणे ॥　१

पीडितास्तावकास्सर्वे प्रधावन्तो रणोत्कटाः ।
क्षणेन चैव पार्थास्ते बहुत्वात् समलोलयन् ॥　२

तैर्वध्यमानाः कुरुभिः पाण्डवानवतस्थिरे ।

निवार्यमाणा भीमेन पश्यतोः कृष्णपार्थयोः ॥ ३

ततो धनञ्जयः क्रुद्धः कृपं सह पदानुगैः ।
अवारयच्छरौघेण कृतवर्माणमेव च ॥ ४

शकुनिं सहदेवश्च सहसैन्यमवारयत् ॥ ४॥

[1-2]नकुलः पार्श्वतस्स्थित्वा मद्रराजमयोधयत् ॥ ५

द्रौपदेया नरेन्द्रांश्च भूयिष्ठं समवारयन् ।
[3]द्रोणपुत्रं च पाञ्चाल्यश् शिखण्डी समवारयत् ॥ ६

शल्यं तु सह सैन्येन कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनस्तु राजानं गदापाणिरवारयत् ॥ ७

ततस्समभवद्युद्धं संसक्तं तत्र तत्र ह ।
तावकानां परेषां च सङ्ग्रामेष्वनिवर्तिनाम् ॥ ८

तत्र पश्यामहे कर्म शल्यस्यातिमहद्रणे ।
यदेकस्सर्वसैन्यानि पाण्डवानामयुध्यत ॥ ९

व्यदृश्यत तदा शल्यो युधिष्ठिरसमीपतः ।
क्रूरश्चन्द्रमसोऽभ्याशे शनैश्चर इव ग्रहः ॥ १०

पीडयित्वा तु राजानं शरैराशीविषोपमैः ।

---

1. अ-ख—ततस्समभवद्युद्धं संसक्तं तत्र तत्र ह ।
[अधिकः पाठः]

2. ब—इदमर्धं नास्ति 3. ब—इदमर्धं नास्ति

अभ्यधावन् पुनर्भीमं शरवर्षैरवाकिरन् ॥ ११

तस्य तल्लाघवं दृष्ट्वा तथैव च कृतास्त्रताम् ।
अपूजयन्ननीकानि परेषां तावकानि च ॥ १२

पीड्यमानस्तु शल्येन पाण्डवा भृशविक्षताः ।
प्राद्रवन्त रणं हित्वा क्रोशमाने युधिष्ठिरे ॥ १३

वध्यमानेष्वनीकेषु मद्रराजेन पाण्डवः ।
अमर्षवशमापन्नो धर्मराजो युधिष्ठिरः ॥ १४

ततः पौरुषमास्थाय मद्रराजमपीडयत् ।
जयो वाऽस्तु वधो वेति कृतबुद्धिर्महारथः ॥ १५
समाहूयाब्रवीत् सर्वान् भ्रातॄन् कृष्णं च पाण्डवः ॥ १५॥

युधिष्ठिरः—

भीष्मो द्रोणश्च कर्णश्च ये चान्ये पृथिवीक्षितः ।
कौरवार्थे पराक्रान्तास् सङ्ग्रामे निधनं गताः ॥ १६॥

यथाभागं यथोत्साहं भवन्तः कृतपौरुषाः ।
भागोऽवशिष्ट एवायं मम शल्यो महारथः ॥ १७॥

सोऽहमद्य युधा जेतुम् आशंसे मद्रकेश्वरम् ।
अत्र यन्मानसं सर्वं तद्धितं निगदामि वः ॥ १८॥

चक्ररक्षाविमौ शूरौ मम माद्रवतीसुतौ ।
अजय्यौ वासवेनापि समरे वीरसम्मतौ ॥ १९॥

साध्विमौ मातुलं युद्धे क्षत्रधर्मपुरस्कृतौ ।
मदर्थे प्रतियुध्येतां मानार्हौ सत्यसङ्गरौ ॥ २०॥

मां वा शल्यो रणे हन्ता तं वाऽहं भद्रमस्तु वः ।
इति सत्यामिमां वाचं लोकवीरा निबोधत ॥ २१॥

योत्स्येऽहं मातुलेनाद्य क्षत्रधर्मेण पार्थिवाः ।
स्वमंशमभिसन्धाय विजयायेतराय वा ॥ २२॥

तस्य ह्यभ्यधिकं शस्त्रं सर्वोपकरणानि च ।
संयुज्यन्तां रथे क्षिप्रं शास्त्रवद्रथयोजकैः ॥ २३॥

शैनेयो दक्षिणं पक्षं धृष्टद्युम्नस्तथोत्तरम् ।
पृष्ठगोपो भवत्वद्य मम पार्थो धनञ्जयः ॥ २४॥

पुरस्सरो ममाद्यास्तु भीमश्शस्त्रभृतां वरः ।
एवमभ्यधिकश्शल्याद् भविष्यामि महामृधे ॥ २५॥

सञ्जयः—

एवमुक्तास्तथा चक्रुस् ततो राज्ञः प्रियैषिणः ॥ २६

ततः प्रहर्षस्सैन्यानां पुनरासीत् तदा नृप ।
पाञ्चालानां सोमकानां मत्स्यानां च महात्मनाम् ॥ २७

प्रतिज्ञातं च सङ्ग्रामे धर्मराजस्य पूजयन् ॥ २७॥

ततश्शङ्खांश्च भेरीश्च शतशश्चैव पुष्करान् ।
अवादयन्त पाञ्चालास् सिंहनादांश्च नेदिरे ॥ २८॥

तेऽभ्यधावंश्च संरब्धा मद्रराजं तरस्विनम् ॥ २९

महता हर्षजेनाथ नादेन कुरुनन्दन ।
ह्लादेन गजघण्टानां शङ्खानां निनदेन च ॥ ३०

तूर्यशब्देन महता नादयन्तश्च मेदिनीम् ॥ ३०॥

तान् प्रत्यगृह्णात् पुत्रस्ते मद्रराजश्च वीर्यवान् ।
महामेघानिव बहून् शैलौ द्वौ तोयदागमे ॥ ३१॥

शल्यस्तु समरश्लाघी धर्मराजमरिन्दमम् ।
ववर्ष शरवर्षेण मघवानिव पर्वतम् ॥ ३२॥

तथैव कुरुराजोऽपि प्रगृह्य रुचिरं धनुः ।
द्रोणोपदेशान् विविधान् दर्शयानो महामनाः ॥ ३३॥
ववर्ष शरवर्षेण चित्रं लघु च सुष्ठु च ॥ ३४

न चास्य विवरं कश्चिद् ददर्श चरतो रणे ॥ ३४॥

तावुभौ विविधैर्बाणैस् ततक्षाते परस्परम् ।
शार्दूलावामिषप्रेप्सू पराक्रान्ताविवाहवे ॥ ३५॥
भीमस्तु रणशौण्डेन तव पुत्रेण सङ्गतः ॥ ३६

पाञ्चाल्यस्सात्यकिश्चैव तथा माद्रीसुतावुभौ ।
शकुनिप्रमुखान् वीरान् प्रत्यगृह्णन् समन्ततः ॥ ३७

तदाऽऽसीत् तुमुलं युद्धं पुनरेव जयैषिणाम् ।
तावकानां परेषां च राजन् दुर्मन्त्रिते तव ॥ ३८

दुर्योधनस्तु भीमस्य शरेणानतपर्वणा ।
चिच्छेदोद्दिश्य सङ्ग्रामे ध्वजं हेमविभूषितम् ॥ ३९

सकिङ्किणीकजालेन महता चारुदर्शनः ।
पपात रुचिरस्सिंहो भीमसेनस्य नादयन् ॥ ४०

पुनश्चास्य धनुश्चित्रं गजराजकरोपमम् ।
क्षुरेण शितधारेण प्रचकर्त नराधिपः ॥ ४१

सञ्छिन्नधन्वा तेजस्वी रथशक्त्या सुतं तव ।
बिभेदोरसि विक्रम्य रथोपस्थ उपाविशत् ॥ ४२

[1]तस्मिन् मोहमनुप्राप्ते पुनरेव वृकोदरः ।
यन्तुरेव शिरः कायात् क्षुरप्रेणाहरत् तदा ॥ ४३

हतसूता हयास्तस्य रथमादाय भारत ।
व्यद्रवन्त दिशो राजन् हाहाकारस्ततोऽभवत् ॥ ४४

तमभ्यधावंस्त्राणार्थं द्रोणपुत्रो महारथः ।
कृपश्च कृतवर्मा च पुत्रं तेऽभिपरीप्सवः ॥ ४५

तस्मिन् विलुलिते सैन्ये त्रस्तास्तस्य पदानुगाः ।
गाण्डीवधन्वा विष्फार्य धनुस्तानहनच्छरैः ॥ ४६

युधिष्ठिरस्तु मद्रेशम् अभ्यधावदमर्षितः ।
स्वयं सञ्चोदयन्नश्वान् दन्तवर्णान् मनोजवान् ॥ ४७

---

1. ब—इदमर्धं नास्ति

तत्राद्भुतमपश्याम कुन्तीपुत्रो युधिष्ठिरः ।
पुरा भूत्वा मृदुर्दान्तो यत्तदा दारुणोऽभवत् ॥ ४८

विवृताक्षस्तु कौन्तेयो दीप्यमानस्तु मन्युना ।
चिच्छेद योधान् निशितैश् शरैश्शतसहस्रशः ॥ ४९

यां यां प्रत्युद्ययौ सेनां तां तां ज्येष्ठस्तु पाण्डवः ।
शरैरपातयद्राजन् गिरीन् वज्रैरिवोत्तमैः ॥ ५०

साश्वसूतध्वजवरान् रथिनोऽपातयद्बहून् ।
आक्रीडदेको बलवान् पवनस्तोयदैरिव ॥ ५१

साश्वारोहांश्च तुरगान् पत्तीन् नैकसहस्रशः ।
व्यपोथयत सङ्ग्रामे क्रुद्धो रुद्रः पशूनिव ॥ ५२

[1]शून्यमायोधनं कृत्वा शरवर्षैस्समन्ततः ।
अभ्यधावत मद्रेशं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ५३

तस्य तच्चरितं दृष्ट्वा सङ्ग्रामे भीमकर्मणः ।
वित्रेसुस्तावकास्सर्वे शल्यस्त्वेनं समभ्ययात् ॥ ५४

ततस्तु तौ सुसंरब्धौ प्रध्माप्य सलिलोद्भवौ ।
समाहूय तदाऽन्योन्यं भर्त्सयन्तौ समीयतुः ॥ ५५

शल्यस्तु शरवर्षेण युधिष्ठिरमपीडयत् ।
मद्रराजं च कौन्तेयश् शरवर्षैरवाकिरत् ॥ ५६

---

1. ख—अर्धत्रयं नास्ति

व्यदृश्येतां तदा राजन् कङ्कपत्त्रिभिराहवे ।
उद्भिन्नरुधिरौ तत्र मद्रराजयुधिष्ठिरौ ॥ ५७

पुष्पिताविव राजन्तौ वने शाल्मलिकिंशुकौ ।
दीप्यमानौ महात्मानौ प्राणद्यूतेषु दुर्मदौ ॥ ५८

दृष्ट्वा सैन्यानि सर्वाणि नाध्यवस्यंस्तयोर्जयम् ।
हत्वा मद्राधिपं पार्थो भोक्ष्यतेऽद्य वसुन्धराम् ॥ ५९

शल्यो वा पाण्डवं हत्वा दद्याद्दुर्योधनाय गाम् ।
इति वा निश्चयो नाभूद् योधानां तत्र भारत ॥ ६०

प्रदक्षिणमभूत् सर्वं धर्मराजस्य युध्यतः ।
ततश्शरशतं शल्यो मुमोचाशु युधिष्ठिरे ॥ ६१

धनुश्चास्य शिताग्रेण बाणेन निरकृन्तत ॥ ६१॥

सोऽन्यत् कार्मुकमादाय शल्यं शरशतैस्त्रिभिः ।
अविध्यत् कार्मुकं चास्य क्षुरप्रेण न्यकृन्तत ॥ ६२॥

अथास्य निजघानाश्वांश् चतुरो नतपर्वभिः ।
द्वाभ्यामथ शिताग्राभ्याम् उभौ वै पार्ष्णिसारथी ॥ ६३॥

ततोऽस्य दीप्यमानेन पीतेन निशितेन च ।
प्रमुखे वर्तमानस्य भल्लेनापाहरद्ध्वजम् ॥ ६४॥

ततः प्रभग्नं तत् सैन्यं धार्तराष्ट्रमरिन्दम ॥ ६५

ततो मद्राधिपं द्रौणिर् अभ्यधावत् तथा कृतम् ।

आरोप्य चैनं स्वरथं त्वरमाणः प्रदुद्रुवे ॥ ६६

मुहूर्तमिव तान् हत्वा नर्दमाने युधिष्ठिरे ।
स्थित्वा ततो मद्रपतिर् [1]अन्यं स्यन्दनमास्थितः ॥ ६७

विधिवत् कल्पितं शुभ्रं महाम्बुदनिनादिनम् ।
न्यस्तयन्त्रोपकरणं द्विषतां रोमहर्षणम् ॥ ६८

[2]सुकूवरं सुचक्राक्षं विधेयाश्वं सुसारथिम् ॥ ६८॥

अथान्यद्धनुरादाय बलवद्वेगवत्तरम् ।
युधिष्ठिरं मद्रपतिर् विद्ध्वा सिंह इवानदत् ॥ ६९॥

ततस्स शरवर्षेण पर्जन्य इव वृष्टिमान् ।
अभ्यवर्षदमेयात्मा क्षत्रियान् क्षत्रियर्षभः ॥ ७०॥

सात्यकिं दशभिर्विद्ध्वा भीमसेनं त्रिभिश्शरैः ।
सहदेवं त्रिभिर्विद्ध्वा युधिष्ठिरमपीडयत् ॥ ७१॥

तांस्तानन्यान् महेष्वासान् साश्वान् सरथकुञ्जरान् ।
[3]अर्दयामास विशिखैर् मद्रराजः प्रतापवान् ॥ ७२॥

कुञ्जरान् कुञ्जरारोहान् अश्वानश्वप्रधाविनः ।
रथांश्च रथिभिस्सार्धं जघान रथिनां वरः ॥ ७३॥

---

1. अ—इतो दश पादा न सन्ति
2. ख-ब—इदमर्धं नास्ति
3. ख-ब—इदमर्धं नास्ति

बाहूंश्च चिच्छेद तदा सायुधान् [1]केतनानि च ।
चकार च महीं योधैस् तीर्णां वेदीं कुशैरिव ॥ ७४॥

तथा तमरिसैन्यानि घ्नन्तं मृत्युमिवान्तकम् ।
परिवव्रुर्भृशं क्रुद्धाः पाण्डुपाञ्चालसोमकाः ॥ ७५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
॥ ७४ ॥ शल्यवधपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[ अस्मिन्नध्याये ७५॥ श्लोकाः ]



## ॥ षोडशोऽध्यायः ॥

युधिष्ठिरशल्ययोर्युद्धम् ॥ १ ॥ युधिष्ठिरेण शल्यस्य वधः ॥ २ ॥

सञ्जयः—

तं भीमसेनश्च शिनेश्च नप्ता
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
समापतन् भीमबलेन राजन्
पर्यापुरन्योन्यमथाह्वयन्तः ॥ १

ततस्तु शूरास्समरे नरेन्द्रा
मद्रेश्वरं प्राप्य युधां वरिष्ठम् ।
आवार्य चैनं समरे नृवीरा
जघ्नुश्शितैः पत्रिभिरुग्रवेगैः ॥ २

1. क—केवलांस्तथा

संरक्षितो भीमसेनेन राजा
  माद्रीसुताभ्यामथ माधवेन ।
मद्राधिपं पत्रिभिरुग्रवेगैस्
  स्तनान्तरे धर्मसुतो निजघ्ने ॥ ३

ततो रणे तावकानां रथौघास्
  समीक्ष्य मद्राधिपतिं शरार्तम् ।
पर्यावव्रुः प्रवरास्सर्वयोधा
  दुर्योधनस्यानुमते समन्तात् ॥ ४

[1]ततो द्रुतं मद्रजनाधिपो रणे
  युधिष्ठिरं सप्तभिः प्रत्यविध्यत् ।
तं चापि पार्थो नवभिः पृषत्कैर्
  विव्याध राजंस्तुमुले महात्मा ॥ ५

आकर्णपूर्णायतसम्प्रयुक्तैश्
  शरैस्तदा संयति तैलधौतैः ।
अन्योन्यमाच्छादयतां महारथौ
  मद्राधिपश्चापि युधिष्ठिरश्च ॥ ६

ततस्तु तूर्णं समरे महारथौ
  परस्परस्यान्तरमीक्षमाणौ ।

1. ख—अयं पादो नास्ति

शरैर्भृशं विव्यधतुर्नृपोत्तमौ
महाबलौ शत्रुभिरप्रधृष्यौ ॥ ७

ततो धनुर्ज्यातलनिस्स्वनो महान्
महेन्द्रवज्राशनितुल्यनिस्स्वनः ।
परस्परं बाणशतैर्महात्मनोः
प्रवर्षतोर्मद्रपपाण्डवाग्र्ययोः ॥ ८

तौ चेरतुर्व्याघ्रशिशुप्रकाशौ
महाहवेष्वामिषगर्धिनाविव ।
विषाणिनौ नागवराविवोल्बणौ
ततक्षतुस्संयुगजातदर्पौ ॥ ९

ततश्च मद्राधिपतिर्महात्मा
युधिष्ठिरं भीमबलं प्रसह्य ।
विव्याध गाढं हृदि संशितेन
शरेण सूर्याग्निसमप्रभेण ॥ १०

ततोऽतिविद्धोऽथ युधिष्ठिरोऽपि
सुसम्प्रयुक्तेन शरेण राजन् ।
जघान मद्राधिपतिं महात्मा
मुदं च लेभे वृषभः कुरूणाम् ॥ ११

ततो मुहूर्तादिव पार्थिवेन्द्रो
  लब्ध्वा संज्ञां क्रोधसंरक्तनेत्रः ।
शरेण पार्थं त्वरितो जघान
  सहस्रनेत्रप्रतिमप्रभावः ॥ १२

त्वरंस्ततो धर्मसुतो महात्मा
  शल्यस्य रुष्टो नवभिः पृषत्कैः ।
भित्वा ह्युरस्तपनीयं च वर्म
  जघान षड्भिस्त्वपरैः पृषत्कैः ॥ १३

ततस्तु मद्राधिपतिः प्रहृष्टो
  धनुः प्रगृह्य व्यसृजत् पृषत्कान् ।
द्वाभ्यां शराभ्यां च तथैव राजंश्
  चिच्छेद चापं कुरुपुङ्गवस्य ॥ १४

नवं ततोऽन्यत् समरे प्रगृह्य
  [1]राजा धनुर्घोरतरं महात्मा ।
शल्यं तु विव्याध शरैस्समन्ताद्
  यथा महेन्द्रो नमुचिं शिताग्रैः ॥ १५

ततस्तु शल्यो नवभिः पृषत्कैर्
  भीमस्य राज्ञश्च युधिष्ठिरस्य ।

1. क-घ—रेजे ख—राजन्

[1]निकृत्य रौक्मे वरवर्मणी तयोर्
विदारयामास [2]च तौ महात्मा ॥ १६

ततोऽपरेण ज्वलनोग्रतेजसा
क्षुरेण राज्ञो धनुरुन्ममाथ ।
कृपश्च तस्यैव जघान सूतम्
षड्भिश्शरैस्सोऽभिमुखः पपात ॥ १७

मद्राधिपश्चापि युधिष्ठिरस्य
शरैश्चतुर्भिर्निजघान वाहान् ।
वाहांश्च हत्वाऽप्यकरोन्महात्मा
योधक्षयं धर्मसुतस्य राज्ञः ॥ १८

[3]यदद्भुतं कर्म न शक्यमन्यैस्
सुदुस्सहं तत् कृतवन्तमेकम् ।
शल्यं नरेन्द्रस्य विषण्णभावाद्
विचिन्तयामास [4]मृदङ्गकेतुः ॥ १९

किमेतदिन्द्रावरजस्य वाक्यं
मोघं भवत्यद्य विधेर्बलेन ।

---

1. घ—इतः सप्त पादा न सन्ति  2. ख—भुजौ
3. ख—श्लोकद्वयं नास्ति  4. घ—मृगाङ्क

जहीति शल्यं ह्यवदत्तदाजौ
न लोकनाथस्य वचोऽन्यथा स्यात् ॥ २०

तथाऽऽतुरे राजनि भीमसेनो
मद्राधिपस्याशु ततो महात्मा ।
छित्वा धनुर्वेगवता शरेण
द्वाभ्यामविध्यत् सुभृशं नरेन्द्रम् ॥ २१

तथाऽपरेणास्य जहार यन्तुः
कायाच्छिरस्सन्नहनीयमुर्व्याम् ।
जघान चाश्वांश्चतुरस्सुशीघ्रांस्
तथा ध्वजं वै कुपितो वृकोदरः ॥ २२

तमग्रणीस्सर्वधनुर्धराणाम्
एकं चरन्तं समरेऽतिवेगम् ।
भीमश्शतेनाविकिरच्छराणां
माद्रीसुतस्सहदेवस्तथैव ॥ २३

तैस्सायकैर्मोहितं वीक्ष्य शल्यं
भीमश्शरैरस्य चकर्त वर्म ।
स भीमसेनेन निकृत्तवर्मा
मद्राधिपश्चर्मसहस्रधारम् ॥ २४

प्रगृह्य खड्गेन रथान्महात्मा
प्रस्कन्द्य कुन्तीसुतमभ्यधावत् ।
छित्वा रथेषां नकुलस्य सोऽथ
युधिष्ठिरं भीमबलोऽभ्यधावत् ॥ २५

तं चापि राजानमथोत्पतन्तं
क्रुद्धं यथैवान्तकमापतन्तम् ।
धृष्टद्युम्नो द्रौपदेयाश्शिखण्डी
शिनेश्च नप्ता सहसा परीयुः ॥ २६

अथास्य चर्माप्रतिमं न्यकृन्तद्
भीमो महात्मा दशभिः पृषत्कैः ।
खड्गं च भल्लेन निकृत्य मुष्टौ
नदन् प्रहृष्टस्तव सैन्यमध्ये ॥ २७

तत् कर्म भीमस्य समीक्ष्य हृष्टास्
ते पाण्डवानां प्रवरा रथौघाः ।
नादं प्रचक्रुर्भृशमुत्स्मयन्तश्
शङ्खांश्च दध्मुश्शशिसन्निकाशान् ॥ २८

तेनाथ शब्देन सुभीषणेन
तवाभितप्तं बलमप्रधृष्यम् ।

स्वेदाभिभूतं रुधिरोक्षिताङ्गं
　विसंज्ञकल्पं च तथा विषण्णम् ॥ २९

स मद्रराजस्सहसा विकीर्णो
　भीमाग्रगैः पाण्डवयोधमुख्यैः ।
युधिष्ठिरस्याभिमुखो जवेन
　सिंहो यथा मृगहेतोः प्रयातः ॥ ३०

स धर्मराजो निहताश्वसूतः
　क्रोधेन दीप्तज्वलनप्रकाशः ।
दृष्ट्वा च मद्राधिपतिं सतूर्णं
　समभ्यधावत् तमरिं बलेन ॥ ३१

गोविन्दवाक्यं त्वरितो विचिन्त्य
　दध्रे मतिं शल्यविनाशनाय ।
स धर्मराजो निहताश्वसूतो
　रथेऽतिष्ठच्छक्तिमेवाभिकाङ्क्षन् ॥ ३२

तत्रापि शल्यस्य निशाम्य कर्म
　तमात्मनो भागमथावशिष्टम् ।
कृत्वा मनश्शत्रुवधे महात्मा
　यथोक्तमिन्द्रावरजस्य चक्रे ॥ ३३

स धर्मराजो मणिहेमदण्डां
जग्राह शक्तिं ज्वलनप्रकाशाम् ।
नेत्रे च दीप्ते सहसा विवृत्य
मद्राधिपं क्रुद्धमना निरैक्षत् ॥ ३४

निरीक्षितो धर्मसुतेन राज्ञा
पूतात्मना निर्हृतकल्मषेण ।
अभून्न यद्भस्म स मद्रराजस्
तदद्भुतं मे प्रतिभाति राजन् ॥ ३५

ततस्तु शक्तिं रुचिरोग्रदण्डां
मणिप्रबद्धां ज्वलितां प्रदीप्ताम् ।
चिक्षेप वेगात् सुभृशं महात्मा
मद्राधिपाय प्रवरः कुरूणाम् ॥ ३६

दीप्तामथैनां महता बलेन
सविष्फुलिङ्गां सहसा पतन्तीम् ।
प्रैक्षन्त सर्वे कुरवस्समेता
यथा युगान्ते महतीमिवोल्काम् ॥ ३७

तां कालरात्रीमिव पाशहस्तां
यमस्य धात्रीमिव चोग्ररूपाम् ।

सब्रह्मदण्डप्रतिमाममोघां
ससर्ज यत्तो युधि धर्मराजः ॥ ३८

गन्धस्रगग्र्याशनपानभक्षैर्
अभ्यर्चितां पाण्डुसुतैः प्रयत्नात् ।
संवर्तकाग्निप्रतिमां ज्वलन्तीं
कृत्यामथर्वाङ्गिरसीमिवोग्राम् ॥ ३९

ईशानहेतोः प्रतिनिर्मितां तां
त्वष्ट्रा रिपूणामसुदेहभक्षाम् ।
भूम्यन्तरिक्षाद्रिजलाश्रयाणि
प्रसह्य भूतानि निहन्तुमीशाम् ॥ ४०

घण्टापताकामणिवज्रभूषितां
वैडूर्यचित्रां तपनीयदण्डाम् ।
त्वष्ट्रा प्रयत्नान्नियमेन क्लृप्तां
ब्रह्मद्विषामन्तकरीममोघाम् ॥ ४१

बलप्रयत्नादनिरोधवेगां
मन्त्रैश्च घोरैरभिमन्त्र्य यत्नात् ।
ससर्ज मार्गेण स चाम्बरेण
वधाय मद्राधिपतेस्तदानीम् ॥ ४२

हतो ह्यसावित्यभिगर्जमानो
रुद्रोऽन्धकायान्तकरं यथेपुम् ।
प्रसार्य बाहुं सुदृढं सुपाणिं
क्रोधेन नृत्यन्निव दर्पहन्ता ॥ ४३

[1]स्फुरत्प्रभामण्डलमंशुजालैर्
धर्मात्मनो मद्रविनाशकाले ।
पुरत्रयप्रोत्सरणे पुरस्ता-
न्माहेश्वरं रूपमभून् तदानीम् ॥ ४४

आवर्तनाकुञ्चितबाहुदण्डस्
सन्ध्याविहारी तनुवृत्तमध्यः ।
विशालवक्षा भगवान् हरो यथा
सुदुर्निरीक्ष्योऽभवदर्जुनाग्रजः ॥ ४५

तां सर्वशक्त्या प्रहितां सशक्तिं
युधिष्ठिरेणाप्रतिवार्यवीर्याम् ।
प्रतिग्रहायाभिननन्द शल्यस्
सम्यग्धुतामग्निरिवाज्यधाराम् ॥ ४६

सा तस्य मर्माणि विदार्य शुभ्रम्
उरो विशालं च तथैव मर्म ।

1. ख—श्लोकद्वयं नास्ति

विवेश गां तोयमिवाप्रसक्ता
यशो विशालं नृपतेर्हरन्ती ॥ ४७

नासाक्षिकर्णास्यविनिस्सृतेन
प्रस्यन्दता च व्रणसम्भवेन ।
संसिक्तगात्रो रुधिरेण सोऽभूत्
क्रौञ्चो यथा स्कन्दहतो महाद्रिः ॥ ४८

प्रसार्य बाहू स रथाद्गतो गां
सञ्छिन्नवर्मा कुरुनन्दनेन ।
महेन्द्रवीर्यप्रतिमो महात्मा
वज्राहतं शृङ्गमिवाचलस्य ॥ ४९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ७४ ॥ शल्यवधपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[ अस्मिन्नध्याये ४९ श्लोकाः ]

## ॥ सप्तदशोऽध्यायः ॥

युधिष्ठिरेण शल्यानुवधः ॥ १ ॥ सात्यकिना कृतवर्म पराजयः ॥ २ ॥ सङ्कुलयुद्धम् ॥ ३ ॥

सञ्जयः—

ततो निपतितो भूमाविन्द्रध्वज इवोच्छ्रितः ।
बाहू प्रसार्याभिमुखो धर्मराजस्य मद्रराट् ॥ १

[1]शक्त्या विभिन्नहृदयो विप्रयुक्तायुधध्वजः ।
[2]हतो निपतितो भूमाविन्द्रध्वज इव स्थितः ॥ २

स तथा भिन्नसर्वाङ्गो रुधिरेण समुक्षितः ।
प्रत्युद्गत इव प्रेम्णा भूम्या स नरपुङ्गवः ॥ ३

प्रियया कान्तया कान्तः पतमान इवोरसि ।
चिरं भुक्त्वा वसुमतीं प्रियां कान्तामिव प्रभुः ॥ ४

सर्वैरङ्गैस्समाश्लिष्य प्रसुप्त इव सोऽभवत् ।
धर्म्ये धर्मात्मना युद्धे निहतो धर्मसूनुना ॥ ५

सम्यग्घुत इवोत्सृष्टः प्रशान्तोऽग्निरिवाध्वरे ॥ ५॥
[3]तं शान्तमपि मद्रेशं लक्ष्मीर्नैव व्यमुञ्चत ॥ ६

ततो युधिष्ठिरश्चापम् आदायेन्द्रधनुष्प्रभम् ।
व्यधमद्द्विषतस्सङ्ख्ये खगराडिव पन्नगान् ॥ ७

---

1. ख-ब—अयं श्लोको नास्ति 2. क—इदमर्धं नास्ति
3. ख-ब—शक्त्या विभिन्नहृदयं विप्रविद्धायुधध्वजम् । [अधिकः पाठः]

[1]देहांस्तु निशितैर्भल्लै रिपूणां नाशयन् क्षणात् ॥ ७॥

ततः पार्थस्य बाणौघैर् आवृतास्सैनिकास्तव ।
निमीलिताक्षाः [2]कूजन्ति भृशमन्योन्यकर्शिताः ॥ ८॥

सन्तप्ता बभ्रमुश्चैव विशस्तायुधजीविताः ॥ ९

ततश्शल्ये निपतिते मद्रराजानुजो युवा ।
भ्रातुस्सर्वैर्गुणैर्युक्तो रथी पाण्डवमभ्ययात् ॥ १०

विव्याध च नरश्रेष्ठो नाराचैर्बहुभिस्त्वरन् ।
हतस्यापचितिं भ्रातुश् चिकीर्षन् युद्धदुर्मदः ॥ ११

तं विव्याधाशुगैष्षड्भिर् धर्मराज[3]स्त्वरन्निव ।
कार्मुकं चास्य चिच्छेद क्षुराभ्यां ध्वजमेव च ॥ १२

ततोऽस्य दीप्यमानेन सुदृढेन शितेन च ।
प्रमुखे वर्तमानस्य भल्लेनापाहरच्छिरः ॥ १३

सकुण्डलं तद्ददृशे पतमानं शिरो [4]रणे ।
पुण्यक्षयमिव प्राप्य पुनस्स्वर्गादिव च्युतः ॥ १४

तस्यापकृष्टशीर्षं तच् छरीरमपतद्रथात् ।
रुधिरेणावसिक्ताङ्गं दृष्ट्वा सैन्यमभज्यत ॥ १५

---

1. अ—नास्तीदमर्धम्
2. अ-ख—क्षिण्वन्तः  ब—कुर्वन्ति
3. ब—स्स्मयन्निव
4. क-ख—रथात्

विचित्रकवचे तस्मिन् हते मद्राधिपानुजे ।
हाहाकारं विकुर्वाणाः कुरवो विप्रदुद्रुवुः ॥ १६

शल्यानुजं हतं दृष्ट्वा तावकास्त्यक्तजीविताः ।
वित्रेसुः पाण्डवभयात् सर्वे ध्वस्तास्तदा भृशम् ॥ १७

तांस्तथा भज्यमानांस्तु कौरवान् भरतर्षभ ।
शिनेर्नप्ता किरन् बाणैर् अभ्यवर्तत सात्यकिः ॥ १८

[1]तमायान्तं महेष्वासम् अप्रमत्तं दुरासदम् ।
हार्दिक्यस्त्वरितो राजन् प्रत्यगृह्णादभीतवत् ॥ १९

तौ समेतौ महात्मानौ वार्ष्णेयावपराजितौ ।
हार्दिक्यस्सात्यकिश्चैव सिंहाविव बलोत्कटौ ॥ २०

इषुभिर्विमलाभासैश् छादयन्तौ परस्परम् ।
अर्चिर्भिरिव सूर्यस्य दिवाकरसमप्रभौ ॥ २१

चापमार्गबलोद्भूतान् मार्गणान् वृष्णिसिंहयोः ।
आकाशे समपश्याम पतङ्गानिव शीघ्रगान् ॥ २२

सात्यकिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिश्शरैः ।
चापमेकेन चिच्छेद हार्दिक्यो नतपर्वणा ॥ २३

तन्निकृत्तं धनुश्श्रेष्ठम् अपास्य शिनिपुङ्गवः ।
अन्यदादत्त वेगेन धनुर्जलदनिस्स्वनम् ॥ २४

---

1. ख-घ—तमापतन्तं शीघ्रेषुमप्रधृष्यं दुरासदम् ।

तदादाय धनुश्श्रेष्ठं वरिष्ठस्सर्वधन्विनाम् ।
हार्दिक्यं दशभिर्बाणैः प्रत्यविध्यन् स्तनान्तरे ॥ २५

ततो युगं रथेषां च भित्वा भल्लैस्सुसंशितैः ।
अश्वांश्चास्यावधीत् तूर्णं तथोभौ पार्ष्णिसारथी ॥ २६

हार्दिक्यं विरथं दृष्ट्वा कृपश्शारद्वतः प्रभो ।
अपोवाह ततः क्षिप्रं रथमारोप्य वीर्यवान् ॥ २७

मद्रराजे हते राजन् विरथे कृतवर्मणि ।
[1]दुर्योधनबलं सर्वं पुनरासीत् पराङ्मुखम् ॥ २८

स्वे परे नावबुध्यन्त सैन्ये तु रजसा वृते ।
बलं तु हतभूयिष्ठं त्रस्तमासीत् पराङ्मुखम् ॥ २९

ततो मुहूर्तात्तेऽपश्यन् रजो भौमं समुत्थितम् ।
विविधैश्शोणितस्रावैः प्रशान्तं भरतर्षभ ॥ ३०

ततो दुर्योधनो दृष्ट्वा भग्नं स्वबलमन्तिकात् ।
जवेनापततः पार्थान् [2]एकस्सर्वानवारयत् ॥ ३१

[3]ततो मुहूर्तात् तेऽपश्यंस् तव योधास्समागतान् ।
पाण्डवान् सरथान् दृष्ट्वा धृष्टद्युम्नं च पार्षतम् ॥ ३२

आनर्तं च दुराधर्षं शितैर्बाणैरवारयत् ।

---

1. क—अर्धत्रयं नास्ति　　2. अ—परिघस्सर्वधन्विनाम्
3. क-ख-घ—इदमर्धं नास्ति

तं परे नात्यवर्तन्त मर्त्या मृत्युमिवागतम् ॥ ३२

अथान्यं रथमास्थाय हार्दिक्योऽपि न्यवर्तत ॥ ३३॥

ततो युधिष्ठिरो राजा त्वरमाणो महारथः ।
चतुर्भिर्निजघानाश्वान् पत्रिभिः कृतवर्मणः ॥ ३४॥

विव्याध गौतमं चापि षड्भिर्भल्लैस्सुतेजनैः ॥ ३५

अश्वत्थामा ततो राज्ञा हताश्वं विरथीकृतम् ।
समपोवाह हार्दिक्यं स्वरथेन युधिष्ठिरात् ॥ ३६

ततश्शारद्वतोऽष्टाभिः प्रत्यविद्ध्यद्युधिष्ठिरम् ।
विव्याध चाश्वान् निशितैस् तस्याष्टाभिश्शिलीमुखैः ॥ ३७

एवमेतन्महाराज युद्धशेषमवर्तत ।
तव दुर्मन्त्रिते घोरं तव पुत्रस्य भारत ॥ ३८

तस्मिन् महेष्वासवरे विशस्ते
सङ्ग्राममध्ये कुरुपुङ्गवेन ।
पार्थास्समस्ताः परमप्रहृष्टाश्
शङ्खांश्च दध्मुर्हतमीक्ष्य शल्यम् ॥ ३९

युधिष्ठिरं च प्रशशंसुराजौ
सुराः पुरा वृत्रवधे यथेन्द्रम् ।

चक्रुश्च नानाविध[1]वाद्यशब्दान्
निनादयन्तो वसुधां समन्तात् ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ७४ ॥ शल्यवधपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[ अस्मिन्नध्याये ४० श्लोकाः ]

## ॥ अष्टादशोऽध्यायः ॥

सङ्कुलयुद्धम् ॥

सञ्जयः—

शल्ये तु निहते राजन् मद्रराजपदानुगाः ।
रथास्सप्तशतं वीरा निर्ययुर्महतो बलात् ॥ १

दुर्योधनस्तु द्विरदम् आरुह्याचलसन्निभम् ।
छत्रेण ध्रियमाणेन वीज्यमानश्च चामरैः ॥ २

न गन्तव्यं न गन्तव्यम् इति मद्रानवारयत् ॥ २॥
दुर्योधनेन ते वीरा वार्यमाणाः पुनः पुनः ॥ ३
[2]युधिष्ठिरं जिघांसन्तः पाण्डूनां प्राविशन् बलम् ॥ ३॥

ते तु शूरा महाराज कृतचित्तास्स्म योधने ।
धनुश्शब्दं महत् कृत्वा सहायुध्यन्त पाण्डवैः ॥ ४॥

1. ख-ध—शङ्ख　　2. घ—श्लोकत्रयं नास्ति

दृष्ट्वा तु निहतं शल्यं धर्मपुत्रं च पीडितम् ।
मद्रराजप्रिये युक्तैर् मद्रकाणां महारथैः ॥ ५॥

आजगाम ततः पार्थो गाण्डीवं विक्षिपन् धनुः ।
पूरयन् रथघोषेण दिशस्सर्वा महारथः ॥ ६॥

ततोऽर्जुनश्च भीमश्च माद्रीपुत्रौ च पाण्डवौ ।
सात्यकिश्च नरव्याघ्रो द्रौपदेयाश्च सर्वशः ॥ ७॥

धृष्टद्युम्नश्शिखण्डी च पाञ्चालैस्सहसोमकैः ।
युधिष्ठिरं परीप्सन्तश् समन्तात् पर्यवारयन् ॥ ८॥

ते समन्तात् परिवृताः पाण्डवैः पुरुषर्षभैः ।
क्षोभयन्ति स्म तां सेनां मकरास्सागरं यथा ॥ ९॥

पुरोवातेन गङ्गेव क्षोभ्यमाणा महानदी ।
अक्षोभ्यत महाराज पाण्डूनां ध्वजिनी पुनः ॥ १०॥

प्रस्कन्द्य महतीं सेनां त्यक्तात्मानो [1]महारथाः ।
वृक्षानिव महावाताः कम्पयन्ति स्म तावकाः ॥ ११॥

बहवश्चुक्रुशुस्तत्र क च राजा युधिष्ठिरः ।
भ्रातरो वाऽस्य ते शूरा दृश्यन्ते नेह केचन ॥ १२॥

पाञ्चालानां महावीर्यश् शिखण्डी च महारथः ॥ १३

धृष्टद्युम्नोऽथ शैनेयो द्रौपदेयाश्च सर्वशः ।

एवं तान् वादिनश्शूरा द्रौपदेया महारथाः ॥　　१४

अभ्यघ्नन् युयुधुश्चैव मद्रराजपदानुगान् ॥　　१४॥

चक्रैर्विमथितैः केचित् केचिच्छिन्नैर्महारथैः ।
प्राहश्यन्तैव समरे तावका निहताः परैः ॥　　१५॥

आलोक्य पाण्डवान् युद्धे योधा राजन् समन्ततः ।
वार्यमाणा ययुस्सर्वे तव पुत्रेण भारत ॥　　१६॥

दुर्योधनस्तु तान् वीरान् वारयामास सान्त्वयन् ।
न चास्य शासनं कश्चित् तत्र चक्रे महारथः ॥　　१७॥

ततो गान्धारराजस्य पुत्रश्शकुनिरब्रवीन् ।
दुर्योधनं महाराज वचनं वचनक्षमम् ॥　　१८॥

शकुनिः—

किं नस्सम्प्रेक्षमाणानां मद्राणां हन्यते बलम् ।
न युक्तमेतत् समरे त्वयि तिष्ठति भारत ॥　　१९॥

सहितैर्नाम योद्धव्यम् इत्येवं समयः कृतः ।
अथ कस्मात् परानेवं घ्नतो मर्षयसेऽनघ ॥　　२०॥

दुर्योधनः—

वार्यमाणा मया पूर्वं नैते कुर्वन्ति शासनम् ।
एते हि निहतास्सर्वे प्रस्कन्दन्तोऽरिवाहिनीम् ॥　　२१॥

शकुनिः—

न भर्तुश्शासनं शूरा रणे कुर्वन्त्यमर्षिताः ।
अलं रोद्धुं तवैतेषां नायं काल उपेक्षितुम् ॥ २२॥

यामस्सर्वेऽत्र सम्भूय सवाजिरथकुञ्जराः ।
परित्रातुं महेष्वासान् मद्रराजपदानुगान् ॥ २३॥

अन्योन्यं परिरक्षामो यत्नेन महता नृप ।
एवं सर्वे तु सञ्चिन्त्य प्रयामो यत्र सैनिकाः ॥ २४॥

सञ्जयः—

एवमुक्तस्ततो राजा सैन्येन महता वृतः ।
प्रययौ सिंहनादेन कम्पयानो वसुन्धराम् ॥ २५॥

घ्नत गृह्णीत युध्यध्वं प्रहरध्वं निकृन्तत ।
इत्यासीत् तुमुलश्शब्दस् तव सैन्यस्य भारत ॥ २६॥

पाण्डवाश्च रणे दृष्ट्वा मद्रराजपदानुगान् ।
सहितास्सन्न्यवर्तन्त गुल्ममास्थाय मध्यमम् ॥ २७॥

ते मुहूर्ताद्रणे वीरा हतदर्पा विशां पते ।
निहताः प्रत्यदृश्यन्त मद्रराजपदानुगाः ॥ २८॥

ततो नस्सम्प्रयातानां हतामित्रास्तरस्विनः ।
हृष्टाः किलकिलाशब्दम् अकुर्वन् सहिताः परे ॥ २९॥

अथोत्थितानि मुण्डानि समदृश्यन्त भारत ।

पपात महती चोल्का मध्येनादित्यमण्डलात् ॥ ३०॥

रथैर्भग्नैर्युगाक्षैश्च निहतैश्च महारथैः ।
अश्वैर्निपातितैश्चैव दृश्यन्ते स्म समन्ततः ॥ ३१॥

वातायमानैस्तुरगैर् युगासक्तैस्समन्ततः ।
अकृष्यन्त महाराज योधास्तत्र रणाजिरे ॥ ३२॥

भग्नचक्रान् रथान् केचिद् अवहंस्तुरगा रणे ।
रथार्धं केचिदादाय दिशो दश विबभ्रमुः ॥ ३३॥

तत्र तत्र च दृश्यन्ते योक्त्रैश्श्लिष्टास्स्म वाजिनः ॥ ३४

रथिनः पात्यमानाश्च व्यदृश्यन्त नरोत्तम ।
गगनात् प्रच्युतास्सिद्धाः पुण्यानामिव सङ्क्षये ॥ ३५

निहतेषु च शूरेषु मद्रराजानुगेषु च ।
अस्मानापततश्चापि दृष्ट्वा पार्था महारथाः ॥ ३६

अभ्यवर्तन्त वेगेन जयगृध्राः प्रहारिणः ॥ ३६॥

बाणशब्दरवान् कृत्वा विमिश्राञ् शङ्खनिस्वनैः ॥ ३७

अस्मांस्तु पुनरासाद्य लब्धलक्षाः प्रहारिणः ।
शरासनानि धून्वानास् सिंहनादान् प्रचक्रिरे ॥ ३८

ततो हतमभिप्रेक्ष्य मद्रराजबलं महत् ।
मद्रराजं च समरे दृष्ट्वा शूरं निपातितम् ॥ ३९

दुर्योधनबलं सर्वं पुनरासीत् पराङ्मुखम् ॥ ३९॥

वध्यमानं महाराज पाण्डवैर्जितकाशिभिः ।
दिशो भेजे च सम्भ्रान्तं त्रासितं दृढधन्विभिः ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ७४ ॥ शल्यवधपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[ अस्मिन्नध्याये ४०॥ श्लोकाः ]



## ॥ एकोनविंशोऽध्यायः ॥



सङ्कुलयुद्धम् ॥

सञ्जयः—

पातिते युधि दुर्धर्षे मद्रराजे महारथे ।
[1]हतप्रवीरा विध्वस्ता निकृत्ता निशितैश्शरैः ॥ १

तावकास्तव पुत्राश्च प्रायशो विमुखा भवन् ।
वणिजो नावि भिन्नायां यथाऽगाधे महार्णवे ॥ २

अपारे पारमिच्छन्तो हते शूरे महात्मनि ।
मद्रराजे महाराज वित्रेसुश्शरविक्षताः ॥ ३

अनाथा नाथमिच्छन्तो मृगास्सिंहार्दिता इव ।
वृषा यथा भग्नश‍ृङ्गाश् शीर्णदन्ता गजा इव ॥ ४

1. क-ख-ब—इदमर्धं नास्ति

मध्याह्ने प्रत्यपायाता निर्जिता धर्मसूनुना ।
न सन्धातुमनीकानि न च राजन् पराक्रमे ॥ ५

आसीद्बुद्धिर्हते शल्ये तव योधस्य कस्य चित् ।
भीष्मे द्रोणे च निहते सूतपुत्रे च भारत ॥ ६

यद्दुःखं तव योधानां भयं चासीद्विशां पते ।
तद्भयं स च नश्शोको भूय एवाभ्यवर्धत ॥ ७

निराशाश्च जये तस्मिन् हते शल्ये महारथे ।
हतप्रवीरा विध्वस्ता निकृत्ता निशितैश्शरैः ॥ ८

मद्रराजे हते राजन् योधास्ते प्राद्रवन् भयात् ॥ ८॥

अश्वानन्ये गजानन्ये रथानन्ये महारथाः ।
आरुह्य जवसम्पन्नाः पादाताः प्राद्रवन् भयात् ॥ ९॥

द्विसाहस्रं च मातङ्गा गिरिरूपाः प्रहारिणः ।
सम्प्राद्रवन् हते शल्ये अङ्कुशाङ्गुष्ठचोदिताः ॥ १०॥

ते रणाद्भरतश्रेष्ठ तावकाः प्राद्रवन् दिशः ।
धावन्तश्चाप्यदृश्यन्त श्वसमानाश्शरातुराः ॥ ११॥

तान् प्रभग्नान् द्रुतान् दृष्ट्वा हतोत्साहान् पराजितान् ।
अभ्यद्रवन्त पाञ्चालाः पाण्डवाश्च जयैषिणः ॥ १२॥

बाणशब्दरवश्चापि सिंहनादश्च पुष्कलः ।
शङ्खशब्दश्च शूराणां दारुणस्समपद्यत ॥ १३॥

दृष्ट्वा तु तावकं सैन्यं भयत्रस्तं प्रविद्रुतम् ।
अन्योन्यं समभाषन्त पाञ्चालाः पाण्डवैस्सह ॥ १४॥

पाञ्चालाः—

अद्य राजा सत्यधृतिर् हतामित्रो युधिष्ठिरः ।
अद्य दुर्योधनो हीनो दीप्तया नृपतिश्रिया ॥ १५॥

अद्य श्रुत्वा हतं पुत्रं धृतराष्ट्रो जनेश्वरः ।
निस्संज्ञः पतितो भूमौ कश्मलं प्रतिपत्स्यते ॥ १६॥

अद्य जानाति कौन्तेयं समर्थं सर्वधन्विनाम् ।
अद्यात्मानं च दुर्मेधा गर्हयिष्यति पापकृत् ॥ १७॥

अद्य क्षत्तुर्वचस्सत्यं स्मरतां ब्रुवतो हितम् ॥ १८

अद्यप्रभृति पार्थस्य प्रेष्यभूतो ह्युपाचरन् ।
विजानातु नृपो दुःखं यत् प्राप्तं पाण्डुनन्दनैः ॥ १९

अद्य कृष्णस्य माहात्म्यं जानातु स महीपतिः ।
अद्यार्जुनधनुर्घोषं घोरं जानातु संयुगे ॥ २०

[1]अस्त्राणां च बलं सर्वं बाह्वोश्च बलमाहवे ॥ २०॥

[2]पुत्राणां च वधं घोरं भीमेन श्रोष्यते नृपः ॥ २१

अद्य ज्ञास्यति भीमस्य बलं घोरं महात्मनः ।
हते दुर्योधने युद्धे शक्रेणेव तु शम्बरे ॥ २२

1. व—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

यत् कृतं भीमसेनेन दुश्शासनवधे तदा ।
कोऽन्यः कर्ताऽस्ति तल्लोके ऋते भीमं महाबलम् ॥ २३

जानीतामद्य ज्येष्ठस्य पाण्डवस्य पराक्रमम् ।
मद्रराजं हतं श्रुत्वा दैवैरपि सुदुस्सहम् ॥ -२४

अद्य ज्ञास्यति सङ्ग्रामे माद्रीपुत्रौ महाबलौ ।
निहते सौबले वीरे गान्धारेषु च सर्वशः ॥ २५

कथं तेषां जयो न स्याद् येषां योद्धा धनञ्जयः ।
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ २६

द्रौपद्यास्तनयाः पञ्च माद्रीपुत्रौ च पाण्डवौ ।
शिखण्डी च महेष्वासो राजा चैव युधिष्ठिरः ॥ २७

येषां च जगतां नाथो नाथः कृष्णो जनार्दनः ।
कथं तेषां जयो न स्याद् येषां धर्मो व्यपाश्रयः ॥ २८

[1]लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषां नाथो हृषीकेशस् सर्वलोकविभुर्हरिः ॥ २९

भीष्मं द्रोणं च कर्णं च मद्रराजानमेव च ।
तथाऽन्यान् नृपतीन् वीराञ् शतशोऽथ सहस्रशः ॥ ३०

कोऽन्यश्शक्तो रणे जेतुम् ऋते पार्थं युधिष्ठिरम् ॥ ३०॥
यस्य नाथो हृषीकेशस् सदा [2]सत्ययशोनिधिः ॥ ३१

---

1. ख—इदमर्धद्वयं नास्ति 2. ख-ब—धर्मं

सञ्जयः—

इत्येवं वदमानास्ते हर्षेण महता युताः ।
प्रभिन्नांस्तावकान् राजन् सृञ्जयाः पृष्ठतोऽन्वयुः ॥ ३२

धनञ्जयो रथानीकम् अभ्यवर्तत वीर्यवान् ।
माद्रीपुत्रौ च शकुनिं सात्यकिश्च महारथः ॥ ३३

तान् प्रेक्ष्य द्रवतस्सर्वान् भीमसेनभयार्दितान् ।
दुर्योधनस्तदा सूतम् अब्रवीद्विस्मयन्निव ॥ ३४

दुर्योधनः—

न माऽतिक्रमते पार्थो धनुष्पाणिमवस्थितम् ।
[1]जघने सर्वसैन्यानां शनैरश्वान् प्रचोदय ॥ ३५

जघने युध्यमानं हि कौन्तेयो मां धनञ्जयः ।
नोत्सहेत व्यतिक्रान्तुं वेलामिव महोदधिः ॥ ३६

पश्य सैन्यं महत् सूत पाण्डवैस्समभिद्रुतम् ।
सैन्यरेणुं समुद्भूतं पश्य चैनं समन्ततः ॥ ३७

सिंहनादांश्च बहुशश् शृणु घोरान् भयानकान् ।
तस्माद्याहि शनैस्सूत जघनं परिपालय ॥ ३८

मयि स्थिते च समरे निरुद्धेषु च पाण्डुषु ।
पुनरावर्तते तूर्णं मामकं बलमोजसा ॥ ३९

---

1. ख—इदमर्धं नास्ति

सञ्जयः—

तच्छ्रुत्वा तव पुत्रस्य भाषतो मधुरं वचः ।
सारथिर्हेमसञ्छन्नान् शनैरश्वानचोदयन् ॥　　४०

गजाश्वरथिभिर्भिन्नास् त्यक्तात्मानः पदातयः ।
एकविंशतिसाहस्रास् संयुगायावतस्थिरे ॥　　४१

नानादेशसमुद्भूता नानारञ्जितवाससः ।
अवस्थितास्तदा योधाः प्रार्थयन्तो महद्यशः ॥　　४२

तेषामापततां तत्र संसृष्टानां परस्परम् ।
सम्मर्दस्तु महाञ्जज्ञे घोररूपो भयङ्करः ॥　　४३

भीमसेनं तदा राजन् धृष्टद्युम्नं च पार्षतम् ।
बलेन चतुरङ्गेण नानादेश्या न्यवारयन् ॥　　४४

भीममेवाभ्यवर्तन्त रणेऽन्ये तु पदातयः ।
प्रक्ष्वेल्यास्फोट्य संहृष्टा वीरलोकमियासवः ॥　　४५

आसाद्य भीमसेनं तु सङ्क्रुद्धा युद्धदुर्मदाः ।
धार्तराष्ट्रास्तदा नेदुर् नान्यामकथयन् कथाम् ॥　　४६

परिवार्य रणे भीमं निजघ्नुस्ते समन्ततः ॥　　४६॥

स वध्यमानस्समरे पदातिगणसंवृतः ।
न चचाल रथोपस्थे मैनाक इव पर्वतः ॥　　४७॥

[1]ते तु क्रुद्धा महाराज पाण्डवस्य महारथाः ।
निगृहीतुं प्रचक्रुर्हि योधाश्चान्ये न्यवारयन् ॥ ४८॥
अक्रुध्यत रणे भीमस् तैस्तदा पर्यवस्थितैः ॥ ४९
सोऽवतीर्य रथात् तूर्णं पदातिस्समवस्थितः ।
जातरूपपरिच्छन्नां प्रगृह्य महतीं गदाम् ॥ ५०
अवधीत् तावकान् योधान् दण्डपाणिरिवान्तकः ॥ ५०॥
विप्रहीणरथाश्वांस्तान् नरान् स पुरुषर्षभः ।
एकविंशतिसाहस्रान् पदातीनवपोथयत् ॥ ५१॥
हत्वा तत् पुरुषानीकं भीमस्सत्यपराक्रमः ।
धृष्टद्युम्नं पुरस्कृत्य नचिरात् प्रत्यदृश्यत ॥ ५२॥
पादाता निहता भूमौ शिश्यिरे रुधिरोक्षिताः ।
प्रभग्ना इव वातेन कर्णिकारास्सुपुष्पिताः ॥ ५३॥
[2]नानाशस्त्रसमायुक्ता नानाकुण्डलधारिणः ।
नानाजात्या हतास्तत्र नानादेशसमागताः ॥ ५४॥
पताकाध्वजसम्पन्नं पदातीनां महद्बलम् ।
निकृत्तं विबभौ तत्र छिन्नं तालवनं यथा ॥ ५५॥
युधिष्ठिरपुरोगास्तु सहसैन्या महारथाः ।

1. ब—अर्धचतुष्टयं नास्ति
2. ख-ब—नानापुष्पस्रजोपेता

अभ्यधावन् महात्मानः पुत्रं दुर्योधनं तव ॥ ५६॥

ते सर्वे तावकान् दृष्ट्वा महेष्वासान् पराङ्मुखान् ।
नात्यवर्तन्त ते पुत्रं वेलामिव [1]महोर्मयः ॥ ५७॥

तदद्भुतमपश्याम तव पुत्रस्य विक्रमम् ।
यदेकं सहिताः पार्था न शेकुरतिवर्तितुम् ॥ ५८॥
नातिदूरेऽपयातं तं कृतबुद्धिं पलायने ।
दुर्योधनस्स्वकं सैन्यम् अब्रवीद्भृशविक्षतम् ॥ ५९॥

दुर्योधनः—

न तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु वा ।
यत्र यातान् न वो हन्युः पाण्डवाः किं द्रुतेन वः ॥ ६०॥
[2]अल्पं च बलमेतेषां कृष्णौ च भृशदुःखितौ ।
यदि सर्वे प्रतिष्ठामो ध्रुवं नो विजयो भवेत् ॥ ६१॥
विप्रयातांस्तु नो भिन्नान् पाण्डवाः कृतकिल्बिषान् ।
अनुव्रज्य हनिष्यन्ति श्रेयो नस्समरे स्थितिः ॥ ६२॥
शृण्वन्तु क्षत्रियास्सर्वे यावन्तस्स्थ समागताः ॥ ६३
यदि शूरं च भीमं च मानयत्यन्तकस्सदा ।
को नु मूढो न युध्येत पुरुषः क्षत्रियब्रुवः ॥ ६४
श्रेयो नो भीमसेनस्य क्रुद्धस्य प्रमुखे स्थितिः ॥ ६४॥

1. ख—महोदधिः　　2. ब—अर्धद्वयं नास्ति

मुख्यस्साङ्ग्रामिको मृत्युर् दुःखो व्याधिजरादिभिः ।
[1]मर्त्येनावश्यमर्तव्यं गृहेष्वपि कदाचन ॥ ६५॥

युध्यतः क्षत्रधर्मेण मृत्युरेष सनातनः ॥ ६६

जित्वा वा सुखमाप्नोति हतः प्रेत्य महद्यशः ।
न युद्धधर्माच्छ्रेयान् वै पन्थास्स्वर्गस्य कौरवाः ॥ ६७

अचिरेण जिताँल्लोकान् हतो युधि समश्नुते ॥ ६७॥

सञ्जयः—

श्रुत्वा तु वचनं तस्य पूजयित्वा तु पार्थिवाः ।
पुनरेवाभ्यवर्तन्त पाण्डवानाततायिनः ॥ ६८॥

तानापतत एवाशु व्यूढानीकाः प्रहारिणः ।
प्रत्युद्ययुस्तदा पार्था जयगृध्नाः प्रमन्यवः ॥ ६९॥

धनञ्जयो रथेनाजावभ्यवर्तत वीर्यवान् ।
विश्रुतं त्रिषु लोकेषु गाण्डीवं विक्षिपन् धनुः ॥ ७०॥

माद्रीपुत्रौ च शकुनिं सात्यकिश्च महाबलः ।
जवेनाभ्यपतन् हृष्टा यत्ता वै तावकं बलम् ॥ ७१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ७४ ॥ शल्यवधपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[अस्मिन्नध्याये ७१॥ श्लोकाः]

---

1. ख—अर्धद्वयं नास्ति

## ॥ अष्टादशोऽध्यायः ॥

सात्यकिना साल्ववधः ॥

सञ्जयः—

सन्निवृत्ते बलौघे तु साल्वो म्लेच्छगणाधिपः ।
अभ्यवर्तत सङ्क्रुद्धः पाण्डूनां सुमहद्बलम् ॥ १

आस्थाय च महानागं प्रभिन्नं पर्वतोपमम् ।
दृप्तमैरावतप्रख्यम् अमित्रगणमर्दनम् ॥ २

योऽसौ महापद्मकुलप्रसूतः
प्रपूजितो धार्तराष्ट्रेण नित्यम् ।
सुकल्पितश्शास्त्रविनिश्चयज्ञैस्
सदौपवाह्यस्समरेषु राज्ञः ॥ ३

ऐरावतं दैत्यगणान् विमृद्नञ्
शक्रो यथा सञ्जनयन् भयानि ।
तमास्थितो राजवरो बभूव
यथोदयस्थस्सविता क्षपान्ते ॥ ४

स तेन नागप्रवरेण राज-
न्नभ्युद्ययौ पाण्डुसुतान् समस्तान् ।

शितैः पृषत्कैर्विददार चापि
महेन्द्रवज्रप्रतिमैस्सुघोरैः ॥ ५

ततश्शरान् वै सृजतो महारणे
योधांश्च राजन्नयतो यमक्षयम् ।
नास्यान्तरं ददृशुस्स्वे परे वा
यथा पुरा वज्रधरस्य दैत्याः ॥ ६

ते पाण्डवास्सृञ्जयास्सोमकाश्च
तमेव नागं ददृशुस्समन्तात् ।
सहस्रशो वै विचरन्तमेकं
यथा महेन्द्रस्य गजं समीके ॥ ७

सन्द्राव्यमाणं तु बलं परेषां
परेतकल्पं विबभौ समन्तात् ।
नैवावतस्थे समरे भृशं भयाद्
विमर्दमानं तु परस्परं तदा ॥ ८

ततः प्रभग्ना सहसा महाचमूस्
सा पाण्डवी तेन जनाधिपेन ।
दिशश्चतस्रस्सहसा प्रधाविता
गजेन्द्रवेगं तमपारयन्ती ॥ ९

दृष्ट्वा तु तां वेगवता प्रभग्नां
सर्वे त्वदीया युधि योधमुख्याः ।
अपूजयंस्तत्र नराधिपं तं
दध्मुश्च शङ्खाञ् शशिसन्निकाशान् ॥ १०

श्रुत्वा निनादं त्वथ कौरवाणां
हर्षाद्विमुक्तं सह शङ्खनादैः ।
सेनापतिः पाण्डवसृञ्जयानां
पाञ्चालपुत्रो ममृषे न रोषान् ॥ ११

ततस्तमेव द्विरदं महात्मा
प्रत्युद्ययौ त्वरमाणो जयाय ।
जम्भो यथा शक्रसमास्थितं वै
नागेन्द्रमैरावतमिन्द्रवाह्यम् ॥ १२

तमापतन्तं सहसा तु दृष्ट्वा
पाञ्चालपुत्रं युधि राजसिंहम् ।
तं वै द्विपं प्रेषयामास तूर्णं
वधाय राजन् द्रुपदात्मजस्य ॥ १३

स तं द्विपं सहसाऽभ्यापतन्तं
ह्यविध्यदर्कप्रतिमैः पृषत्कैः ।

तं तैलधौतैर्निशितैर्ज्वलद्भिर्
नाराचमुख्यैस्त्रिभिरुग्रहस्तम् ॥ १४

ततोऽपरान् पञ्चशतान् महात्मा
नाराचमुख्यान् विससर्ज कुम्भे ।
स तैस्तु विद्धः परमद्विपो रणे
नदन् परावृत्य भृशं प्रदुद्रुवे ॥ १५

तं नागराजं सहसा प्रणुन्नं
विद्राव्यमाणं च निगृह्य साल्वः ।
तोत्राङ्कुशैः प्रेषयामास तूर्णं
पाञ्चालराजस्य सुतं प्रदर्श्य ॥ १६

दृष्ट्वाऽऽपतन्तं सहसा गजेन्द्रं
धृष्टद्युम्नस्स्वरथाच्छीघ्रमेव ।
गदां गृहीत्वा सुजवेन वीरो
भूमिं प्रपन्नो भयविह्वलाङ्गः ॥ १७

स तं रथं हेमविभूषिताङ्गं
साश्वं ससूतं सहसा विमृद्य ।
उत्क्षिप्य हस्तेन तदा महाद्विपस्
तं पोथयामास वसुन्धरातले ॥ १८

पाञ्चालराजस्य सुतं तु दृष्ट्वा
तदाऽर्दितं नागवरेण तेन ।
तमभ्यधावन् सहसा जवेन
भीमश्शिखण्डी च शिनेश्च नप्ता ॥ १९

शरैश्च वेगं सहसा निगृह्य
तस्याभितो ह्यापततो गजस्य ।
स सङ्गृहीतो रथिभिर्गजो वै
चचाल तैर्वार्यमाणश्च सङ्ख्ये ॥ २०

ततः पृषत्कान् प्रववर्ष राजा
सूर्यो यथा रश्मिजालं समन्तात् ।
तैराशुगैर्वध्यमाना रथौघाः
प्रदुद्रुवुस्तत्र ततस्स्म सर्वे ॥ २१

तत् कर्म साल्वस्य समीक्ष्य सर्वे
पाञ्चालमत्स्या नृप सृञ्जयाश्च ।
हाहाकारैर्नादयन्तस्तु युद्धे
द्विपं समन्ताद् रुरुधुर्नराग्र्याः ॥ २२

पाञ्चालपुत्रस्त्वरितस्तु शूरो
गदां प्रगृह्याचलशृङ्गकल्पाम् ।

असम्भ्रमं भारत शत्रुघाती
जवेन वीरोऽनुससार नागम् ॥ २३

ततोऽथ नागं धरणीधराभं
मदं स्रवन्तं जलदप्रकाशम् ।
गदां समाविध्य भृशं जघान
पाञ्चालराजस्य सुतो महात्मा ॥ २४

स भिन्नकुम्भस्सहसा विनद्य
मुखात् प्रभूतं क्षतजं विमुञ्चन् ।
पपात नागो धरणीधराभः
क्षितिप्रकम्पाच्चलितो यथाऽद्रिः ॥ २५

निपात्यमाने तु तदा गजेन्द्रे
हाहाकृते तव पुत्रस्य सैन्ये ।
साल्वस्य राज्ञस्तु शिनिप्रवीरो
जहार भल्लेन शिरश्शितेन ॥ २६

हृतोत्तमाङ्गो युधि सात्त्वतेन
पपात भूमौ सहनागराजः ।
यथाऽद्रिशृङ्गं सुमहत् प्रणुन्नं
वज्रेण देवाधिपचोदितेन ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ७४ ॥ शल्यवधपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[अस्मिन्नध्याये २७ श्लोकाः]

## ॥ एकोनविंशोऽध्यायः ॥

सात्यकिना कृतवर्मपराजयः ॥

सञ्जयः—

तस्मिंस्तु निहते साल्वे शूरे समितिशोभने ।
तवाभज्यद्बलं वेगाद् वातेनेव महाद्रुमः ॥ १

तत् प्रभग्नं बलं दृष्ट्वा कृतवर्मा महारथः ।
दधार समरे शूरश् शत्रुसेनां महाबलः ॥ २

सन्निवृत्तास्तु ते वीरा दृष्ट्वा सात्त्वतमाहवे ।
शैलोपमं स्थितं राजन् विकिरन्तं शरान् युधि ॥ ३

ततः प्रववृते युद्धं कुरूणां पाण्डवैस्सह ।
निवृत्तानां महाराज मृत्युं कृत्वा निवर्तनम् ॥ ४

तत्राश्चर्यमभूद्युद्धं सात्वतस्य परैस्सह ।
यदेको वारयामास पाण्डुसेनां दुरासदाम् ॥ ५

तेषामन्योन्यसुहृदां कृते कर्मणि दुष्करे ।
सिंहनादः प्रहृष्टानां दिविस्पृक् सुमहानभूत् ॥ ६

तेन शब्देन वित्रस्तान् पाञ्चालान् भरतर्षभ ।
शिनेर्नप्ता महाबाहुर् अन्वपद्यत संयुगे ॥ ७

स समासाद्य राजानं क्षेमधूर्तिं महाबलम् ।

सप्तभिर्निशितैर्बाणैर् अनयद्यमसादनम् ॥ ८

तमायान्तं महाबाहुं प्रवर्षन्तं शरान् बहून् ।
जवेनाभ्यपतद्धीमान् हार्दिक्यश्शिनिपुङ्गवम् ॥ ९

तौ सिंहाविव नर्दन्तौ धन्विनौ रथिनां वरौ ।
अन्योन्यमभ्यधावेतां शस्त्रप्रवरधारिणौ ॥ १०

पाण्डवास्सह पाञ्चालैर् योधाश्चान्ये नृपोत्तमाः ।
प्रेक्षकास्समपद्यन्त तयोर्घोरे समागमे ॥ ११

नाराचैर्वत्सदन्तैश्च वृष्ण्यन्धकमहारथौ ।
अभिजघ्नतुरन्योन्यं प्रहृष्टाविव कुञ्जरौ ॥ १२

चरन्तौ विविधान् मार्गान् हार्दिक्यशिनिपुङ्गवौ ।
मुहुरन्तर्दधाते तौ बाणवृष्ट्या परस्परम् ॥ १३

चापवेगबलोद्धूतान् मार्गणान् वृष्णिसिंहयोः ।
आकाशे समपश्याम पतङ्गानिव शीघ्रगान् ॥ १४

तमेकं सत्यकर्माणम् आसाद्य हृदिकात्मजः ।
अविध्यन्निशितैर्बाणैश् चतुर्भिश्चतुरो हयान् ॥ १५

स दीर्घबाहुस्सङ्क्रुद्धस् तोत्रार्दित इव द्विपः ।
अष्टाभिः कृतवर्माणम् अविध्यत् परमेषुभिः ॥ १६

ततः पूर्णायतोत्सृष्टैः कृतवर्मा शिलीमुखैः ।
सात्यकिं त्रिभिराहत्य धनुरेकेन चिच्छिदे ॥ १७

निकृत्तं तद्धनुश्श्रेष्ठम् [1]अपास्य शिनिपुङ्गवः ।
अन्यदादत्त वेगेन शैनेयस्सशरं धनुः ॥ १८

तदादाय धनुश्श्रेष्ठं वरिष्ठं सर्वधन्विनाम् ।
आरोप्य च महावीर्यो महाबुद्धिर्महाबलः ॥ १९

अमृष्यमाणो धनुषश् छेदनं कृतवर्मणः ।
कुपितोऽतिरथश्शीघ्रं कृतवर्माणमभ्ययात् ॥ २०

ततस्स दशभिर्बाणैर् निशितैश्शिनिपुङ्गवः ।
जघान चाश्वान् सूतं च ध्वजं च कृतवर्मणः ॥ २१

ततो राजन् महेष्वासः कृतवर्मा महारथः ।
हताश्वसूतं सम्प्रेक्ष्य रथं हेमपरिष्कृतम् ॥ २२

रोषेण महताऽऽविष्टश् शूलमुद्यम्य मारिष ।
चिक्षेप भुजवेगेन जिघांसुश्शिनिपुङ्गवम् ॥ २३

तच्छूलं सात्वतोऽप्याजौ निर्भिद्य निशितैश्शरैः ।
चूर्णितं पातयामास मोहयन्निव माधवः ॥ २४
ततोऽपरेण भल्लेन हृद्येनं समताडयत् ॥ २४॥

स युद्धे युयुधानेन हताश्वो हतसारथिः ।
कृतवर्मा कृतास्त्रेण धरणीमन्वपद्यत ॥ २५॥

तस्मिन् सात्यकिना वीरे द्वैरथे विरथीकृते ।

---

1. ब—इतः अर्धद्वयं नास्ति

समपद्यत सर्वेषां सैन्यानां सुमहद्भयम् ॥ २६॥

पुत्रस्य तव चात्यर्थं विषादस्समपद्यत ॥ २७

हतसूते हताश्वे च विरथे कृतवर्मणि ।
हताश्वं च समालक्ष्य हतसूतमरिन्दमम् ॥ २८

अभ्यधावत् कृपो राजन् जिघांसुश्शिनिपुङ्गवम् ॥ २८॥

तमारोप्य रथोपस्थे मिषतां सर्वधन्विनाम् ।
अपोवाह महाराज तूर्णमायोधनादपि ॥ २९॥

शैनेयेन स्थिते राजन् विरथे कृतवर्मणि ।
दुर्योधनबलं सर्वं पुनरासीत् पराङ्मुखम् ॥ ३०॥

तत् परे नान्वबुध्यन्त सैन्ये च रजसा वृते ।
तावद्विप्रद्रुतं राजन् दुर्योधनमृते नृप ॥ ३१॥

दुर्योधनस्तु सम्प्रेक्ष्य भग्नं स्वबलमन्तिकात् ।
जवेनाभ्यपतत् तूर्णं सर्वांश्चैको न्यवारयत् ॥ ३२॥

पाण्डवान् समरे क्रुद्धो धृष्टद्युम्नं च पार्षतम् ।
शिखण्डिनं द्रौपदेयान् पाञ्चालानां च ये गणाः ॥ ३३॥

केकयान् सोमकांश्चैव योधयामास मारिष ॥ ३४

असम्भ्रमं दुराधर्षश् शितैरस्त्रैरवाकिरत् ।
अतिष्ठदाहवे यत्तः पुत्रस्तव महाबलः ॥ ३५

यथा यज्ञे महानग्निर् मन्त्रपूतः प्रकाशते ॥ ३५॥

तं परे नात्यवर्तन्त मर्त्या मृत्युमिवाहवे ।
अथान्यं रथमास्थाय हार्दिक्यस्समवर्तत ॥　　३६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
॥ ७४ ॥ शल्यवधपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[ अस्मिन्नध्याये ३६॥ श्लोकाः ]

## ॥ विंशोऽध्यायः ॥



सङ्कुलयुद्धम् ॥



सञ्जयः—

पुत्रस्तु ते महाराज रथस्थो रथिनां वरः ।
दुराधर्षो बभौ युद्धे यथा रुद्रः प्रतापवान् ॥　　१

तस्य बाणसहस्रैस्तु प्रच्छन्ना ह्यभवन्मही ।
परांश्च सिषिचे बाणैर् धाराभिरिव पर्वतान् ॥　　२

न च सोऽस्ति पुमान् कश्चित् पाण्डवानां बलार्णवे ।
हतो गजो रथो वाऽपि योऽस्य बाणैरविक्षतः ॥　　३

यं यं हि समरे योधं प्रपश्यामि विशां पते ।
स स बाणैश्चितोऽभूद्वै तव पुत्रेण भारत ॥　　४

यथा सैन्येन रजसा समुद्धूतेन वाहिनी ।

प्रत्यदृश्यत सञ्छन्ना तथा बाणैर्महात्मनः ॥ ५
बाणभूतामपश्याम पृथिवीं पृथिवीपते ।
दुर्योधनेनापतता क्षिप्रहस्तेन धन्विना ॥ ६

तेषु योधसहस्रेषु तावकेषु परेषु च ।
नास्ति दुर्योधनसमः पुमानिति मतिर्मम ॥ ७

अत्राद्भुतमपश्याम तव पुत्रस्य विक्रमम् ।
यदेकं सहिताः पार्था नात्यवर्तन्त भारत ॥ ८

युधिष्ठिरं शतेनाजौ विव्याध भरतर्षभ ।
भीमसेनं त्रिसप्तत्या सहदेवं च पञ्चभिः ॥ ९

नकुलं च चतुष्षष्ट्या धृष्टद्युम्नं च पञ्चभिः ।
सप्तभिर्द्रौपदेयांश्च त्रिभिर्विव्याध सात्यकिम् ॥ १०
धनुश्चिच्छेद भल्लेन सहदेवस्य भारत ॥ १०॥

तदपास्य धनुश्छिन्नं माद्रीपुत्रः प्रतापवान् ।
अभ्यधावत राजानं प्रगृह्य सुमहद्धनुः ॥ ११॥

ततो दुर्योधनं सङ्ख्ये विव्याध दशभिश्शरैः ।
नकुलश्च ततो वीरो राजानं नवभिः पुनः ॥ १२॥

घोररूपैर्महेष्वासो विव्याध च ननाद च ॥ १३

सात्यकिश्चापि राजानं शरेण नतपर्वणा ।
द्रौपदेयास्त्रिसप्तत्या धर्मराजश्च पञ्चभिः ॥ १४

अशीत्या भीमसेनश्च शरै राजानमर्दयन् ॥ १४॥

समन्तात् कीर्यमाणस्तु बाणसङ्घैर्महात्मभिः ।
न चचाल महाराज सर्वसैन्यस्य पश्यतः ॥ १५॥

लाघवात् सौष्ठवाच्चापि धैर्याच्चैव महात्मनः ।
अति सर्वाणि भूतानि ददृशुस्सर्वपार्थिवाः ॥ १६॥

धार्तराष्ट्रस्य राजेन्द्र यात्वा हि स्वल्पमन्तरम् ।
अपश्यमाना राजानं पर्यधावन्त दंशिताः ॥ १७॥

तेषामापततां घोषस् तुमुलस्समजायत ।
क्षुब्धस्य हि समुद्रस्य प्रावृट्काले यथा निशि ॥ १८॥

समासाद्य रणे ते तु राजानमपराजितम् ।
प्रत्युद्ययुर्महेष्वासाः पाण्डवानाततायिनः ॥ १९॥

भीमसेनं रणे क्रुद्धं द्रोणपुत्रो न्यवारयत् ॥ २०

ततो बाणैर्महाराज प्रमुक्तैस्सर्वतो दिशम् ।
नाज्ञायन्त रणे वीरा न दिशः प्रदिशस्तथा ॥ २१

तावुभौ कृतकर्माणावुभौ भारत दुस्सहौ ।
घोररूपमयुध्येतां कृतप्रतिकृतैषिणौ ॥ २२

त्रासयन्तौ जगत् सर्वं ज्याक्षेपविहतत्वचौ ॥ २२॥
शकुनि[1]श्च धनुश्छित्वा युधिष्ठिरमपीडयत् ॥ २३

1. ख-घ—इतः अर्धत्रयं नास्ति

तस्याश्वांश्चतुरो हत्वा सुबलस्य सुतो विभुः ।
नादं चकार बलवान् सर्वसैन्यानि कम्पयन् ॥ २४

एतस्मिन्नन्तरे वीरो राजानमपराजितम् ।
अपोवाह रथेनाजौ सहदेवः प्रतापवान् ॥ २५

अथान्यं रथमास्थाय धर्मराजो युधिष्ठिरः ।
शकुनिं नवभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ २६

ननाद च महानादं प्रवरस्सर्वधन्विनाम् ।
तद्युद्धमभवच्चित्रं घोररूपं च मारिष ॥ २७

ईक्षितृप्रीतिजननं सिद्धचारणसेवितम् ॥ २७॥

उलूकस्तु महेष्वासो नकुलं युद्धदुर्मदम् ।
अभ्यवर्षदमेयात्मा शरवर्षैस्समन्ततः ॥ २८॥

तथैव नकुलश्शूरस् सौबलस्य सुतं रणे ।
शरवर्षेण महता समन्तात् पर्यवारयत् ॥ २९॥

[1]तौ तत्र समरे वीरौ कुलपुत्रौ महारथौ ।
योधयन्तावदृश्येतां परस्परकृतागसौ ॥ ३०॥

तथैव कृतवर्मा तु शैनेयं शत्रुतापनम् ।
[2]योधयञ् शुशुभे राजन् बलिश्शक्रमिवाहवे ॥ ३१॥

---

1. घ—तौ तव शुशुभे राजन् बलिश्शक्रमिवाहवे । [अधिकः पाठः]
2. घ—इदमर्धं नास्ति

दुर्योधनो धनुश्छित्वा धृष्टद्युम्नस्य संयुगे ।
अथैनं छिन्नधन्वानं विव्याध निशितैश्शरैः ॥ ३२॥

धृष्टद्युम्नोऽपि समरे प्रगृह्य [1]सुमहायुधम् ।
राजानं योधयामास पश्यतां सर्वधन्विनाम् ॥ ३३॥

तयोर्युद्धं महच्चासीत् सङ्क्रन्दे भरतर्षभ ।
प्रभिन्नयोर्यथा सक्तं मत्तयोर्वनहस्तिनोः ॥ ३४॥

गौतमस्तु रणे क्रुद्धो द्रौपदेयान् महाबलान् ।
विव्याध बहुभिर्घोरैश्_ शरैस्सन्नतपर्वभिः ॥ ३५॥

तस्य तैरभवद्युद्धम् इन्द्रियैरिव देहिनः ।
घोररूपमसंहार्यं निर्मर्यादमतीव च ॥ ३६॥

ते च तं पीडयामासुर्_ इन्द्रियाणीव बालिशम् ॥ ३७

स च तान् प्रतिसंरब्धः प्रत्ययोधयदाहवे ।
एवं चित्रमभूद्युद्धं तस्य तैस्सह भारत ॥ ३८

उत्थायोत्थाय हि यथा देहिनामिन्द्रियैर्विभो ।
नराश्चैव नरैस्सार्धं दन्तिनो दन्तिभिस्तथा ॥ ३९

हया हयैस्समासक्ता रथिनो रथिभिस्तथा ।
सङ्कुलं चाभवद्भूयो घोररूपं विशां पते ॥ ४०

इदं चित्रमिदं घोरम् इदं रौद्रमिति प्रभो ।

---

1. ख-ब—परमायुधम्

युद्धान्यासन् महाराज घोराणि च बहूनि च ॥ ४१

ते समासाद्य समरे परस्परमरिन्दमाः ।
विव्यधुश्चैव जघ्नुश्च समाभाष्य महाबलाः ॥ ४२

तेषां [1]रथसमुद्भूतं रजस्तीव्रमदृश्यत ।
प्रवातेनोद्धतं राजन् धावद्भिश्चाश्वसादिभिः ॥ ४३

रथनेमिसमुद्भूतं निश्वासैश्चापि दन्तिनाम् ।
रजस्सन्ध्याभ्रकलिलं दिवाकरपथं ययौ ॥ ४४

रजसा तेन सम्पृक्ते भास्करे निष्प्रभीकृते ।
सञ्छादिताऽभवद्भूमिस् ते च शूरा महारथाः ॥ ४५

मुहूर्तमिव सम्पृक्तं विरजस्कं समन्ततः ।
वीरशोणितसिक्तायां भूमौ भरतसत्तम ॥ ४६

उपाशाम्यत् ततस्तीव्रं तद्रजो घोरदर्शनम् ।
ततोऽपश्यं महाराज द्वन्द्वयुद्धानि भारत ॥ ४७

प्रग्रहं च [2]यथा श्रेष्ठं मध्याह्ने वै सुदारुणे ।
वर्मणां तत्र राजेन्द्र व्यदृश्यन्तोज्ज्वलत्प्रभाः ॥ ४८

शब्दस्तु तुमुलस्सङ्ख्ये शराणां पतताम्भूत् ।
महावेणुवनस्येव दह्यमानस्य पर्वते ॥* ४९

---

1. क—तत्र ख-ग—शस्त्र
2. क—यथा चाग्र्यं ख—यथाप्राग्रं ग—यथाप्रग्रं
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

वर्तमाने महायुद्धे घोररूपे भयानके ।
अभज्यत बलं तत्र तव पुत्रस्य पाण्डवैः ॥ ५०

तांस्तु यत्नेन महता सन्निवर्त्य महारथान् ।
पुत्रास्ते योधयामासुः पाण्डवानामनीकिनीम् ॥ ५१

निवृत्तास्सहसा योधास् तव पुत्रप्रियैषिणः ।
सन्निवृत्तेषु तेष्वेव युद्धमासीन् सुदारुणम् ॥ ५२

तावकानां परेषां च [1]सुरासुररणोपमम् ।
परेषां तव सैन्ये वा नास्ति कश्चित् पराङ्मुखः ॥ ५३

अनुमानेन युध्यन्ते संज्ञाभिश्च परस्परम् ।
तेषां क्षयो महानासीद् युध्यतामितरेतरम् ॥ ५४

ततो युधिष्ठिरो राजा क्रोधेन महता वृतः ।
जिगीषमाणस्सङ्ग्रामे धार्तराष्ट्रान् सराजकान् ॥ ५५

त्रिभिश्शारद्वतं विद्ध्वा रुक्मपुङ्खैश्शिलाशितैः ।
चतुर्भिर्निजघानाश्वान् कल्याणान् कृतवर्मणः ॥ ५६

अश्वत्थामा तु हार्दिक्यम् अपोवाह यशस्विनम् ॥ ५६॥
अथ शारद्वतोऽष्टाभिः प्रत्ययुध्यद्युधिष्ठिरम् ॥ ५७

ततो दुर्योधनो राजा रथान् सप्तशतान् रणे ।

1. ख—इतः षट् पादा न सन्ति

प्रैषयद्यत्र राजाऽसौ धर्मपुत्रो युधिष्ठिरः ॥ ५८

ते रथा रथिभिर्युक्ता मनोमारुतरंहसः ।
अभ्यद्रवन्त सङ्ग्रामे कौन्तेयस्य रथं प्रति ॥ ५९

ते समन्तान्महाराज परिवार्य युधिष्ठिरम् ।
अदृश्यं सायकैश्चक्रुर् मेघा इव दिवाकरम् ॥ ६०

तं दृष्ट्वा धर्मराजानं कौरवैस्तैस्समावृतम् ।
[1]नामृष्यन्त सुसङ्क्रुद्धाश् शिखण्डिप्रमुखा रथाः ॥ ६१

रथैरश्ववरैर्युक्तैः किङ्किणीजालसंवृतैः ।
आजग्मुरभिरक्षन्तः कुन्तीपुत्रं युधिष्ठिरम् ॥ ६२

ततः प्रववृते घोरस् सङ्ग्रामश्शोणितोदकः ।
पाण्डवानां कुरूणां च यमराष्ट्रविवर्धनः ॥ ६३

रथान् सप्तशतान् हत्वा कुरूणामाततायिनाम् ।
पाण्डवास्सह पाञ्चालैः पुनरेवाभ्यवारयन् ॥ ६४

तत्र युद्धं महच्चासीत् तव पुत्रस्य पाण्डवैः ।
न च तत्तादृशं दृष्टं नैव चापि परिश्रुतम् ॥ ६५

वर्तमाने महायुद्धे निर्मर्यादे समन्ततः ।
वध्यमानेषु योधेषु तावकेष्वितरेषु च ॥ ६६

ज्याघोषैर्योधमुख्यानां तलघोषैस्समन्ततः ।

---

1. ख—अर्धद्वयं नास्ति

उत्कृष्टैस्सिंहनादैश्च गर्जितेन च धन्विनाम् ॥ ६७

अतिप्रवृद्धे युद्धे च भिद्यमानेषु मर्मसु ।
धावमानेषु योधेषु जयगृध्रेषु भारत ॥ ६८

संहारे सर्वतो जाते पृथिव्यां घोरसम्भवे ।
बह्वीनामुत्तमस्त्रीणां सीमन्तोद्धरणे कृते ॥ ६९

निर्मर्यादे महायुद्धे वर्तमाने सुदारुणे ।
प्रादुरासन् विनाशाय तदोत्पातास्सुदारुणाः ॥ ७०

चचाल शब्दं कुर्वाणा सपर्वतवना मही ।
सदण्डाश्चोल्मुका राजन् निपतन्ति समन्ततः ॥ ७१

[1]उल्काः पेतुर्दिवो भूमावाहत्य रविमण्डलम् ।
विष्वग्वाताः प्रादुरासन् नीचैश्शर्करवर्षिणः ॥ ७२

अश्रूणि मुमुचुर्नागा वेपथुश्चाविशद्भृशम् ॥ ७२॥

एतान् घोराननादृत्य समुत्पातान् सुदारुणान् ।
पुनर्युद्धाय सम्मन्त्र्य क्षत्रियास्तस्थुरव्यथाः ॥ ७३॥

रमणीये कुरुक्षेत्रे पुण्ये स्वर्गयियासवः ।
ततो गान्धारराजस्य पुत्रश्शकुनिरब्रवीत् ॥ ७४॥

शकुनिः—

युध्यध्वमग्रतो यावत् पृष्ठतो हन्मि पाण्डवान् ॥ ७५

---

1. अ—नास्तीदमर्धम्

सञ्जयः—

ततोऽभ्यधावंस्त्वरिता मद्रयोधास्तरस्विनः ।
हृष्टाः किलिकिलाशब्दान् अकुर्वन्नपरे तथा ॥ ७६

तेऽस्मांस्तु पुनरासाद्य लब्धलक्षा दुरासदाः ।
शरासनानि धून्वानाश् शरवर्षैरवाकिरन् ॥ ७७

ततो हतं परैस्तत्र मद्रराजबलं तदा ।
दुर्योधनबलं दृष्ट्वा पुनरासीत् पराङ्मुखम् ॥ ७८

गान्धारराजस्तु पुनर् वाक्यमाह ततो बली ॥ ७८॥

शकुनिः—

निवर्तध्वमधर्मज्ञा युध्यध्वं किं द्रुतेन वः ॥ ७९

सञ्जयः—

अनीकं दशसाहस्रम् अश्वानां भरतर्षभ ।
आसीद्गान्धारराजस्य विमलप्रासयोधिनाम् ॥ ८०

बलेन तेन विक्रम्य वर्तमाने जनक्षये ।
पृष्ठतः पाण्डवानीकम् अभ्यघ्नन्निशितैश्शरैः ॥ ८१

तदभ्रमिव वातेन क्षिप्यमाणं समन्ततः ।
अभज्यत महाराज पाण्डवानां महद्बलम् ॥ ८२

ततो युधिष्ठिरः प्रेक्ष्य भग्नं स्वबलमन्तिकात् ।
अभ्यचोदयदव्यग्रस् सहदेवं महाबलम् ॥ ८३

युधिष्ठिरः—

असौ सुबलपुत्रो नो जघने पश्य दंशितः ।
सेनां निषूदयत्येष पश्य पाण्डव दुर्मतिम् ॥　　८४
गच्छ त्वं द्रौपदेयैश्च शकुनिं सौबलं जहि ॥　　८४॥

रथानीकेन युद्ध्येऽहं पाञ्चालैस्सहितोऽनघ ।
गच्छन्तु कुञ्जरास्सर्वे वाजिनश्च महाजवाः ॥　　८५॥
पादाताश्च त्रिसाहस्राश् [1]शकुनिं तैर्वृतो जहि ॥　　८६

सञ्जयः—

ततो गजास्सप्तशतं चापपाणिभिरास्थिताः ।
पञ्च चाश्वसहस्राणि सहदेवश्च वीर्यवान् ॥　　८७

पादाताश्च त्रिसाहस्रा द्रौपदेयाश्च सर्वशः ।
रणे वाऽभ्यद्रवंस्ते तु शकुनिं युद्धदुर्मदम् ॥　　८८

ततस्तु सौबलो राजन्नभ्यतिक्रम्य पाण्डवान् ।
जघान पृष्ठतस्सेनां जयगृध्नुः प्रतापवान् ॥　　८९

अश्वारोहास्समारब्धाः पाण्डवानां तरस्विनाम् ।
प्राविशन् सौबलानीकम् अभ्यतिक्रम्य तान् रथान् ॥　　९०

ते तत्र सादिनश्शूरास् सौबलस्य महद्बलम् ।
रणमध्ये व्यवस्थाप्य शरवर्षैरवाकिरन् ॥　　९१

---

1. अ—इतष्षट् पादा न सन्ति

तदुद्यतगदाप्रासं महापुरुषसेवितम् ।
प्रावर्तत महद्युद्धं राजन् दुर्मन्त्रिते तव ॥ ९२

उपारमन्त [1]निश्शब्दाः प्रेक्षका रथिनोऽभवन् ।
न हि स्वेषां परेषां च विशेषः प्रत्यदृश्यत ॥ ९३

शूरबाहुविसृष्टानां [2]शराणां भरतर्षभ ।
ज्योतिषामिव सम्पातम् अपश्यन् कुरुपाण्डवाः ॥ ९४

[3]शक्तिभिर्विमलाभिश्च तत्र तत्र विशां पते ।
सम्पतन्तीभिराकाशम् आवृतं बह्वशोभत ॥ ९५

प्रासानां पततां राजन् रूपमासीत् समन्ततः ।
शलभानामिवाकाशे तदा भरतसत्तम ॥ ९६

रुधिरोक्षितसर्वाङ्गैर् विप्रविद्धैर्नियन्तृभिः ।
हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः ॥ ९७

[4]अन्योन्यं प्रतिविद्धाश्च समासाद्य परस्परम् ।
परिक्षतास्स्म दृश्यन्ते वमन्तो रुधिरं मुखैः ॥ ९८

ततोऽभवत्तमो घोरं सैन्येन रजसा वृतम् ।
तानपाक्रमतोऽद्राक्षं तस्माद्देशादरिन्दमान् ॥ ९९

अश्वान् गजान् मनुष्यांश्च रजसा संवृते सति ।

1. ख-घ—ज्याशब्दाः 2. क-ख-घ—शक्तीनां
3. क-ख—ऋषिभि 4. ख—चतुर्दशार्धानि न सन्ति

भूमौ निपतिताश्चान्ये वमन्तो रुधिरं बहु ॥ १००

केशाकेशि समालग्ना न शेकुश्चेष्टितुं नराः ।
अन्योन्यमश्वपृष्ठेभ्यो विकर्षन्तो महाबलाः ॥ १०१

मल्ला इव समासक्ता निजघ्नुरितरेतरम् ।
[1]अश्वाश्च व्यपकृष्यन्त बहवोऽत्र गतासवः ॥ १०२

भूमौ निपतिताश्चान्ये बहवोऽथ जिगीषवः ।
तत्र तत्र व्यदृश्यन्त पुरुषाश्शूरमानिनः ॥ १०३

रक्तोक्षितैश्छिन्नभुजैर् अपकृष्टशिरोधरैः ।
व्यदृश्यत मही कीर्णा शतशोऽथ सहस्रशः ॥ १०४

[2]अन्योन्यं प्रतिविद्धाश्च समासाद्य परस्परम् ॥ १०४॥

दूरं न शक्यं तत्रासीद् गन्तुमश्वेन केनचित् ।
सारोहैर्निहतैरश्वैर् आवृते वसुधातले ॥ १०५॥

रुधिरोक्षितसर्वाङ्गैर् आत्तशस्त्रैरुदायुधैः ।
नानाप्रहरणैर्घोरैः परस्परवधैषिभिः ॥ १०६॥

सुसन्निविष्टे सङ्ग्रामे [3]हतभूयिष्ठसैनिके ।
स मुहूर्तं तदा युद्ध्वा सर्वयोधवधे कृते ॥ १०७॥

षट्सहस्रैर्हयैश्शिष्टैर् अपायाच्छकुनिस्ततः ॥ १०८

1. अ-ख—नास्तीदमर्धम् 2. क-घ—इदमर्धं नास्ति
3. अ—इतष्षडर्धानि न सन्ति

तथैव पाण्डवानीकं रुधिरेण समुक्षितम् ।
त्रिसाहस्रै रथैरिशष्टैर् अपायाच्छ्रान्तवाहनम् ॥ १०९

अश्वारोहास्तु पाण्डूनाम् अब्रुवन् रुधिरोक्षिताः ।
सुसन्निविष्टे सङ्ग्रामे भूयिष्ठं त्यक्तजीविताः ॥ ११०

पाण्डवसादिनः—

न हि शक्यं रथैर्योद्धुं कुत एव महागजैः ।
रथानेव रथा यान्तु कुञ्जराः कुञ्जरानपि ॥ १११

प्रतियातोऽपि शकुनिस् स्वमनीकमवस्थितः ।
न पुनस्सौबलो राजा युद्धमभ्यागमिष्यति ॥ ११२

सञ्जयः—

ततश्च द्रौपदेयास्तु ते च मत्ता महागजाः ।
प्रययुर्यत्र पाञ्चाल्यो धृष्टद्युम्नो महारथः ॥ ११३

सहदेवोऽपि कौरव्य रजोमेघे समुत्थिते ।
एकाकी प्रययौ तत्र यत्र राजा युधिष्ठिरः ॥ ११४

तत्र तेषु प्रयातेषु शकुनिस्सौबलः पुनः ।
पार्श्वतोऽभ्यहनत् क्रुद्धो धृष्टद्युम्नस्य वाहिनीम् ॥ ११५

तत् पुनस्तुमुलं युद्धं प्राणांस्त्यक्त्वाऽभ्यवर्तत ।
तावकानां परेषां च परस्परवधैषिणाम् ॥ ११६

[1]ते ह्यन्योन्यमतक्षन्त तस्मिन् वीरसमागमे ।

---

1. क—ते ह्यन्योन्यमवेक्षन्तस्तस्मिन् ख-घ—तेऽन्योन्यं समवैक्षन्त

योधाः पर्यपतन् राजञ् शतशोऽथ सहस्रशः ॥ ११७

असिभिश्छिद्यमानानां शिरसां लोकसङ्क्षये ।
प्रादुरासीन्महाशब्दस् तालानां पततामिव ॥ ११८

विमुक्तानां शरीराणां भिन्नानां पततां भुवि ।
सायुधानां च बाहूनां वीराणां च विशां पते ॥ ११९

आसीत् कटकटाशब्दस् सुमहान् रोमहर्षणः ॥ ११९॥
निघ्नन्तो निशितैश्शस्त्रैर् भ्रातॄन् पुत्रान् [1]सखीनपि ।
योधाः परिपतन्ति स्म यथाऽऽमिषकृते खगाः ॥ १२०॥

अन्योन्यं प्रतिसंरब्धाः परस्परवधैषिणः ।
अहं पूर्वमहं पूर्वम् इत्यभ्यघ्नन् सहस्रशः ॥ १२१॥

[2]सङ्घातैरासनाद्भ्रष्टैर् अश्वारोहैर्गतासुभिः ।
हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः ॥ १२२॥

स्फुरतां प्रतिविष्टानाम् अश्वानां शीघ्रसारिणाम् ।
स्तनतां च मनुष्याणां पततां च विशां पते ॥ १२३॥

शक्त्यृष्टिप्रासशब्दश्च तुमुलस्समजायत ॥ १२४
भिन्दन्तः परमर्माणि [3]राजन् दुर्मन्त्रिते तव ।

---

1. क-ख-घ—पितॄनपि

2. ख—संयानैरासनैर्भ्रष्टैर्    घ—सुयातैरासनाद्भ्रष्टै

3. घ—इतः अष्टौ पादा न सन्ति

[1-2]निहताश्च शितैश्शस्त्रैर् न न्यवर्तन्त तावकाः ॥ १२५

मत्ता रुधिरगन्धेन बहवो गतचेतसः ।
परान् स्वकांश्च [3]विध्यन्ति क्षयाय जयगृध्नवः ॥ १२६

[4]एवं हि योधास्संरब्धाः परस्परसमाहताः ।
भूमावभ्यपतन् राजञ् शरशक्तिभिराहताः ॥ १२७

[5]कङ्कगृध्रसृगालानां तुमुलो निस्स्वनो महान् ।
आसीद्दुलक्ष्यो घोरस् तव पुत्रस्य पश्यतः ॥ १२८

नराश्वकायैस्सञ्छन्ना भूमिरासीद्विशां पते ।
रुधिरोदकचित्रा च भीरूणां भयवर्धिनी ॥ १२९

असिभिः पट्टसैश्शूलैस् तक्षमाणाः परस्परम् ।
तावकाः पाण्डवेयांश्च नात्यवर्तन्त भारत ॥ १३०

प्रहरन्तो यथाशक्ति यावत् प्राणस्य धारणा ।
योधाः परिपतन्ति स्म वमन्तो रुधिरं मुखैः ॥ १३१

शिरो गृहीत्वा केशेषु कबन्धः प्रत्यदृश्यत ।
उद्यम्य निशितं खड्गं रुधिरेण समुक्षितम् ॥ १३२

---

1. ख—श्रमाभिभूताः संरब्धाः श्रान्तगात्राः पिपासिताः ।
2. क—अर्धद्वयं नास्ति [अधिकः पाठः]
3. ख—भिन्दन्तः प्रासान् प्रासाननन्तरम्
   बहवश्च कृतप्राणाः क्षत्रिया जयगृद्धिनः । [अधिकः पाठः]
4. ख—इदमर्धं नास्ति
5. क-ख-घ—वृकगृध्रश्वकाकानामतुले मोदके सति । [पाठान्तरम्]

[1]उत्थितेषु कबन्धेषु युद्धे तस्मिन् जनाधिप ।
तदा रुधिरगन्धेन योधाः कश्मलमाविशन् ॥　　१३३

मन्दीभूते ततश्शब्दे पाण्डवानां महद्बलम् ।
अल्पावशिष्टैस्तुरगैर् अभ्यवर्तत सौबलः ॥　　१३४

ततोऽभ्यधावंस्त्वरिताः पाण्डवा जयगर्धिनः ।
पदातयश्च नागाश्च सादिनश्चोद्यतायुधाः ॥　　१३५

कोष्ठीकृत्य तदा ह्येनं परिक्षिप्य च सर्वशः ।
शस्त्रैर्नानाविधैर्जघ्नुर् युद्धपारं तितीर्षवः ॥　　१३६

त्वदीयास्तं तु सम्प्रेक्ष्य सर्वशस्समभिद्रुतम् ।
साश्वपत्तिद्विप[2]रथाः पाण्डवानभिदुद्रुवुः ॥　　१३७

केचित् पदातयः पद्भिर् मुष्टिभिश्च परस्परम् ।
निजघ्नु[3]स्समरे शूराः क्षीणशस्त्रास्ततोऽपतन् ॥　　१३८

रथेभ्यो रथिनः पेतुर् द्विपेभ्यो हस्तिसादिनः ।
विमानेभ्यः परिभ्रष्टास् सिद्धाः पुण्यक्षये यथा ॥　　१३९

एवमन्योन्यमायत्ता योधा जघ्नुर्महामृधे ।
पितॄन् भ्रातॄन् वयस्यांश्च पुत्रानपि तथाऽपरे ॥　　१४०

---

1. क-ख-घ—तदोत्थितेषु बहुषु कबन्धेषु जनाधिप ।　　[पाठान्तरम्]
2. ख-घ—रथान्पाण्डवान् समभिद्रवन्
3. ख-घ—स्सङ्कटे योधाः

एवमासीदमर्यादं युद्धं भरतसत्तम ।
प्रासासिबाणकलिले वर्तमाने सुदारुणे ॥ १४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि विंशोऽध्यायः ॥ २० ॥
॥ ७४ ॥ शल्यवधपर्वणि विंशोऽध्यायः ॥ २० ॥
[अस्मिन्नध्याये १४१ श्लोकाः]

---

## ॥ एकविंशोऽध्यायः ॥

अर्जुनेन दुर्योधनगर्हणपूर्वकं तत्सेनानिबर्हणम् ॥

---

सञ्जयः—

अल्पावशिष्टे सैन्ये तु पाण्डवैर्निहते बले ।
अश्वैस्सप्तसहस्रैस्तान् उपावर्तत सौबलः ॥ १

स यात्वा वाहिनीं तूर्णं चोदयानस्स्वकान् युधि ।
युध्यध्वमिति संहृष्टः पुनः पुनररिन्दमः ॥ २

अपृच्छत् क्षत्रियांश्चात्र क्व स राजा सुयोधनः ।
शकुनेस्तु वचश्श्रुत्वा त ऊचुर्भरतर्षभ ॥ ३

सैनिकाः—

असौ तिष्ठति कौरव्यो रणमध्ये महारथः ।
यत्रैतत् सुमहच्छत्रं पूर्णचन्द्रसमप्रभम् ॥ ४

यत्रैते सतलत्राणा रथास्तिष्ठन्ति दंशिताः ।
यत्रैष शब्दस्तुमुलः पर्जन्यनिनदोपमः ॥ ५

तत्र गच्छ द्रुतं राजंस् ततो द्रक्ष्यसि कौरवम् ॥ ५॥

सञ्जयः—

एवमुक्तस्तु तैश्शूरैश् शकुनिस्सौबलस्तदा ।
प्रययौ तत्र यत्रासौ पुत्रस्तव जनाधिप ॥ ६॥

सर्वतस्संवृतो वीरैस् समरेष्वनिवर्तिभिः ॥ ७

ततो दुर्योधनं दृष्ट्वा रथानीके व्यवस्थितम् ।
सरथांस्तावकान् सर्वान् हर्षयञ् शकुनिस्ततः ॥ ८

दुर्योधनमिदं वाक्यं हृष्टरूपो विशां पते ।
कृतकार्यमिवात्मानं मन्यमानोऽब्रवीन्नृपम् ॥ ९

शकुनिः—

जहि राजन् रथानीकम् अश्वास्सर्वे हता मया ।
नात्यक्त्वा जीवितं सङ्ख्ये शक्यो जेतुं युधिष्ठिरः ॥ १०

हते तस्मिन् रथानीके पाण्डवेनाभिपालिते ।
गजानेतान् हनिष्यामः पदातींश्चेतरान् बहून् ॥ ११

सञ्जयः—

श्रुत्वा तु वचनं तस्य तावका जयगृद्धवः ।
जवेनाभ्यपतन् हृष्टाः पाण्डवानामनीकिनीम् ॥ १२

बद्धनिस्त्रिंशतूणीराः प्रगृहीतशरासनाः ।
शरासनानि धून्वानास् सिंहनादान् प्रचक्रिरे ॥ १३

ततो ज्यातलनिर्घोषः पुनरासीद्विशां पते ।
प्रादुरासीच्छराणां च प्रमुक्तानां सुदारुणः ॥ १४

तान् समीपगतान् दृष्ट्वा जवेनोद्यतकार्मुकान् ।
उवाच देवकीपुत्रं कुन्तीपुत्रो धनञ्जयः ॥ १५

अर्जुनः—

चोदयाश्वानसम्भ्रान्तः प्रविशैतद्बलार्णवम् ।
अन्तमद्य गमिष्यामि शत्रूणां निशितैश्शरैः ॥ १६

अष्टादश दिनान्यद्य युद्धस्यास्य जनार्दन ।
वर्तमानस्य महतस् समासाद्य परस्परम् ॥ १७

अनन्तकल्पा ध्वजिनी हता ह्येषां महात्मनाम् ।
क्षयमद्य गता युद्धे पश्य दैवं यथाविधम् ॥ १८

समुद्रकल्पं तु बलं धार्तराष्ट्रस्य माधव ।
अस्मानासाद्य सञ्जातं गोष्पदोपममच्युत ॥ १९

हते भीष्मे धीर्ममासीच् छमस्स्यादिति माधव ।
न च तत् कृतवान् मूढो धार्तराष्ट्रस्सुबालिशः ॥ २०

उक्तं भीष्मेण यद्वाक्यं हितं पथ्यं च माधव ।
तच्चापि नासौ कृतवान् हीनबुद्धिस्सुयोधनः ॥ २१

तस्मिंस्तु निहते भीष्मे प्रच्युते पृथिवीपतौ ।
न जाने कारणं किन्नु येन युद्धमवर्तत ॥ २२

मूढांस्तु सर्वथा मन्ये धार्तराष्ट्रान् सुबालिशान् ।
पतिते शन्तनोः पुत्रे येऽकार्षुस्सङ्गरं पुनः ॥ २३

अनन्तरं च निहते द्रोणे ब्रह्मविदां वरे ।
राधेये च विकर्णे च नैव शाम्यति वैशसम् ॥ २४

अल्पावशिष्टे सैन्येऽस्मिन् सूतपुत्रे निपातिते ।
सहपुत्रे नरव्याघ्रे नैव शाम्यति वैशसम् ॥ २५

[1]श्रुतायुषि हते वीरे जलसन्धे च मागधे ।
श्रुतायुधे च विक्रान्ते नैव शाम्यति वैशसम् ॥ २६

[2]भूरिश्रवसि शल्ये च साल्वे चैव जनार्दन ।
आवन्त्येषु च शूरेषु नैव शाम्यति वैशसम् ॥ २७

जयद्रथे च निहते राक्षसे चाप्यलायुधे ।
[3]बाह्लीके सोमदत्ते च नैव शाम्यति वैशसम् ॥ २८

भगदत्ते हते शूरे काम्भोजे च सुदक्षिणे ।
नानादेशसमुत्थे च हते सैन्ये पृथग्विधे ॥ २९

दुश्शासने च निहते नैव शाम्यति वैशसम् ॥ २९॥

---

1. अ—नास्त्यर्धद्वयमिदम्　　2. ख—अर्धसप्तकं नास्ति
3. क-घ—इदमर्धं नास्ति

[1]दृष्ट्वा च निहताञ् शूरान् परान् मण्डलिकान् नृपान् ।
[2]बलानि च रणे कृष्ण नैव शाम्यति वैशसम् ॥ ३०॥

अक्षौहिणीं हतां दृष्ट्वा भीमसेनेन संयुगे ।
मोहाद्वा यदि वा लोभान्नैव शाम्यति वैशसम् ॥ ३१॥

[3]हतप्रवीरां विध्वस्तां दृष्ट्वा चेमां चमूं रणे ।
अलम्बुसे च निहते नैव शाम्यति वैशसम् ॥ ३२॥

[4]भ्रातॄन् विनिहतान् दृष्ट्वा वयस्यान् मातुलानपि ।
पुत्रान् विनिहतान् सङ्ख्ये नैव शाम्यति वैशसम् ॥ ३३॥

को नु राजा कुले जातः कौरवेयो विशेषतः ।
निरर्थकं महद्वैरं कुर्यादन्यस्सुयोधनात् ॥ ३४॥

गुणतोऽभ्यधिकाञ् श्रुत्वा बलतश्शौर्यतोऽपि वा ।
अमूढः को नु युध्येत जानन् प्राज्ञो हिताहितम् ॥ ३५॥

यन्न तस्य मनोऽप्यासीत् त्वयोक्तस्य हितं वचः ।
प्रशमे पाण्डवैस्सार्धं सोऽन्यस्य शृणुयात् कथम् ॥ ३६॥

येन शान्तनवो भीष्मो द्रोणो विदुर एव च ।
प्रत्याख्यातारशमस्यार्थे किन्नु तस्यास्ति भेषजम् ॥ ३७॥

मौर्ख्याद्येन पिता वृद्धः प्रत्याख्यातो जनार्दन ।

---

1. घ—इदमर्धं नास्ति 2. ख—कोश एकस्मिन्नेवेदमर्धं वर्तते
3. अ—अर्धचतुष्टयं नास्ति 4. ख—अर्धद्वयं नास्ति

तथा माता हितं वाक्यं भाषमाणा हितैषिणी ॥ ३८॥

प्रत्याख्याता ह्यसत्कृत्य कस्माद्रोचयते वचः ॥ ३९

कुलान्तकरणो व्यक्तं जात एष जनार्दन ।
यथाऽस्य दृश्यते चेष्टा नीतिश्चैव विशां पते ॥ ४०

नैष दास्यति नो राज्यम् इति मे मतिरच्युत ॥ ४०॥

उक्तो हि बहुशस्तात विदुरेण महात्मना ।
न जीवन् दास्यते भागं धार्तराष्ट्रः कथञ्चन ॥ ४१॥

यावत् प्राणा धरिष्यन्ति धार्तराष्ट्रस्य मानद ।
तावद्युष्मास्वपापेषु प्रकरिष्यति पापकम् ॥ ४२॥

न स शक्योऽन्यथा जेतुम् ऋते युद्धेन माधव ।
इत्यब्रवीत् सदा मां हि विदुरस्सत्यदर्शनः ॥ ४३॥

तत् सर्वमद्य जानामि व्यवसायं दुरात्मनः ।
यदुक्तं वचनं तेन विदुरेण महात्मना ॥ ४४॥

यो हि श्रुत्वा वचः पथ्यं [1]धार्तराष्ट्रो यथातथम् ।
नाकरोद्विदुरस्यातो ध्रुवं नाश उपस्थितः ॥ ४५॥

उक्तं हि बहुभिस्सिद्धैर् जातमात्रे सुयोधने ।
एनं प्राप्य दुरात्मानं क्षयं क्षत्रं गमिष्यति ॥ ४६॥

---

1. क-ख-घ—जामदग्न्याद्यथातथम्

तदिदं वचनं तेषाम् [1]अद्य प्राप्तं जनार्दन ।
क्षयं गता हि राजानो दुर्योधनकृतेन हि ॥ ४७॥

सोऽद्य सर्वान् रणे योधान् निहनिष्यति माधव ॥ ४८

क्षत्रियेषु हतेष्वाशु शून्ये च शिबिरे कृते ।
वधाय चात्मनोऽस्माभिस् संयुगं रोचयिष्यति ॥ ४९

तदन्तं हि भवेद्वैरम् अनुमानेन माधव ॥ ४९॥

एवं पश्यामि वार्ष्णेय चिन्तयन् प्रज्ञया स्वयम् ।
विदुरस्य च वाक्येन चेष्टया च दुरात्मनः ॥ ५०॥

तस्माद्याहि चमूं वीर यावद्धन्मि शितैश्शरैः ।
दुर्योधनं दुरात्मानं वाहिनीं चास्य संयुगे ॥ ५१॥

क्षेममद्य करिष्यामि धर्मराजस्य माधव ।
हत्वैतद्दुर्बलं सैन्यं धार्तराष्ट्रस्य पश्यतः ॥ ५२॥

सञ्जयः—

अभीशुहस्तो दाशार्हस् तथोक्तस्सव्यसाचिना ।
तं बलौघममित्राणां तूर्णं सम्प्राविशद्रणे ॥ ५३॥

शरासनवरं घोरं शक्तिकण्टकसंवृतम् ।
गदापरिघपाषाणं रथनागमहाद्रुमम् ॥ ५४॥

हयपत्तिलताकीर्णं गाहमानो महायशाः ।

1. क-ख-घ—निरुक्तं वै जनार्दन

व्यचरत् तत्र गोविन्दस् स्वरथेनाशुपातिना ॥ ५५॥

ते हयाः पाण्डरा राजन् वहन्तोऽर्जुनमाहवे ।
दिक्षु सर्वास्वदृश्यन्त दाशार्हेण प्रचोदिताः ॥ ५६॥

ततः प्रायाद्रथेनाजौ सव्यसाची परन्तपः ।
किरञ् शरशतांस्तीक्ष्णान् वारिधारा इवाम्बुदः ॥ ५७॥

प्रादुरासीन्महाशब्दश् शराणां नतपर्वणाम् ।
इषुभिश्छाद्यमानानां सङ्ग्रामे सव्यसाचिना ॥ ५८॥

असज्जन्तस्तनुत्रेषु शरौघाः प्रापतन् भुवि ।
इन्द्राशनिसमस्पर्शा गाण्डीवप्रेषिताश्शराः ॥ ५९॥

नरान् नागान् समाहत्य हयांश्चापि विशां पते ।
आपतंस्तु रणे बाणाः पतङ्गा इव घोषिणः ॥ ६०॥

आसीत् सर्वमवच्छन्नं गाण्डीवप्रेषितैश्शरैः ।
न प्राज्ञायन्त सङ्ग्रामे दिशो वा प्रदिशोऽपि वा ॥ ६१॥

सर्वमासीज्जगत् पूर्णं पार्थनामाङ्कितैश्शरैः ।
रुक्मपुङ्खैश्शितैर्बाणैः कर्मारपरिमार्जितैः ॥ ६२॥

ते दह्यमानाः पार्थेन पावकेनेव कुञ्जराः ।
समासीदंस्तु कौरव्या वध्यमानाश्शितैश्शरैः ॥ ६३॥

शरचापधरः पार्थः प्रज्वलन्निव भारत ।
ददाह समरे योधान् कक्षमग्निरिव ज्वलन् ॥ ६४॥

यथा वनान्ते वनजैर्विसृष्टः
कक्षं दहेत् कृष्णगतिस्सुघोरः ।
भूरिद्रुमं शुष्कलताप्रतानं
भृशं समिद्धो ज्वलनः प्रतापी ॥ ६५॥

एवं स नाराचगणप्रतापी
शराग्निरुच्चावचतिग्मतेजाः ।
ददाह सर्वां तव पुत्रसेनाम्
अमृष्यमाणस्तरसा तरस्वी ॥ ६६॥

तस्येषवः प्राणहरास्सुमुक्ता
न सज्जन्ते वर्मसु रुक्मपुङ्खाः ।
न च द्वितीयं प्रमुमोच काण्डम्
नरे हये वाऽपि रथे द्विपे वा ॥ ६७॥

अनेकरूपाकृतिभिश्च बाणैर्
महारथानीकमनुप्रविश्य ।
स एक एवं तव पुत्रसेनां
जघान दैत्यानिव वज्रपाणिः ॥ ६८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ ७४ ॥ शल्यवधपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये ६८॥ श्लोकाः ]

## ॥ द्वात्रिंशोऽध्यायः ॥

धृष्टद्युम्नपराजितेन दुर्योधनेनाश्वारोहणेन पलायनम् ॥ १ ॥ अश्वत्थामादिभिस्तदन्वेषणम् ॥ २ ॥

सञ्जयः—

अस्यतां यतमानानां शूराणामनिवर्तिनाम् ।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ १

इन्द्राशनिसमस्पर्शान् अविषह्यान् मनोजवान् ।
विसृजन् दृश्यते बाणान् धारा मुञ्चन्निवाम्बुदः ॥ २

तत् सैन्यं भरतश्रेष्ठ वध्यमानं किरीटिना ।
सम्प्रदुद्राव सङ्ग्रामात् तव पुत्रस्य पश्यतः ॥ ३

हतयुग्यास्तथा केचिद्धतसूतरथाः परे ।
भग्नाक्षयुगचक्रेषाः केचिदासन् विशां पते ॥ ४

अक्षता युगपत् केचित् प्राद्रवन् भयपीडिताः ।
अन्येषां सायकाः क्षीणास् तथाऽन्ये शरपीडिताः ॥ ५

केचित् पुत्रानुपादाय हतभूयिष्ठवाहनाः ।
विचुक्रुशुः पितॄनन्ये सहायानपरे पुनः ॥ ६

बान्धवांश्च नरव्याघ्र भ्रातॄन् सम्बन्धिनस्तथा ।
दुद्रुवुः केचिदुत्सृज्य तत्र तत्र विशां पते ॥ ७

बह्वोऽत्र भृशं विद्धा मुह्यमाना महारथाः ।
नष्टसंज्ञास्स्म दृश्यन्ते पार्थबाणहता नराः ॥ ८

तानन्ये रथमारोप्य आश्वास्य च मुहूर्तकम् ।
विश्रान्ताश्च वितृष्णाश्च पुनर्युद्धाय जग्मिरे ॥ ९

तानपास्य गताः केचित् पुनरेव युयुत्सवः ।
कुर्वन्तस्तव पुत्रस्य शासनं युद्धदुर्मदाः ॥ १०

पानीयमपरे पीत्वा समाश्वास्य च वाहनान् ।
वर्माणि च समारोप्य जग्मुर्भरतसत्तम ॥ ११

समाश्वास्य परे भ्रातॄन् निक्षिप्य शिबिरेऽपि च ।
पुत्रानन्ये पितॄनन्ये पुनर्युद्धमरोचयन् ॥ १२

सज्जयित्वा रथान् केचिद् यथा मुख्या विशां पते ।
आवृत्य पाण्डवानीकं पुनर्युद्धमरोचयन् ॥ १३

ते शूराः किङ्किणीजालैस् समाच्छन्ना बभासिरे ।
त्रैलोक्यसमरे युक्ता यथा दैवतदानवाः ॥ १४

आगम्य सहसा केचिद् रथैस्स्वर्णविभूषितैः ।
पाण्डवानामनीकेषु धृष्टद्युम्नमयोधयन् ॥ १५

धृष्टद्युम्नोऽपि पाञ्चाल्यश् शिखण्डी च महारथः ।
नाकुलिश्च शतानीको रथानीकमयोधयन् ॥ १६

पाञ्चाल्यस्तु ततः क्रुद्धस् सैन्येन महता वृतः ।

अभ्यधावत सङ्क्रुद्धस् तावकान् हन्तुमुद्यतः ॥  १७

ततस्त्वापततस्तस्य तव पुत्रो जनाधिप ।
बाणसङ्घाननेकान् वै प्रेषयामास भारत ॥  १८

धृष्टद्युम्नस्ततो राजंस् तव पुत्रेण धन्विना ।
नाराचैर्बहुभिः क्षिप्रं बाह्वोरुरसि चार्पितः ॥  १९

सोऽतिविद्धो महेष्वासस् तोत्रार्दित इव द्विपः ।
तस्याश्वांश्चतुरो बाणैः प्रेषयामास मृत्यवे ॥  २०

सारथेश्चास्य भल्लेन शिरः कायादपाहरत् ॥  २०॥

ततो दुर्योधनो राजा पृष्ठमारुह्य वाजिनः ।
अपाक्रामद्धतरथो नातिदूरमरिन्दमः ॥  २१॥

दृष्ट्वा तु हतभूयिष्ठं स्वमनीकममर्षणः ।
तव पुत्रो महाराज प्रययौ यत्र सौबलः ॥  २२॥

ततो रथेषु भग्नेषु त्रिसाहस्रा महाद्विपाः ।
पाण्डवान् रथिनः पञ्च समन्तात् पर्यवारयन् ॥  २३॥

ते वृतास्समरे पञ्च गजानीकेन भारत ।
अशोभन्त नरव्याघ्रा ग्रहास्तारागणैरिव ॥  २४॥

ततोऽर्जुनो महाराज लब्धलक्षो महाभुजः ।
विनिर्ययौ रथेनैव श्वेताश्वः कृष्णसारथिः ॥  २५॥

तैस्समन्तात् परिवृतः कुञ्जरैः पर्वतोपमैः ।

नाराचैर्विविधैस्तीक्ष्णैर् गजानीकमयोधयत् ॥ २६॥
तत्रैकबाणनिहतान् अपश्याम महागजान् ।
पतितान् पात्यमानांश्च प्रभग्नान् सव्यसाचिना ॥ २७॥
भीमसेनस्तु तान् दृष्ट्वा नागान् वै पर्वतोपमान् ।
करेण गृह्य महतीं गदामभ्यद्रवद्बली ॥ २८॥
अवप्लुत्य रथात् तूर्णं दण्डपाणिरिवान्तकः ॥ २९
तमुद्यतगदं दृष्ट्वा पाण्डवानां महारथम् ।
वित्रेसुस्तावका योधाश् शकृन्मूत्रं च सुस्रुवुः ॥ ३०
आविग्नं च बलं सर्वं गदाहस्ते वृकोदरे ॥ ३०॥
[1]गदया भीमसेनेन भिन्नकुम्भान् कृतव्रणान् ।
धावमानानपश्याम कुञ्जरान् पर्वतोपमान् ॥ ३१॥
प्रधाव्य कुञ्जरास्ते तु भीमसेनगदाहताः ।
पेतुरार्तस्वरं कृत्वा छिन्नपक्षा इवाद्रयः ॥ ३२॥
तान् भिन्नकुम्भांस्तु बहून् द्रवमाणानितस्ततः ।
पतमानांस्तु सम्प्रेक्ष्य वित्रेसुस्तव सैनिकाः ॥ ३३॥
युधिष्ठिरोऽपि सङ्क्रुद्धो माद्रीपुत्रौ च पाण्डवौ ।
गृध्रपक्षैश्शितैर्बाणैर् जघ्नुर्वै गजयोधिनः ॥ ३४॥
धृष्टद्युम्नस्तु समरे पराजित्य नराधिपम् ।
अपक्रान्ते तव सुते हयपृष्ठं समाश्रिते ॥ ३५॥

1. ख—इदमर्धं नास्ति

दृष्ट्वा च पाण्डवान् सर्वान् कुञ्जरैः परिवारितान् ।
समेतश्च महाराज सह सर्वैः प्रभद्रकैः ॥ ३६॥
पुत्रः पाञ्चालराजस्य जिघांसुः कौरवान् ययौ ॥ ३७
अदृष्ट्वा तु रथानीके दुर्योधनमरिन्दमम् ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ ३८
अपृच्छन् क्षत्रियांस्तत्र क्व नो दुर्योधनो गतः ॥ ३८॥
अपश्यमाना राजानं वर्तमाने जनक्षये ॥ ३९
मन्वाना निहतं तत्र तव पुत्रं महारथाः ।
विषण्णवदना भूत्वा पर्यपृच्छन्त ते सुतम् ॥ ४०
आहुः केचिद्धते सूते प्रयातो यत्र सौबलः ।
[1]हित्वा पाञ्चालराजस्य तदनीकं दुरुत्सहम् ॥ ४१
अपरे त्वब्रुवंस्तत्र क्षत्रिया भृशविक्षताः ॥ ४१॥

क्षत्रियाः—
दुर्योधनेन किं कार्यं द्रक्ष्यध्वं यदि जीवति ।
युध्यध्वं सहितास्सर्वे किं वा राजा करिष्यति ॥ ४२॥

सञ्जयः—
ते क्षत्रियाः क्षतैर्गात्रैर् हतभूयिष्ठवाहनाः ।
शरैस्सम्पीड्यमानाश्च नातिव्यक्तमिवाब्रुवन् ॥ ४३॥

क्षत्रियाः—
इदं सर्वं बलं हन्मो येन स्म परिवारिताः ।

---

1. ख-घ—इदमर्धं नास्ति

एते सर्वे गजान् हत्वा उपयान्ति स्म पाण्डवाः ॥ ४४।
श्रुत्वा तु वचनं तेषाम् अश्वत्थामा महाबलः ।
भित्त्वा पाञ्चालराजस्य तदनीकं दुरुत्सहम् ॥ ४५॥
कृपश्च कृतवर्मा च प्रययुर्यत्र सौबलः ।
रथानीकं परित्यज्य शूरास्सुदृढधन्विनः ॥ ४६॥
ततस्तेषु प्रयातेषु धृष्टद्युम्नपुरस्कृताः ।
आययुः पाण्डवा राजन् विनिघ्नन्तश्च तावकान् ॥ ४७॥
दृष्ट्वा तु तानापततस् सम्प्रहृष्टान् महारथान् ॥
पराक्रान्तांस्ततो दृष्ट्वा निराशा जीवितेऽभवन् ॥ ४८॥
विवर्णमुखभूयिष्ठम् अभवत् तावकं बलम् ॥ ४९
परिक्षीणायुधान् दृष्ट्वा तानहं परिवारितान् ।
राजन् बलेन त्र्यङ्गेन त्यक्त्वा जीवितमात्मनः ॥ ५०
आत्मना पञ्चमोऽयुध्यं पाञ्चालस्य बलेन हि ॥ ५०॥
तस्मिन् देशे व्यवस्थाप्य यत्र शारद्वतस्स्थितः ।
तं प्रयुद्धा वयं पञ्च किरीटिशरपीडिताः ॥ ५१॥
धृष्टद्युम्नस्य चानीके यत्र नोऽभूद्रणो महान् ।
निर्जितास्ते वयं सर्वे व्यपयाता रणात् ततः ॥ ५२॥
अथापश्यं सात्यकिं तम् उपायान्तं महारथम् ।
रथैश्चतुश्शतैर्वीरो मां चाभ्यद्रवदाहवे ॥ ५३॥
धृष्टद्युम्नादहं मुक्तः कथञ्चिच्छ्रान्तवाहनः ।

पतितो माधवानीके दुष्कृती नरके यथा ॥ ५४॥

तत्र युद्धमभूद्घोरं मुहूर्तमतिदारुणम् ॥ ५५

सात्यकिस्तु महाबाहुर् मम हत्वा परिच्छदम् ।
जीवग्राहमगृह्णान्मां मूर्च्छितं पतितं भुवि ॥ ५६

तदा मुहूर्तादेवाथ गजानीकमवध्यत ।
गदया भीमसेनेन नाराचैरर्जुनेन च ॥ ५७

प्रतिविष्टैर्महानागैस् समन्तात् पर्वतोपमैः ।
नातिप्रसिद्धेव गतिः पाण्डवानामजायत ॥ ५८

रथमार्गं ततश्चक्रे भीमसेनो महाबलः ।
[1]पाण्डवानां महाराज व्यपकर्षन् महागजान् ॥ ५९

अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
अपश्यन्तो गजानीके दुर्योधनमरिन्दमम् ॥ ६०

[2]राजानं मृगयामासुस् तव पुत्रं महारथम् ॥ ६०॥

परित्यज्य च पाञ्चाल्यं प्रयाता यत्र सौबलः ।
राज्ञोऽदर्शनसंविग्ना वर्तमाने जनक्षये ॥ ६१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
॥ ७४ ॥ शल्यवधपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[अस्मिन्नध्याये ६१॥ श्लोकाः]

---

1. ध—अर्धपञ्चकं नास्ति 2. क—अर्धत्रयं नास्ति

## ॥ त्रयोविंशोऽध्यायः ॥



भीमेनावशिष्टानां दुर्योधनानुजानां वधः ॥

सञ्जयः—

गजानीके हते तस्मिन् पाण्डुपुत्रेण भारत ।
वध्यमाने बले राजन् भीमसेनेन सर्वशः ॥ १

विचरन्तमपश्याम भीमसेनं रणाजिरे ।
दण्डहस्तमिव क्रुद्धम् अन्तकं प्राणहारिणम् ॥ २

समेत्य च महाराज हतशेषास्सुतास्तव ।
अदृश्यमाने कौरव्ये पुत्रे दुर्योधने तव ॥ ३

सोदर्यास्सहिता भूत्वा भीमसेनमुपाद्रवन् ॥ ३॥

[1]श्रुतर्वा सृञ्जयश्चैव जयत्सेनश्श्रुतान्तकः ।
दुर्विमोचनकश्चैव तथा दुर्विषहो बली ॥ ४॥

दुर्मर्षणो [2]महाराज जैत्रो [3]भूरिबलो नलः ।
इत्येते सहिता भूत्वा तव पुत्रासमन्ततः ॥ ५॥

भीमसेनमभिद्रुत्य रुरुधुस्सर्वतो दिशः ॥ ६

1. ख—श्रुतधर्मा च   घ—श्रुतर्वाऽथ सुजातश्च
2. घ—दुष्प्रधर्षौ
3. क—हरि   घ—भूरिबलोऽनृणः

ततो भीमो महाराज स्वरथं पुनरास्थितः ।
मुमोच निशितान् बाणान् पुत्राणां तव मर्मसु ॥ ७

ते कीर्यमाणा भीमेन पुत्रास्तव महारणे ।
भीमसेनमवासेधन् [1]प्लवगा इव कुञ्जरम् ॥ ८

ततः क्रुद्धो रणे भीमश् शिरो दुर्मर्षणस्य ह ।
क्षुरप्रेण प्रमथ्याशु पातयामास भूतले ॥ ९

ततोऽपरेण भल्लेन सर्वावरणभेदिना ।
श्रुतान्तमवधीद्भीमस् तव पुत्रं महारथम् ॥ १०

जयत्सेनं ततो विद्ध्वा नाराचेन हसन्निव ।
पातयामास कौरव्यो रथोपस्थादरिन्दमः ॥ ११

स पपात रथाद्राजन् भूमौ तूर्णं ममार च ॥ ११॥

श्रुतर्वा तु ततो भीमं क्रुद्धो विव्याध मारिष ।
शतेन गृध्रवाजानां शराणां नतपर्वणाम् ॥ १२॥

[2]ततः क्रुद्धो रणे भीमो जैत्रं भूरिबलं नलम् ।
त्रीनेतांस्त्रिभिरानर्च्छद् विषाग्निप्रतिमैश्शरैः ॥ १३॥

ते हता न्यपतन् भूमौ स्यन्दनेभ्यो महारथाः ।
वसन्ते पुष्पशबला निकृत्ता इव किंशुकाः ॥ १४॥

---

1. क—प्रपाता घ—प्रवातादिव ख—प्रहस्ता इव+राः
2. ख—तं तथा शरवर्षेण च्छादयन्तं समन्ततः ।
शिरश्चिच्छेद भल्लेन स्मयमान इवान्तकः । [अधिकः पाठः]

ततोऽपरेण तीक्ष्णेन नाराचेन परन्तपः ।
दुर्विमोचनमाहत्य प्रेषयामास मृत्यवे ॥ १५॥

स हतः प्रापतद्भूमौ रथेन रथिनां वरः ।
गिरेस्तु कूटजो वृक्षो मारुतेनेव पातितः ॥ १६॥

दुष्प्रधर्षं ततश्चैव सुजातं च सुतौ तव ।
एकैकं ह्यवधीत् सङ्ख्ये द्वाभ्यां द्वाभ्यां महाबलः ॥ १७॥

तौ शिलीमुखनुन्नाङ्गौ पेततू रथसत्तमौ ॥ १८

ततो यतन्तमपरम् अभिवीक्ष्य सुतं तव ।
भल्लेन युधि विव्याध भीमो दुर्विषहं रणे ॥ १९

स पपात रणे राजन् पश्यतां सर्वधन्विनाम् ॥ १९॥

दृष्ट्वा तु निहतान् भ्रातॄन् बहूनेकेन संयुगे ।
अमर्षवशमापन्नश्_ श्रुतर्वा भीममभ्ययात् ॥ २०॥

विक्षिपंस्तु महच्चापं कार्तस्वरविभूषितम् ।
विसृजन् सायकांश्चैव विषाग्निप्रतिमान् बहून् ॥ २१॥

स तु राजन् धनुश्छित्वा पाण्डवस्य महामृधे ।
अथैनं छिन्नधन्वानं विंशत्या समवाकिरत् ॥ २२॥

ततोऽन्यद्धनुरादाय भीमसेनो महारथः ।
अवाकिरत्तव सुतं तिष्ठ तिष्ठेति चाब्रवीत् ॥ २३॥

महदासीत्तयोर्युद्धं चित्ररूपं भयानकम् ।

याद्दशस्समरः पूर्वं जम्भवासवयोरभूत् ॥ २४॥

तयोस्तत्र शरैर्मुक्तैर् यमदण्डनिभैश्शितैः ।
समाच्छन्ना धरा सर्वा [1]खं च सर्वा दिशस्तथा ॥ २५॥

ततश्श्रुतर्वा सङ्क्रुद्धो धनुरायम्य सायकैः ।
भीमसेनं रणे तूर्णं बाह्वोरुरसि चार्पयत् ॥ २६॥

सोऽतिविद्धो महाराज तव पुत्रेण धन्विना ।
भीमस्सञ्चुक्षुभे क्रुद्धः पर्वणीव महोदधिः ॥ २७॥

ततो भीमो रुषाविष्टः पुत्रस्य तव भारत ।
सारथिं चतुरोऽश्वांश् शरैर्निन्ये यमक्षयम् ॥ २८॥

विरथं तं समालक्ष्य विशिखैर्लोमवाहिभिः ।
अवाकिरदमेयात्मा दर्शयन् पाणिलाघवम् ॥ २९॥

श्रुतर्वा विरथो राजन् नाददे खड्गचर्मणी ॥ ३०

तस्याथाऽददतः खड्गं शतचन्द्रं च भानुमत् ।
क्षुरप्रेण शिरः कायात् पातयामास पाण्डवः ॥ ३१

छिन्नोत्तमाङ्गस्य ततः क्षुरप्रेण महात्मनः ।
पपात कायस्स्वरथाद् वसुधामनुनादयन् ॥ ३२

तस्मिन्निपतिते वीरे तावका भयमोहिताः ।
अभ्यद्रवन्त सङ्ग्रामे भीमसेनं युयुत्सया ॥ ३३

---

1. ख-घ—न प्राज्ञायत किञ्चन

तानापतत एवाशु हतशेषान् महाबलान् ।
दंशितः प्रतिजग्राह भीमसेनः प्रतापवान् ॥ ३४

ते तु तं वै समासाद्य परिवव्रुस्समन्ततः ॥ ३४॥

ततस्तु संवृतो भीमस् तावकैर्निशितैश्शरैः ।
पीडयामास तान् सर्वान् सहस्राक्ष इवासुरान् ॥ ३५॥

ततः पञ्चशतान् हत्वा सवरूथान् महारथान् ।
जघान कुञ्जरानीकं पुनस्सप्तशतं युधि ॥ ३६॥

हत्वा दश सहस्राणि पत्तीनां परमेषुभिः ।
वाजिनां च शतान्यष्टौ पाण्डवस्स विराजते ॥ ३७॥

भीमसेनस्तु कौन्तेयो हत्वा युद्धे सुतांस्तव ।
मेने कृतार्थमात्मानं सफलं जन्म च प्रभो ॥ ३८॥

तं तथा युध्यमानं च विनिघ्नन्तं च तावकान् ।
ईक्षितुं नोत्सहन्ते स्म तव सैन्या नराधिप । ३९॥

विद्राव्य तु कुरून् सर्वास् तांश्च हत्वा पदानुगान् ।
दोर्भ्यां शब्दं ततश्चक्रे त्रासयानो हयद्विपान् ॥ ४०॥

हतभूयिष्ठयोधा तु तव सेना विशां पते ।
किञ्चिच्छेषा महाराज कृपणा समपद्यत ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ ७४ ॥ शल्यवधपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[अस्मिन्नध्याये ४१॥ श्लोकाः]

## ॥ चतुर्विंशोऽध्यायः ॥

कृष्णार्जुनयोः संवादः ॥ १ ॥ सङ्कुलयुद्धम् ॥ २ ॥ भीमेन सुदर्शननाम्नो दुर्योधनानुजस्य वधः ॥ ३ ॥

सञ्जयः—

दुर्योधनो महाराज [1]सुदर्शश्चापि ते सुतः ।
हतशेषौ तदा सङ्ख्ये वाजिमध्ये व्यवस्थितौ ॥ १

[2]ततो दुर्योधनं दृष्ट्वा वाजिमध्ये व्यवस्थितम् ।
उवाच देवकीपुत्रः कुन्तीपुत्रं धनञ्जयम् ॥ २

श्रीभगवान्—

शत्रवो हतभूयिष्ठाः ज्ञातयः परिपालिताः ।
गृहीत्वा सञ्जयं चासौ निवृत्तश्शिनिपुङ्गवः ॥ ३

परिश्रान्तश्च नकुलस् सहदेवश्च भारत ।
योधयित्वा रणे पार्थान् धार्तराष्ट्रपदानुगान् ॥ ४

सुयोधनमभित्यज्य त्रय एते व्यवस्थिताः ।
कृपश्च कृतवर्मा च द्रौणिश्चैव महारथः ॥ ५

असौ तिष्ठति पाञ्चाल्यश् श्रिया परमया युतः ।
दुर्योधनबलं हत्वा सहसर्वैः प्रभद्रकैः ॥ ६

असौ दुर्योधनः पार्थ वाजिमध्ये व्यवस्थितः ।

1. ख—भ्राताचास्य सुदर्शनः　　2. ख—इदमर्धं नास्ति

[1]छत्रेण ध्रियमाणेन प्रेक्षमाणो मुहुर्मुहुः ॥ ७

प्रतिव्यूह्य बलं सर्वं [2]सङ्ग्रामे धृतराष्ट्रजः ।
[3]एनं हत्वा शितैर्बाणैः कृतकृत्यो भविष्यसि ॥ ८

गजानीकं हतं दृष्ट्वा त्वां च प्राप्तमरिन्दमम् ।
यावन्नाभ्यतिवर्तेत तावज्जहि सुयोधनम् ॥ ९

यातु कश्चित्तु पाञ्चाल्यं क्षिप्रमागम्यतामिति ।
परिश्रान्तबलस्तात नैव मुच्येत किल्बिषी ॥ १०

तव हत्वा बलं सर्वं सङ्ग्रामे धृतराष्ट्रजः ।
जितान् पाण्डुसुतान् मत्वा रूपं धारयते महत् ॥ ११

निहतं स्वबलं दृष्ट्वा पीडितं चापि पाण्डवैः ।
ध्रुवमेष्यति सङ्ग्रामे वधायैवात्मनो नृपः ॥ १२

सञ्जयः—

[4]एवमुक्तः फल्गुनस्तु कृष्णं वचनमब्रवीत् ॥ १२॥

अर्जुनः—

धृतराष्ट्रसुतास्सर्वे [5]हता भीमेन माधव ॥ १३

---

1. अ—ततो दुर्योधनं दृष्ट्वा वाजिमध्ये व्यवस्थितम् ।
उवाच देवकीपुत्रः कुन्तीपुत्रं धनञ्जयम् ॥ [अधिकः पाठः]

2. क—रणमध्ये व्यवस्थितः ख-घ—रणे सर्वान् व्यवस्थितः

3. अ—अर्धषट्कं नास्ति

4. ख-घ—इदमर्धं नास्ति

5. ख—इतः षट् पादा न सन्ति

यावेताववतिष्ठेतां तावद्य न भविष्यतः ।
हतो भीष्मो हतो द्रोणः कर्णो वैकर्तनो हतः ॥ १४

मद्रराजो हतश्शल्यो हतः कृष्णजयद्रथः ।
हयाः पञ्चशताश्शिष्टाश् शकुनेस्सौबलस्य च ॥ १५

रथानां च शते शिष्टे द्वे एव तु जनार्दन ।
दन्तिनां च शतं साग्रं त्रिसहस्रं च पत्तयः ॥ १६

अश्वत्थामा कृपश्चैव त्रिगर्ताधिपतिस्तथा ।
उलूकश्शकुनिश्चैव कृतवर्मा च सात्वतः ॥ १७

एतद्बलमभूच्छेषं धार्तराष्ट्रस्य माधव ।
मोक्षो न नूनं कालाद्धि विद्यते भुवि कस्यचित् ॥ १८

तथा विनिहते सैन्ये पश्य दुर्योधनं स्थितम् ।
अद्याह्ना हि महाराजो हतामित्रो भविष्यति ॥ १९

न हि मे मोक्ष्यते कश्चित् परेषामिति [1]निश्चयः ।
ये त्वद्य समरं कृष्ण न हास्यन्ति रणोत्कटाः ॥ २०

तान् वै सर्वान् हनिष्यामि यद्यपि स्युरमानुषाः ॥ २०॥
अद्य युद्धे समुन्नद्धं दीर्घं राज्ञः प्रजागरम् ।
अपनेष्यामि गान्धारं पातयित्वा शितैश्शरैः ॥ २१॥

निकृत्या वै दुराचारो यानि रत्नानि सौबलः ।

---

1. ख—चिन्तय घ—चिन्तये

सभायामाहरद्द्यूते पुनस्तान्याहराम्यहम् ॥ २२॥

अद्य वेत्स्यन्ति मच्छक्तिं सर्वा नागपुरस्त्रियः ।
श्रुत्वा पतींश्च पुत्रांश्च पाण्डवैर्निहतान् युधि ॥ २३॥

समाप्तमद्य वै कृष्णस् सर्वं कर्म भविष्यति ॥ २४

अद्य दुर्योधनो दीप्तां श्रियं प्राणानपि त्यजेत् ।
नापयाति भयात् कृष्ण सङ्ग्रामाद्यदि चेन्मम ॥ २५

निहतं विद्धि वार्ष्णेय धार्तराष्ट्रं सुबालिशम् ॥ २५॥

मम ह्येतदपर्याप्तं वाजिबृन्दमरिन्दम ।
सोढुं ज्यातलनिर्घोषान् याहि यावन्निहन्म्यहम् ॥ २६॥

सञ्जयः—

एवमुक्तस्तु दाशार्हः पाण्डवेन यशस्विना ।
अचोदयद्धयान् राजन् दुर्योधनबलं प्रति ॥ २७॥

तदनीकमभिप्रेक्ष्य त्रयस्सज्जा महारथाः ।
भीमसेनोऽर्जुनश्चैव सहदेवश्च मारिष ॥ २८॥

प्रययुस्सिंहनादेन दुर्योधनजिघांसया ॥ २९

तान् समीक्ष्य तत[1]स्सर्वान् जवेनोद्यतकार्मुकान् ।
सौबलोऽभ्यद्रवद्युद्धे पाण्डवानाततायिनः ॥ ३०

---

1. अ—सर्वस्तवपुत्रो जनाधिप ।
जवेनाभ्यपतत् क्षिप्रं पाण्डवानाततायिनः ॥ [पाठान्तरम्]

सुदर्शनस्तव सुतो भीमसेनं समभ्ययात् ।
सुशर्मा शकुनिश्चैव युयुधाते किरीटिना ॥ ३१

सहदेवं तव सुतो हयपृष्ठगतोऽभ्ययात् ॥ ३१॥

ततो[1]भ्यापततः क्षिप्रं तव पुत्रो जनाधिप ।
सहदेवस्य शिरसि प्रासेन प्राहरद्रुशम् ॥ ३२॥

सोपाविशद्रथोपस्थे तव पुत्रेण [2]घातितः ।
रुधिराप्लुतसर्वाङ्गो [3]निश्श्वसन्नुरगो यथा ॥ ३३॥

प्रतिलभ्य ततस्संज्ञां सहदेवो विशां पते ।
दुर्योधनं शरैस्तीक्ष्णैस् सङ्क्रुद्धस्समवाकिरत् ॥ ३४॥

पार्थोऽपि युधि विक्रम्य कुन्तीपुत्रो धनञ्जयः ।
शूराणामश्वपृष्ठेभ्यश् शिरांसि निचकर्त ह ॥ ३५॥

तदनीकं तदा पार्थो व्यधमद्बहुभिश्शरैः ।
पातयित्वा हयान् सर्वांस् त्रिगर्तानां रथान् ययौ ॥ ३६॥

ततस्ते सहितास्सर्वे त्रिगर्तानां महारथाः ।
अर्जुनं वासुदेवं च शरवर्षैरवाकिरन् ॥ ३७॥

सत्यकर्माणमाक्षिप्य क्षुरप्रेण महायशाः ।

---

1. ख-घ—ऽस्य यततः
2. क-ख-घ—ताडितः
3. क-ख-घ-ङ—आशीविष इव श्वसन्

ततोऽस्य स्यन्दनस्यैषां चिच्छेद पाण्डुनन्दनः ॥ ३८॥

शिलाशितेन च विभो क्षुरप्रेण महारथः ।
शिरश्चिच्छेद सहसा तप्तकुण्डलभूषितम् ॥ ३९॥

[1]स सत्येषुमथादत्त योधानां मिषतां ततः ।
यथा सिंहो वने राजन् मृगान् प्रति बुभुक्षितः ॥ ४०॥

तं निहत्य ततः पार्थस् सुशर्माणं त्रिभिश्शरैः ।
विद्ध्वा च न्यहनत् सर्वान् रथान् रुक्मविभूषितान ॥ ४१॥

ततस्तु प्रवरः पार्थो दीर्घकालसुसम्भृतम् ।
मुञ्चन् क्रोधविषं तीव्रं त्रिगर्ताधिपतिं प्रति ॥ ४२॥

तमर्जुनः पृषत्कानां शतेन नतपर्वणाम् ।
पूरयित्वा ततो वाहान् न्यहनत् तत्र धन्विनः ॥ ४३॥

ततश्शरं समादाय यमदण्डोपमं महत् ।
सुशर्माणं समुद्दिश्य चिक्षेपाशु हसन्निव ॥ ४४॥

स शरः प्रेषितस्तेन क्रोधदीप्तेन धन्विना ।
सुशर्माणं समासाद्य बिभेद हृदयं रणे ॥ ४५॥

स गतासुर्महाराज निपपात महीतले ।
नन्दयन् पाण्डवान् सर्वान् व्यथयंश्चैव तावकान् ॥ ४६॥

सुशर्माणं रणे हत्वा पुत्रानस्य महारथान् ।

---

1. अ-घ—अर्धद्वयं नास्ति

सप्त चाष्टौ च त्रिंशच्च सायकैरनयत् क्षयम् ॥ ४७॥

ततोऽस्य निशितैर्बाणैस् सर्वान् हत्वा पदानुगान् ।
अभ्यगात् तावकान् सर्वान् हतशेषान् महारथान् ॥ ४८॥

भीमस्तु समरे क्रुद्धः पुत्रं तव जनाधिप ।
सुदर्शनमदृश्यन्तु शरैश्चक्रे हसन्निव ॥ ४९॥

ततोऽस्य प्रहसन् क्रुद्धश् शिरः कायादपाहरत् ॥ ५०
क्षुरप्रेण सुतीक्ष्णेन स हतः प्रापतद्भुवि ॥ ५०॥

तस्मिंस्तु निहते वीरे ततस्तस्य पदानुगाः ।
परिवव्रू रणे भीमं किरन्तो विशिखान् शितान् ॥ ५१॥

ततस्तु निशितैर्बाणैस् तदनीकं वृकोदरः ।
इन्द्राशनिसमस्पर्शैस् समन्तात् पर्यवाकिरत् ॥ ५२॥

ततः क्षणेन तान् भीमो न्यहनद्भरतर्षभ ॥ ५३

तेषु तूत्साद्यमानेषु सेनाध्यक्षा महाबलाः ।
भीमसेनं समासाद्य ततोऽयुध्यन्त भारत ॥ ५४

तांस्तु सर्वाञ् शरैर्घोरैर् अवाकिरत पाण्डवः ॥ ५४॥

तथैव तावका राजन् पाण्डवेयान् महारथान् ।
शरवर्षेण महता समन्तात् पर्यवारयन् ॥ ५५॥

व्याकुलं तदभूत् सर्वं पाण्डवानां परैस्सह ।
तावकानां च समरे पाण्डवेयैर्युयुत्सताम् ॥ ५६॥

तत्र योधास्तदा पेतुः परस्परसमाहताः ।
उभयोस्सेनयो राजन् संशोचन्ति स्म बान्धवान् ॥ ५७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ ७४ ॥ शल्यवधपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[अस्मिन्नध्याये ५७॥ श्लोकाः]

---

## ॥ पञ्चविंशोऽध्यायः ॥

सहदेवेन शकुन्युलूकयोर्वधः ॥

---

सञ्जयः—

तस्मिन् प्रवृत्ते सङ्ग्रामे गजवाजिनरक्षये ।
शकुनिस्सौबलो राजन् सहदेवं समभ्ययात् ॥ १

ततोऽस्यापततस्तूर्णं सहदेवः प्रतापवान् ।
शरौघान् प्रेषयामास पतङ्गानिव घोषिणः ॥ २

उलूकं च रणे राजन् विव्याध निशितैश्शरैः ।
शकुनिस्तु महाराज भीमं विद्ध्वा त्रिभिश्शरैः ॥ ३
सायकानां नवत्या वै सहदेवं समाकिरत् ॥ ३॥
ते शूरास्समरे राजन् समासाद्य परस्परम् ।
विव्यधुर्निशितैर्बाणैः कङ्कबर्हिणवाजितैः ॥ ४॥

स्वर्णपुङ्खैश्शिलाधौतैर् आकर्णात् प्रहितैश्शरैः ॥ ५

तेषां चापभुजोत्सृष्टा शरवृष्टिर्विशां पते ।
प्राच्छादयद्दिशस्सर्वा धाराभिरिव तोयदः ॥ ६

ततः क्रुद्धो रणे भीमस् सहदेवश्च भारत ।
चेरतुः कदनं सङ्ख्ये प्रकुर्वन्तौ महाबलौ ॥ ७

ताभ्यां शरशतैश्छिन्नं तद्बलं भरतर्षभ ।
अन्धकारमिवाकाशम् अभवत् तत्र तत्र ह ॥ ८

अश्वैर्विपरिधावद्भिश् शरैश्छिन्नैर्विशां पते ।
तत्र तत्र कृतो मार्गो विकर्षद्भिर्हतान् बहून् ॥ ९

निहतानां हयानां च सहैव हययोधिभिः ।
वर्मभिर्विनिकृत्तैश्च प्रासैश्छिन्नैश्च मारिष ॥ १०

[1]यष्टिभिश्शक्तिभिश्चैव तोमरैश्च परन्तप ।
सञ्छन्ना वसुधा तैस्तु कुसुमैश्शबला इव ॥ ११

योधास्तत्र महाराज समासाद्य परस्परम् ।
व्यचरन्त रणे क्रुद्धा विनिघ्नन्तश्शरैश्शितैः ॥ १२

उद्वृत्तनयनै रोषात् सन्दष्टोष्ठपुटैर्मुखैः ।
सकुण्डलैर्मही च्छन्ना पद्मकिञ्जल्कसन्निभैः ॥ १३

भुजैश्छिन्नैर्महाराज नागराजकरोपमैः ।

1. ख-घ—इदमर्धं नास्ति

स गदैस्सतलत्रैश्च सासिप्रासपरश्वथैः ॥ १४

कबन्धैरुत्थितैश्चैव नृत्यद्भिश्चापरैर्युधि ।

क्रव्यादगणसम्पूर्णा घोराऽभूत् पृथिवी विभो ॥ १५

अल्पावशिष्टे सैन्ये तु कौरवेयान् महाहवे ।

प्रहृष्टाः पाण्डवा भूत्वा निन्यिरे यमसादनम् ॥ १६

एतस्मिन्नन्तरे शूरस् सौबलेयः प्रतापवान् ।

प्रासेन सहदेवस्य शिरसि प्राहरद्भृशम् ॥ १७

स विह्वलो महाराज रथोपस्थ उपाविशत् ॥ १७॥

सहदेवं तथा दृष्ट्वा भीमसेनः प्रतापवान् ।

सर्वसैन्यानि सङ्क्रुद्धो वारयामास भारत ॥ १८॥

निर्बिभेद च नाराचैश् शतशोऽथ सहस्रशः ।

स निर्भिद्य रणे चक्रे सिंहनादमथानदत् ॥ १९॥

तेन शब्देन वित्रस्तास् सर्वे सहयवारणाः ।

प्राद्रवन् सहसा भीताश् शकुनेश्च पदानुगाः ॥ २०॥

प्रभग्नानथ तान् दृष्ट्वा राजा दुर्योधनोऽब्रवीत् ॥ २१

दुर्योधनः—

निवर्तध्वमधर्मज्ञा युध्यध्वं किं द्रुतेन वः ।

इह कीर्तिं समाधाय प्रेत्य लोकान् समश्नुते ॥ २२

[1]प्राणाञ्जहाति यो वीरो युधि पृष्ठमदर्शयन् ॥ २२॥

---

1. ख-ब—इदमर्धं नास्ति

सञ्जयः—

एवमुक्तास्ततो राज्ञा सौबलस्य पदानुगाः ।
[1]पाण्डवानभ्यवर्तन्त मृत्युं कृत्वा निवर्तनम् ॥ २३॥

द्रवद्भिस्तु ततो राजन् कृतश्शब्दोऽतिदारुणः ।
क्षुब्धसागरसङ्काशः क्षुभितैस्सर्वतो दिशम् ॥ २४॥

तांस्तथाऽऽपततो दृष्ट्वा सौबलस्य पदानुगान् ।
[2]प्रत्युद्ययुर्महाराज पाण्डवा विजये धृताः ॥ २५॥

प्रत्याश्वस्य च दुर्धर्षस् सहदेवो विशां पते ।
शकुनिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिश्शरैः ॥ २६॥

धनुश्चिच्छेद च शरैस् सौबलस्य हसन्निव ॥ २७

अथान्यद्धनुरादाय शकुनिर्युद्धदुर्मदः ।
विव्याध नकुलं षष्ट्या भीमसेनं च सप्तभिः ॥ २८

उलूकस्तु महाराज भीमं विव्याध सप्तभिः ।
सहदेवं च सप्तत्या परीप्सन् पितरं रणे ॥ २९

तं भीमसेनस्समरे विव्याध निशितैश्शरैः ।
शकुनिं च चतुष्षष्ट्या पार्श्वपांश्च त्रिभिस्त्रिभिः ॥ ३०

ते हन्यमाना भीमेन नाराचैस्तैलपायितैः ।
सहदेवं रणे क्रुद्धश् छादयञ् शरवृष्टिभिः ॥ ३१

---

1. ख—प्रत्युद्ययुर्महाराज पाण्डवान्विजये धृताः । [अधिकः पाठः]

2. ख—इदमर्धं नास्ति

पर्वतं वारिधाराभिस् सविद्युत इवाम्बुदाः ।
ततो ह्यापततस्तूर्णं सहदेवः प्रतापवान् ॥ ३२

उलूकस्य महाराज भल्लेनापाहरच्छिरः ।
स जगाम रथाद्भूमिं सहदेवेन पातितः ॥ ३३

रुधिराप्लुतसर्वाङ्गो नन्दयन् पाण्डवान् रणे ।
पुत्रं तु निहतं दृष्ट्वा शकुनिस्तत्र भारत ॥ ३४

[1]सास्रकण्ठो विनिश्श्वस्य क्षत्तुर्वाक्यमनुस्मरन् ।
चिन्तयित्वा मुहूर्तं तु बाष्पपूर्णेक्षणश्श्वसन् ॥ ३५

सहदेवं समासाद्य विव्याध त्रिभिराशुगैः ॥ ३५॥

तानपास्य शरान् मुक्ताञ् शरसङ्घैः प्रतापवान् ।
सहदेवो महाराज धनुश्चिच्छेद संयुगे ॥ ३६॥

छिन्ने धनुषि राजेन्द्र शकुनिस्सौबलस्तदा ।
प्रगृह्य विमलं खड्गं सहदेवाय प्राहिणोत् ॥ ३७॥

तमापतन्तं सहसा घोररूपं विशां पते ।
द्विधा चिच्छेद राजेन्द्र सौबलस्य हसन्निव ॥ ३८॥

असिं दृष्ट्वा द्विधा च्छिन्नं प्रगृह्य महतीं गदाम् ।
प्राहिणोत् सहदेवाय सा मोघा न्यपतद्भुवि ॥ ३९॥

ततश्शक्तिं महाघोरां कालरात्रिमिवोद्यताम् ।

---

1. अ—नास्तीदमर्धम्

प्रेषयामास सङ्क्रुद्धः पाण्डवं प्रति सौबलः ॥ ४०॥

तामापतन्तीं सहसा शरैः काञ्चनभूषणैः ।
त्रिधा चिच्छेद समरे सहदेवो हसन्निव ॥ ४१॥

सा पपात त्रिधा छिन्ना भूमौ कनकभूषणा ।
शीर्यमाणा यथा दीप्ता गगनाद्वै शतह्रदा ॥ ४२॥

शक्तिं विनिहतां दृष्ट्वा सौबलं च भयार्दितम् ।
दुद्रुवुस्तावकास्सर्वे भये जाते ससौबलाः ॥ ४३॥

अथोत्क्रुष्टं महच्चासीत् पाण्डवैर्जितकाशिभिः ।
धार्तराष्ट्रास्ततस्सर्वे प्रायशो विमुखा भवन् ॥ ४४॥

तान् वै विमनसो दृष्ट्वा माद्रीपुत्रः प्रतापवान् ।
शरैरनेकसाहस्रैर् वारयामास संयुगे ॥ ४५॥

ततो गान्धारकैर्गुप्तं श्रेष्ठैरश्वैर्जये धृतम् ।
आससाद रणे यान्तं सहदेवोऽथ सौबलम् ॥ ४६॥

स्वमंशमवशिष्टं स संस्मृत्य शकुनिं नृप ।
रथेन काञ्चनाङ्गेन सहदेवस्समभ्ययात् ॥ ४७॥

अधिज्यं बलवत् कृत्वा व्याक्षिपन् सशरं धनुः ।
स सौबलमभिद्रुत्य गृध्रपक्षैश्शिलाशितैः ॥ ४८॥

भृशमभ्यहनत् क्रुद्धस् तोत्रैरिव महाद्विपम् ॥ ४९
उवाच चैनं मेधावी निगृह्य स्मारयन्निव ॥ ४९॥

सहदेवः—

क्षत्रधर्मे स्थितो भूत्वा युध्यस्व पुरुषो भव ।
यत् तदा भाषसे मूढ गृह्णन्नक्षान् सभातले ॥ ५०॥

फलमद्य प्रपद्यस्व कर्मणस्तस्य दुर्मते ।
निहतास्ते दुरात्मानो येऽस्मानप्यहसन् पुरा ॥ ५१॥

दुर्योधनः कुलाङ्गारश् शिष्टस्त्वं तस्य मातुलः ॥ ५२

अद्य ते पातयिष्यामि शरेण प्रथितं शिरः ।
वृक्षात् फलमिवोद्धृत्य लगुडेन प्रमाथिना ॥ ५३

सञ्जयः—

एवमुक्त्वा महाराज सहदेवो महाबलः ।
सङ्क्रुद्धो नरशार्दूलो वेगेनाभिजगाम ह ॥ ५४

अभिगम्य तु दुर्धर्षस् सहदेवो विशां पते ।
विकृष्य बलवच्चापं क्रोधेन प्रदहन्निव ॥ ५५

शकुनिं दशभिर्विद्ध्वा चतुर्भिश्चास्य वाजिनः ।
छत्रं ध्वजं धनुश्चास्य छित्वा सिंह इवानदत् ॥ ५६

छिन्नध्वजधनुश्छत्रस् सहदेवेन सौबलः ।
कृतो विद्धश्च बहुभिस् सर्वमर्मसु सायकैः ॥ ५७

ततो भूयो महाबाहुस् सहदेवः प्रतापवान् ।
शकुनेः प्रेषयामास शरवृष्टिं दुरासदाम् ॥ ५८

ततस्तु विद्धस्सुबलस्य पुत्रो
माद्रीसुतं सहदेवं विमर्दे ।
प्रासेन जाम्बूनदभूषणेन
जिघांसुरेकोऽभिपपात शीघ्रम् ॥ ५९

माद्रीसुतस्तस्य समुद्यतं तं
प्रासं सुवृत्तौ च भुजौ रणाग्रे ।
भल्लैस्त्रिभिर्युगपत् सञ्चकर्त
ननाद चोच्चैस्तरसाऽऽजिमध्ये ॥ ६०

तस्याशुकारी सुसमाहितेन
सुवर्णपुङ्खेन दृढायसेन ।
[1]भल्लेन सर्वावरणातिगेन
शिरश्शरीरात् प्रममाथ भूयः ॥ ६१

[2]शरेण कार्तस्वरभूषितेन
दिवाकराभेण सुसंशितेन ।
हृतोत्तमाङ्गो युधि पाण्डवेन
पपात भूमौ सुबलस्य पुत्रः ॥ ६२

मर्मच्छिदा वेगवता शरेण
[3]तस्योत्तमाङ्गं च भुजौ सुवृत्तौ ।

---

1. क—शरेण 2. ख-घ—पादपञ्चकं नास्ति
3. क—सुवर्णपुङ्खेन शिलाशितेन [अधिकः पाठः]

शक्तिश्च भूमौ निपपात पूर्वं
पश्चात् कबन्धं रुधिरावसिक्तम् ॥ ६२

विस्पन्दमानं निपपात घोरं
रथोत्तमात् पार्थिव पार्थिवस्य ॥ ६३॥

[1]निहत्य पापं सुबलस्य पुत्रं
[2]जातं कुरूणामनयस्य मूलम् ।
प्रावेशयत् कुपितः पाण्डुपुत्रस्
सुवर्णपुङ्खैरिषुभिःपतन्तम् ॥ ६४॥

तं पाण्डुपुत्रं प्रतिपूजयन्तो
हृष्टा ब्रुवाणास्सहदेवमाजौ ।
दिष्ट्या हतो नैकृतिको दुरात्मा
सहात्मजो वीर रणे त्वयेति ॥ ६५॥

हृतोत्तमाङ्गं शकुनिं समीक्ष्य
भूमौ शयानं रुधिरार्द्रगात्रम् ।
योधास्त्वदीया भयनष्टसत्त्वा
दिशः प्रजग्मुः प्रगृहीतशस्त्राः ॥ ६६॥

---

1. अ-क-ख-घ—सुवर्णरत्नोत्तमभूषितं तत्
सर्सिहनादं व्यनदन्महात्मा ।
[अधिकः पाठः अनन्वितः ]

2. अ-क-ख-घ—स नैर्ऋतीमेव दिशं महात्मा
[ अधिकः पाठः अनन्वितः ]

विप्रद्रुतास्शुष्कमुखा विसंज्ञा
गाण्डीवघोषेण समाहताश्च ।
[1]इतस्ततो भग्नरथाश्वनागाः
पदातयश्चैव सधार्तराष्ट्राः ॥ ६७॥

ततो रथाच्छकुनिं पातयित्वा
मुदाऽन्विता भारत पाण्डवेयाः ।
शङ्खान् प्रदध्मुस्समरे प्रहृष्टास्
सकेशवास्सैनिकान् हर्षयन्तः[2] ॥ ६८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ ७४ ॥ शल्यवधपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[ अस्मिन्नध्याये ६८॥ श्लोकाः ]
[शल्यवधपर्व समाप्तम्]

---

1. ख-घ—भयार्दिता
2. क—तं चापि सर्वे प्रतिपूजयन्तो जयं ब्रुवाणास्सहदेवमाजौ ।
दिष्ट्या हतो नैकृतिको दुरात्मा सहात्मजो वीर रणे त्वयेति ॥
[अधिकः पाठः]

## ॥ षड्विंशोऽध्यायः ॥

(ह्रदप्रवेशपर्व)

हतावशिष्टे बले पाण्डवैर्निहते दुर्योधनेन पलायनं कर्तव्यमिति निर्धारणम् ॥ १ ॥ पाण्डवैर्निहतसहायस्य दुर्योधनस्य गदामादाय ह्रदं प्रति प्रस्थानम् ॥ २ ॥ सञ्जयसंहारायासिमुद्यच्छता सात्यकिना व्यासवचनात्तद्विमोचनम् ॥ ३ ॥ हास्तिनपुरं गच्छता सञ्जयेन मध्येमार्गं दुर्योधनदर्शनम् ॥ ४ ॥ तेन तस्मिन् धृतराष्ट्राय स्ववृत्तान्तनिवेदनचोदनपूर्वकं ह्रदं प्रविश्य मायया जलस्तम्भनम् ॥ ५ ॥ तत्रागतैर्द्रौणिकृपकृतवर्मभिः सञ्जयाद्दुर्योधनस्य ह्रदप्रवेशं विज्ञाय विलप्य पुनश्शिबिरगमनम् ॥ ६ ॥ ततो वृद्धपरिजनैर्युयुत्सुना च राजदाराणां नगरप्रापणम् ॥ ७ ॥

सञ्जयः—

ततः क्रुद्धा महाराज सौबलस्य पदानुगाः ।
त्यक्त्वा जीवितमाक्रन्दे पाण्डवान् पर्यवारयन् ॥ १

तानर्जुनः प्रत्यगृह्णात् सहदेवजये धृतः ।
भीमसेनश्च तेजस्वी क्रुद्धाशीविषदर्शनः ॥ २

शक्त्यृष्टिप्रासहस्तानां सहदेवं जिघांसताम् ।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ ३

प्रगृहीतायुधान् बाहून् योधानामभिधावताम् ।
भल्लैश्चिच्छेद बीभत्सुश् शिरांस्यपि भुजानपि ॥ ४

ते हताः प्रत्यपद्यन्त वसुधां विगतासवः ।
त्वरता लोकवीरेण निहतास्सव्यसाचिना ॥　　५

ततो दुर्योधनो राजा दृष्ट्वा स्वबलसङ्क्षयम् ।
हतशेषान् समानीय रथान् नवशतान् विभो ॥　　६

कुञ्जरांश्च हयांश्चैव पादातांश्च परन्तपः ।
उवाच दुःखितान् सर्वान् धार्तराष्ट्रो महीपतिः ॥　　७

दुर्योधनः—

समासाद्य रणे सर्वान् पाण्डवान् ससुहृद्गणान् ।
पाञ्चाल्यं चापि सबलं हत्वा शीघ्रं निवर्तत ॥　　८

सञ्जयः—

तस्यैते शिरसा गृह्य शासनं युद्धदुर्मदाः ।
प्रत्युद्ययू रणे पार्थास् तव पुत्रस्य शासनात् ॥　　९

तानभ्यापततश्शीघ्रं हतशेषान् महारणे ।
शरैराशीविषाकारैः पाण्डवास्समवाकिरन् ॥　　१०

तत् सैन्यं [1]समरे तस्मिन् मुहूर्तेन महात्मभिः ।
अविध्यत रणं प्राप्य त्रातारं नाभ्यविन्दत ॥　　११

पलायमानं तु भयान्नावतिष्ठति दंशितम् ॥　　११॥

अश्वैर्विपरिधावद्भिस् सैन्येन रजसा वृते ।

---

1. क-ख-घ—भरतश्रेष्ठ मु

न प्राज्ञायन्त समरे दिशश्च प्रदिशस्तथा ॥ १२॥

ततस्तु पाण्डवानीकान्निस्सृत्य बह्वो जनाः ।
अभ्यघ्नंस्तावकान् युद्धे मुहूर्तादिव भारत ॥ १३॥

ततो निश्शेषमभवत् तव सैन्यं विशां पते ॥ १४

अक्षौहिण्यस्समेतास्तु तव पुत्रस्य भारत ।
एकादश हता युद्धे ताः प्रभो पाण्डुसृञ्जयैः ॥ १५

तेषु राजसहस्रेषु तावकेषु महात्मसु ।
एको दुर्योधनो राजन्नदृश्यत भृशं क्षतः ॥ १६

ततो वीक्ष्य दिशस्सर्वा दृष्ट्वा शून्यां च मेदिनीम् ।
विहीनस्सर्वयोधैश्च पाण्डवान् वीक्ष्य संयुगे ॥ १७

मुदितान् सर्वसिद्धार्थान् नर्दमानान् समन्ततः ।
बाणशब्दरवांश्चैव श्रुत्वा तेषां महात्मनाम् ॥ १८

दुर्योधनो महाराज कश्मलेनाभिसंवृतः ।
अपयाने मनश्चक्रे विहीनबलवाहनः ॥* १९

धृतराष्ट्रः—

निहते मामके सैन्ये निश्शेषे शिबिरे कृते ।
पाण्डवानां बलं सूत किं शेषमभवत् तदा ॥ २०

एतन्मे पृच्छतो ब्रूहि कुशलो ह्यसि सञ्जय ॥ २०॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

यश्च दुर्योधनो मन्दः कृतवांस्तनयो मम ।
बलक्षयं तदा दृष्ट्वाऽकुशलः पृथिवीपतिः ॥ २१॥

सञ्जयः—

द्वे सहस्रे रथानां तु सप्त नागशतानि च ।
पञ्च चाश्वसहस्राणि पत्तीनामयुतं तथा ॥ २२॥

एतच्छेषमभूद्राजन् पाण्डवानां बलं तदा ।
परिगृह्य हि यद्युद्धे धृष्टद्युम्नो व्यवस्थितः ॥ २३॥

एकाकी भरतश्रेष्ठ ततो दुर्योधनो नृपः ।
नापश्यत् समरे कञ्चित् सहायं रथिनां वरः ॥ २४॥

[1]नर्दमानान् परान् दृष्ट्वा स्वबलस्य च सङ्क्षयम् ।
दृष्ट्वा भरतशार्दूल कश्मलेनाभिसंवृतः ॥ २५॥

हतं स्वहयमुत्सृज्य प्रोत्प्लुत्य प्राद्रवद्भयात् ॥ २६

एकादश चमूभर्ता पुत्रो दुर्योधनस्तव ।
गदामादाय तेजस्वी पदातिः प्रस्थितो ह्रदम् ॥ २७

नातिदूरं ततो गत्वा पद्भ्यामेव जनाधिपः ।
सस्मार वचनं क्षत्तुर् धर्मशीलस्य धीमतः ॥ २८

दुर्योधनः—

इदं नूनं महाप्राज्ञो विदुरो दृष्टवान् पुरा ।

---

1. अ—यतमानान्

महद्व्यसनमस्माकं क्षत्रियाणां च सर्वशः ॥ २९

सञ्जयः—

एवं विचिन्तयानश्च प्रविवेश ह्रदं नृप ।
दुःखसन्तप्तहृदयो दृष्ट्वा राजन् बलक्षयम् ॥ ३०

[1]दशैकाक्षौहिणीभर्ता स्वयं दुर्योधनोऽपि सन् ।
प्राप्तवान् व्यसनं तीव्रं दैवं हि बलवत्तरम् ॥ ३१

पाण्डवास्तु महाराज धृष्टद्युम्नपुरोगमाः ।
अभ्यधावन्त सङ्क्रुद्धास् तव राजन् बलं प्रति ॥ ३२

शक्त्यृष्टिप्रासहस्तानां योधानामभिगर्जताम् ।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ ३३

तान् हत्वा निशितैर्बाणैस् सामात्यान् सह बन्धुभिः ।
रथे श्वेतहये तिष्ठन्नर्जुनो बह्वशोभत ॥ ३४

सुबलस्य हते पुत्रे सवाजिरथकुञ्जरे ।
महावनमिव च्छिन्नम् अभवत् तावकं बलम् ॥ ३५

अनेकशतसाहस्रे बले दुर्योधनार्जिते ।
नान्यो महारथो राजन् जीवमानोऽप्यदृश्यत ॥ ३६

द्रोणपुत्रादृते वीरात् तथैव कृतवर्मणः ।
कृपाच्च गौतमाद्राजन् पार्थिवाच्च तवात्मजात् ॥ ३७

---

1. ख—अर्धद्वयं नास्ति

धृष्टद्युम्नस्तु मां दृष्ट्वा हसन् सात्यकिमब्रवीत् ॥  ३७॥

धृष्टद्युम्नः—

किमनेन गृहीतेन नानेनार्थोऽस्ति जीवता ॥  ३८

सञ्जयः—

धृष्टद्युम्नवचश्श्रुत्वा शिनेर्नप्ता महारथः ।
उद्यम्य निशितं खड्गं हन्तुं मामुद्यतस्तदा ॥  ३९

तदाऽऽगम्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥  ३९॥

व्यासः—

मुच्यतां सञ्जयो जीवन् न हन्तव्यः कथञ्चन ॥  ४०

सञ्जयः—

द्वैपायनवचश्श्रुत्वा शिनेर्नप्ता कृताञ्जलिः ।
ततो मामब्रवीन्मुक्त्वा स्वस्ति सञ्जय साधय ॥  ४१

अनुज्ञातो ह्यहं तेन न्यस्तवर्मा निरायुधः ।
प्रातिष्ठं येन नगरं सायाह्ने रुधिरोक्षितः ॥  ४२

क्रोशमात्रमपक्रान्तं गदापाणिमवस्थितम् ।
एकं दुर्योधनं राजन्नपश्यं भृशविक्षतम् ॥  ४३

स तु मामश्रुपूर्णाक्षो नाशक्नोदभिवीक्षितुम् ।
उपप्रैक्षत मां दृष्ट्वा तदा दीनमुपस्थितम् ॥  ४४

तं चाहमनुशोचानो दृष्ट्वैकाकिनमाहवे ।
मुहूर्तं नाशकं वक्तुं किञ्चिद्दुःखपरिप्लुतः ॥  ४५

[1]यस्य मूर्धावसिक्तानां सहस्रं मणिमौलिनाम् ।
आहृत्य च करं सर्वं स्वस्य वै वशमागतम् ॥ ४६

चतुस्सागरपर्यन्ता पृथिवी रत्नभूषिता ।
कर्णेनैकेन यस्यार्थे करमाहारिता पुरा ॥ ४७

यस्याज्ञा परराष्ट्रेषु कर्णेनैव प्रसारिता ।
नाभवद्यस्य शस्त्रेषु खेदो राज्ञः प्रशासतः ॥ ४८

आसीनो हास्तिनपुरे क्षेमं राज्यमकण्टकम् ।
अन्वपालयदैश्वर्यात् कुबेरमपि नास्मरत् ॥ ४९

भवनाद्भवनं राजन् प्रयातुः पृथिवीपतेः ।
देवालयप्रवेशे च पन्था यस्य हिरण्मयः ॥ ५०

पताकावृतसूर्यांशुस् तोरणोच्छ्रितशोभनः ।
प्रयाणे पृथिवीभर्तुर् धन्यानामभवन् गृहाः ॥ ५१

आरुह्यैरावतप्रख्यं नागमिन्द्रसमो बली ।
विभूत्या सुमहत्या यः प्रयाति पृथिवीपतिः ॥ ५२

तं भृशक्षतमिन्द्राभं पद्भ्यामेव धरातले ।
तिष्ठन्तमेकं दृष्ट्वा तु ममाभूत् क्लेश उत्तमः ॥ ५३

तस्य चैवंविधस्यास्य जगन्नाथस्य भूपतेः ।
विपदप्रतिमाऽभूद्या बलीयान् विधिरेव हि ॥ ५४

---

1. ख—अष्टादशार्धानि न सन्ति

ततोऽस्य तदहं सर्वम् उक्तवान् नृपतेस्तदा ।
द्वैपायनप्रसादाच्च जीवतो मोक्षमाहवे ॥ ५५

स मुहूर्तमिव ध्यात्वा प्रतिलभ्य च चेतनाम् ।
भ्रातॄंश्च सर्वसैन्यांश्च पर्यपृच्छत मां ततः ॥ ५६

तस्मै तदहमाचक्षे सर्वं प्रत्यक्षदर्शिवान् ।
भ्रातॄणां निधनं सर्वं सैन्यानां च निपातनम् ॥ ५७

त्रयः किल रथाश्शिष्टास् तावकानां नराधिप ।
इति प्रस्थानकाले मां कृष्णद्वैपायनोऽब्रवीत् ॥ ५८

स दीर्घमिव निश्श्वस्य सम्प्रेक्ष्य च पुनः पुनः ।
अंसे मां पाणिना गृह्य पुत्रस्ते पर्यभाषत ॥ ५९

दुर्योधनः—

त्वदन्यो नेह सङ्ग्रामे कश्चिज्जीवति सञ्जय ।
द्वितीयं नैव पश्यामि ससहायाश्च पाण्डवाः ॥ ६०

ब्रूयास्सञ्जय राजानं प्रज्ञाचक्षुषमीश्वरम् ।
दुर्योधनस्तव सुतः प्रविष्टो ह्रदमित्युत ॥ ६१

सुहृद्भिस्तादृशैर्हीनः पुत्रैर्भ्रातृभिरेव च ।
पाण्डवैश्च हृते राज्ये को नु जीवेत मादृशः ॥ ६२

आचक्षेथास्सर्वमिदं मां च मुक्तं महाभयात् ।
अस्मिंस्तोयह्रदे सुप्तं जीवन्तं भृशविक्षतम् ॥ ६३

सञ्जयः—

एवमुक्त्वा महाराज प्राविशत् तं ह्रदं नृप ।
अस्तम्भयत तोयं च मायया मनुजाधिपः ॥ ६४

तस्मिन् ह्रदं प्रविष्टे तु त्रीन् रथाञ् श्रान्तवाहनान् ।
अपश्यं सहितानेकस् तं देशं समुपेयुषः ॥ ६५

कृपं शारद्वतं वीरं द्रौणिं च रथिनां वरम् ।
भोजं च कृतवर्माणं सहिताञ् शरविक्षतान् ॥ ६६

ते सर्वे समभिप्रेक्ष्य तूर्णमश्वानचोदयन् ।
उपेत्य चैव मामूचुर् दिष्ट्या जीवसि सञ्जय ॥ ६७

अपृच्छंश्चैव मां सर्वे पुत्रं तव जनाधिपम् ।
कच्चिद्दुर्योधनो राजा स नो जीवति सञ्जय ॥ ६८

आख्यातवानहं तेभ्यस् तदा कुशलिनं नृपम् ।
तच्चैव सर्वमाचक्षे यन्मां दुर्योधनोऽब्रवीत् ॥ ६९

ह्रदं चैवाचचक्षेऽहं यं प्रविष्टो जनाधिपः ॥ ६९॥

अश्वत्थामा तु तद्राजन् निशम्य वचनं मम ।
ह्रदप्रवेशं श्रुत्वा च करुणं पर्यदेवयत् ॥ ७०॥

अहो धिक् स न जानाति जीवतोऽस्मान् नराधिपः ।
पर्याप्ता हि वयं तेन सह योधयितुं परान् ॥ ७१॥

ते तु तत्र चिरं कालं विलप्य च महारथाः ।

प्राद्रवन् रथिनां श्रेष्ठा दृष्ट्वा पाण्डुसुतान् रणे ॥　　७२॥

ते तु मां रथमारोप्य कृपस्य तु परिक्षतम् ।
सेनानिवेशमाजग्मुर् हतशेषास्त्रयो रथाः ॥　　७३॥

तत्र गुल्माः परिक्षिप्तास् सूर्ये चास्तमिते सति ।
सर्वे विचुक्रुशुश्श्रुत्वा पुत्राणां तव सङ्क्षयम् ॥　　७४॥

ततो वृद्धा महाराज योषितां रक्षणे रताः ।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥　　७५॥

तत्र विक्रोशतीनां च रुदन्तीनां च निस्स्वनः ।
प्रादुरासीन्महाघोरश् श्रुत्वा तं बलसङ्क्षयम् ॥　　७६॥

ततस्तु योषितो राजन् क्रन्दन्त्यो वै मुहुर्मुहुः ।
कुरर्य इव शब्देन नादयन्त्यो महीतलम् ॥　　७७॥

आजघ्नुः करजैश्चापि पाणिभिश्च शिरांस्युत ।
लुलुपुश्च तदा केशान् क्रोशन्त्यस्तत्र तत्र ह ॥　　७८॥

हाहाकारं विकुर्वाणा विनिघ्नन्त्य उरांसि च ।
क्रोशन्त्यस्तत्र रुरुदुः क्रन्दमाना विशां पते ॥　　७९॥

ततो दुर्योधनामात्यास् साश्रुकण्ठा भृशातुराः ।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥　　८०॥

[1]वेत्रझर्झरहस्ताश्च द्वाराध्यक्षा विशां पते ।

---

1. ख—इदमर्धं नास्ति

शयनीयानि शुभ्राणि मृद्वास्तरणवन्ति च ॥ ८१।

समादाय ययुस्तूर्णं नगरं जनरक्षिणः ॥ ८२

आस्थायाश्वतरीयुक्तान् स्यन्दनानपरे पुनः ।
स्वान् स्वान् दारानुपादाय प्रययुर्नगरं प्रति ॥ ८३

अदृष्टपूर्वा या नार्यो भास्करेणापि वेश्मसु ।
ददृशुस्ता महाराज जना यान्तीः पुरं प्रति ॥ ८४

तास्स्त्रियो भरतश्रेष्ठ सौकुमार्यसमन्विताः ।
प्रययुर्नगरं तूर्णं हतस्वजनबान्धवाः ॥ ८५

आगोपालाविपालेभ्यो द्रवन्तो नगरं प्रति ।
ययुर्मनुष्यास्सम्भ्रान्ता भीमसेनभयार्दिताः ॥ ८६

अपि चैषां भयं तीव्रं पार्थेभ्योऽभूत् सुदारुणम् ।
प्रेक्षमाणास्तदाऽन्योन्यम् आधावन् नगरं प्रति ॥ ८७

तस्मिंस्तदा वर्तमाने विप्लवे भृशदारुणे ।
युयुत्सुश्शोकसम्मूढः प्राप्तकालमचिन्तयत् ॥ ८८

युयुत्सुः—

जितो दुर्योधनस्सङ्ख्ये पाण्डवैर्भीमविक्रमैः ।
एकादशचमूभर्ता भ्रातरश्चास्य सूदिताः ॥ ८९

हताश्च कुरवस्सर्वे भीष्मद्रोणपुरस्सराः ।
अहमेको विमुक्तश्च भाग्ययोगाद्यदृच्छया ॥ ९०

विद्रुतानि च सैन्यानि शिबिराद्वै समन्ततः ॥ ९०॥

दुर्योधनस्य सचिवा ये केचिदवशेषिताः ।
राजदारानुपादाय व्यधावन् नगरं प्रति ॥ ९१॥

प्राप्तकालमहं मन्ये प्रवेशं तैस्सहाभि भो ।
युधिष्ठिरमनुज्ञाप्य वासुदेवं तथैव च ॥ ९२॥

सञ्जयः—

एवमेतन्महाबाहुर् उभयोस्संन्यवेदयत् ॥ ९३

तस्य प्रीतोऽभवद्राजा नित्यं करुणवेदिनः ।
परिष्वज्य महाबाहुर् वैश्यापुत्रं व्यसर्जयत् ॥ ९४

ततस्स रथमास्थाय द्रुतमश्वानचोदयत् ।
सम्भावयित्वा तांश्चापि राजदारान् पुरं प्रति ॥ ९५

तैश्चैव सहितः क्षिप्रम् अस्तं गच्छति भास्करे ।
प्रविष्टो हास्तिनपुरं बाष्पकण्ठाश्रुलोचनः ॥ ९६

अपश्यच्च महाप्राज्ञं विदुरं साश्रुलोचनम् ।
राज्ञस्समीपान्निष्क्रान्तं शोकोपहतचेतसम् ॥ ९७

तमब्रवीत् सत्यधृतिः प्रणयादग्रतस्स्थितम् ॥ ९७॥

विदुरः—

अस्मिन् कुरुक्षये वृत्ते दिष्ट्या त्वं पुत्र जीवसि ।
विना राज्ञः प्रवेशाद्वै किमसि त्वमिहागतः ॥ ९८॥

एतद्वै कारणं सर्वं विस्तरेण निवेद्य ॥ ९९

युयुत्सुः—

निहते शकुनौ तात सज्ञातिसुतबान्धवे ।
हतशेषपरीवारो राजा दुर्योधनस्ततः ॥ १००

स्वकं हयं समुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात् ॥ १००॥

अपक्रान्ते तु नृपतौ स्कन्धावारनिवेशनात् ।
भयव्याकुलितं सैन्यं प्राद्रवन्नगरं प्रति ॥ १०१॥

ततो राज्ञः कलत्राणि भ्रातृणां चापि सर्वशः ।
वाहनेषु समारोप्य स्त्र्यध्यक्षाः प्राद्रवन् भयात् ॥ १०२॥

ततोऽहं समनुज्ञाप्य राजानं सहकेशवम् ।
प्रविष्टो हास्तिनपुरं रक्षन् लोकस्य वाच्यताम् ॥ १०३॥

सञ्जयः—

एतच्छ्रुत्वा तु वचनं वैश्यापुत्रेण भाषितम् ।
प्राप्तकालमिति ज्ञात्वा विदुरस्सर्वधर्मवित् ॥ १०४॥

अपूजयदमेयात्मा युयुत्सुं वाक्यकोविदम् ॥ १०५

विदुरः—

[1]प्राप्तकालमिदं सर्वं भवता भरतक्षये ।
अद्याहमपि विश्रान्तश् श्वो गन्तास्मि युधिष्ठिरम् ॥ १०६

1. अ—अर्धत्रयं नास्ति

सञ्जयः—

एतावदुक्त्वा वचनं विदुरस्सर्वधर्मवित् ।
युयुत्सुं समनुज्ञाप्य विवेश नृपतेः क्षयम् ॥ १०७

[1]पौरजानपदैर्दुःखाद्धाहेति भृशनादितम् ।
निरानन्दं गतश्रीकं हृतनागमिवाशयम् ॥ १०८

शून्यरूपमवध्वस्तं दृष्ट्वा ध्वस्तरतोऽभवत् ॥ १०८॥

विदुरस्सर्वधर्मज्ञो व्याकुलेनान्तरात्मना ।
विवेश नृपतेर्वेश्म निशश्वास शनैश्शनैः ॥ १०९॥

युयुत्सुरपि तां रात्रिं स्वगृहे न्यवसत् तदा ॥ ११०

[2]वत्स्यमानस्स्वकैश्चापि नाभ्यनन्दत् सुदुःखितः ।
चिन्तयानो महाराज हतानां च परस्परम् ॥ १११

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ ७५ ॥ ह्रदप्रवेशपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये १११ श्लोकाः ]

---

1. ख-घ—अर्धपद्यकं नास्ति 2. ग-घ—अर्धैकं नास्ति

## ॥ सप्तविंशोऽध्यायः ॥

कृपद्रौणिकृतवर्मसु ह्रदमेत्य दुर्योधनेन भाषमाणेषु तत्र यदृच्छोपागतैर्व्याधैस्तद्दर्शनम् ॥ १ ॥ व्याधनिवेदनेन सपरिवारैः पाण्डवैः ह्रदं प्रत्यागमनम् ॥ २ ॥ तद्दर्शनेन कृपादिभिर्दुर्योधनाभ्यनुज्ञानेन दूरस्थन्यग्रोधतरुमेत्य तन्मूले उपवेशनम् ॥ ३ ॥ दुर्योधनेन पुनर्जलस्तम्भनेन ह्रदप्रवेशनम् ॥ ४ ॥

सञ्जयः—

मुहूर्तादिव राजेन्द्र सर्वं शून्यमदृश्यत ।
मत्तवारणसङ्क्षुब्धं शिबिरं विद्रुते बले ॥ १

यत्र शब्देन महता अबुध्यन्त महारथाः ।
तत्र शब्दं न शृणुमो मनुष्यस्यापि कस्य चित् ॥ २

धृतराष्ट्रः—

हतेषु तेषु सैन्येषु पाण्डुपुत्रै रणाजिरे ।
मामका ह्यवशिष्टास्ते किमकुर्वत सञ्जय ॥ ३

कृपश्च कृतवर्मा च द्रोणपुत्रश्च वीर्यवान् ।
दुर्योधनश्च मन्दात्मा राजा किमकरोत् तदा ॥ ४

सञ्जयः—

सम्प्राद्रवत्सु दारेषु क्षत्रियाणां महात्मनाम् ।
विद्रुते शिबिरे शून्ये भयोद्विग्नाज्जयो रथाः ॥ ५

निशम्य पाण्डुपुत्राणां जयिनां सुमहास्वनम् ।
विद्रुतं शिबिरं दृष्ट्वा सायाह्ने राजगर्धिनः ॥　६
स्थानं नारोचयंस्तत्र ततस्तं ह्रदमभ्ययुः ॥　६॥

युधिष्ठिरोऽपि कौन्तेयो भ्रातृभिस्सहितो रणे ।
हृष्टः पर्यपतद्राजन् दुर्योधनवधेप्सया ॥　७॥

मार्गमाणास्तु सङ्क्रुद्धास् तव पुत्रं जिघांसवः ।
यत्नतोऽन्वेषमाणाश्च नैवापश्यन् नराधिपम् ॥　८॥

[1]स तु तीव्रेण वेगेन गदापाणिरपाक्रमत् ।
तं ह्रदं प्राविशच्चापि विष्टभ्यापस्स्वमायया ॥　९॥

तदा तु पाण्डवास्सर्वे सुपरिश्रान्तवाहनाः ।
ततस्ते शिबिरं प्राप्य व्यतिष्ठन् सहसैनिकाः ॥　१०॥

ततः कृपश्च द्रौणिश्च कृतवर्मा च सात्वतः ॥
[2]सन्निविष्टेषु पार्थेषु प्रययुस्तं ह्रदं शनैः ॥　११॥

ते तं ह्रदं समासाद्य यत्र शेते नराधिपः ।
अभ्यभाषन्त दुर्धर्षं राजानं सुप्तमम्भसि ॥　१२॥

कृपादयः—

राजन्नुत्तिष्ठ युध्यस्व सहास्माभिर्युधिष्ठिरम् ।

---

1. क-ख-घ—यदा दुर्योधनो युद्धं त्यक्त्वा पत्तिरपाक्रमत् ।
2. अ—समितिस्थेषु सैन्येषु　[पाठान्तरम्]

जित्वा वा पृथिवीं भुङ्क्ष्व हतो वा स्वर्गमाप्नुहि ॥ १३॥
तेषामपि बलं सर्वं हतं दुर्योधन त्वया ।
प्रतिरुद्धाश्च भूयिष्ठं ये शिष्टास्तत्र सैनिकाः ॥ १४॥
न ते वेगं विषहितुं शक्तास्तव विशां पते ।
अस्माभिरभिगुप्तस्य तस्मादुत्तिष्ठ भारत ॥ १५॥

दुर्योधनः—

दिष्ट्या पश्यामि वो मुक्तान् ईदृशाज्जनसङ्क्षयात् ।
पाण्डुकौरवसम्मर्दे जीवमानान् नरर्षभान् ॥ १६॥
विजेष्यामो वयं सर्वे विश्रान्ता विगतक्लमाः ।
भवन्तश्च परिश्रान्ता अहं च भृशविक्षतः ॥ १७॥
उदीर्णं च बलं तेषां तेन युद्धं न रोचये ॥ १८
[1]भवतामद्भुतं वीरा युद्धे महदिदं मनः ।
अस्मासु च परा भक्तिर् दर्शिता कार्यगौरवात् ॥ १९
विश्राम्यैकां निशामद्य भवद्भिस्सहितो रणे ।
प्रतियोद्धास्मि तान् शत्रून् श्वो वा न स्याच्छ्रमो मम ॥ २०

सञ्जयः—

एवमुक्तोऽब्रवीद्द्रौणी राजानं युद्धदुर्मदम् ॥ २०॥

अश्वत्थामा—

उत्तिष्ठ राजन् भद्रं ते विजेष्यामो रणे [2]परान् ॥ २१

---

1. घ—इदमर्धं नास्ति ख—अर्धचतुष्टयं नास्ति
2. ख-घ—वयं

इष्टापूर्तेन सत्येन दानेन च जपेन च ।
शपे राजन् यथा ह्यद्य निहनिष्यामि सोमकान् ॥ २२

मा स्म यज्ञकृतांल्लोकान् प्राप्नुयां सज्जनोचितान् ।
अद्य व्युष्टामिमां रात्रिं न निहन्मीह चेत् परान् ॥ २३

नाहत्वा सर्वपाञ्चालान् विमोक्ष्ये कवचं विभो ।
इति सत्यं ब्रवीम्येतत् तन्मे शृणु जनाधिप ॥ २४

सञ्जयः—

तेषु सम्भाषमाणेषु व्याधास्तं देशमागमन् ।
मांसभारपरिश्रान्ताः पानीयार्थं यदृच्छया ॥ २५

ते हि नित्यं महाराज भीमसेनस्य लुब्धकाः ।
मांसभारानुपाजह्रुर् भक्त्या परमया युताः ॥ २६

ते तत्र विष्ठितास्तेषां सर्वं तद्वचनं रहः ।
दुर्योधनवचश्चैव शुश्रुवुस्सङ्गता मिथः ॥ २७

ते हि सर्वे महेष्वासा अयुद्धार्थिनि कौरवे ।
निर्बन्धं परमं चक्रुस् सुभृशं युद्धकाङ्क्षिणः ॥ २८

तांस्तथा ते समुद्वीक्ष्य कौरवाणां महारथान् ।
अयुद्धमनसं चैव पुत्रं तव निशम्य च ॥ २९

तेषां श्रुत्वा च संवादं राज्ञश्च सलिले सतः ।

व्याधा व्यजानन् राजेन्द्र सलिलस्थं सुतं तव ॥ ३०

ते पूर्वं पाण्डुपुत्रेण पृष्टा ह्यासन् सुतं तव ।
यदृच्छया गतास्तत्र राजानं परिमार्गितुम् ॥ ३१

ततस्ते पाण्डुपुत्रस्य स्मृत्वा तद्भाषितं तदा ।
अन्योन्यमब्रुवन् राजन् मृगव्याधाश्शनैरिदम् ॥ ३२

व्याधाः—

दुर्योधनं ख्यापयामो धनं दास्यति पाण्डवः ।
सुव्यक्तं च हि नः ख्यात इह दुर्योधनो नृपः ॥ ३३

तस्माद्गच्छामहे सर्वे यत्र राजा युधिष्ठिरः ।
आख्यातुं सलिले सुप्तं दुर्योधनममर्षणम् ॥ ३४

धृतराष्ट्रात्मजं तस्मै भीमसेनाय धीमते ।
शयानं सलिले सर्वे कथयामो धनुर्भृते ॥ ३५

स नो दास्यति धर्मात्मा धनानि बहुलान्युत ।
किं नो मांसेन शुष्केण परिक्लिष्टेन शोषिणा ॥ ३६

सञ्जयः—

एवमुक्त्वा तु ते व्याधास् सम्प्रहृष्टा धनार्थिनः ।
मांसभारानुपादाय प्रययुश्शिबिरं प्रति ॥ ३७

पाण्डवाश्च महाराज लब्धलक्षाः प्रहारिणः ।
अपश्यमानास्समरे दुर्योधनमवस्थितम् ॥ ३८

निकृतेस्तस्य पापस्य युद्धाभिगमनेप्सया ।
चारान् सम्प्रेषयामासुस् समन्तात् तद्रणाजिरात् ॥ ३९

आगत्य तु ततस्सर्वे नष्टं दुर्योधनं नृपम् ।
न्यवेदयन्त सहिता धर्मराजस्य सैनिकाः ॥ ४०

तेषां तद्वचनं श्रुत्वा चाराणां भरतर्षभ ।
चिन्तामभ्यगमत् तीव्रं निशश्वास च पार्थिवः ॥ ४१

युधिष्ठिरः—

[1]अरिशेषे जीवति तु सन्दिग्धो विजयो भवेत् ।
राज्यं कथं लभे तद्धि पूजितं विजयादिभिः ॥ ४२

सञ्जयः—

अथ स्थितानां पाण्डूनां दीनानां भरतर्षभ ।
तस्माद्देशादपाक्रम्य त्वरिता लुब्धका विभो ॥ ४३

आजग्मुश्शिबिरं हृष्टा दृष्ट्वा दुर्योधनं नृपम् ।
वार्यमाणाः प्रविष्टाश्च भीमसेनं दिदृक्षवः ॥ ४४

[2]ते तु पाण्डवमासाद्य भीमसेनं महाबलम् ।
तस्मै तत् सर्वमाचख्युर् यद्वृत्तं यच्च वै श्रुतम् ॥ ४५

ततो वृकोदरो राजन् दत्वा तेषां धनं बहु ।
धर्मराजाय तत् सर्वम् आचचक्षे परन्तपः ॥ ४६

---

1. ख—इदमर्धद्वयं नास्ति  2. अ—नास्तीदमर्धम्

भीमः—

असौ दुर्योधनो राजन् विज्ञातो मम लुब्धकैः ।
संस्तभ्य सलिलं शेते यस्यार्थे परितप्यसे ॥ ४७

सञ्जयः—

तद्वचो भीमसेनस्य प्रियं श्रुत्वा विशां पते ।
अजातशत्रुः कौन्तेयो हृष्टोऽभूत् सह सोदरैः ॥ ४८

तं च श्रुत्वा महेष्वासाः प्रविष्टं सलिलह्रदे ।
क्षिप्रमेव ततोऽगच्छन् पुरस्कृत्य जनार्दनम् ॥ ४९

ततः किलकिलाशब्दः प्रादुरासीद्विशां पते ।
पाण्डवानां प्रहृष्टानां पाञ्चालानां च सर्वशः ॥ ५०

सिंहनादांस्ततश्चक्रुः क्ष्वेलांश्च भरतर्षभ ।
त्वरिताः क्षत्रिया [1]राजञ् जग्मुर्द्वैपायनह्रदम् ॥ ५१

ज्ञातः पापो धार्तराष्ट्रो दृष्टवीर्योऽसकृद्रणे ।
प्राक्रोशन् सैनिकास्तत्र हृष्टरूपास्समन्ततः ॥ ५२

तेषामाशु प्रयातानां रथानारुह्य वेगिनाम् ।
बभूव तुमुलश्शब्दो दिविस्पृक् पृथिवीपते ॥ ५३

दुर्योधनं परीप्सन्तस् तत्र तत्र युधिष्ठिरम् ।
अन्वयुस्त्वरितास्ते वै राजानं श्रान्तवाहनाः ॥ ५४

1. ख-घ—राजन्नुदक्रोशन्परस्परम्

अर्जुनो भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।
धृष्टद्युम्नश्च पाञ्चाल्यश् शिखण्डी चापराजितः ॥　　५५

उत्तमौजा युधामन्युस् सात्यकिश्च महारथः ।
पाञ्चालानां च ये शिष्टा द्रौपदेयाश्च भारत ॥　　५६

हयाश्च सर्वे नागाश्च शतशश्च पदातयः ॥　　५६॥

ततः प्राप्तो महाराज धर्मपुत्रः प्रतापवान् ।
द्वैपायनह्रदं ख्यातं यत्र दुर्योधनोऽभवत् ॥　　५७॥

शीतामलजलं हृद्यं द्वितीयमिव सागरम् ।
मायया सलिलं स्तभ्य यत्र शेते सुतस्तव ॥　　५८॥

अत्यद्भुतेन विधिना दैवयोगेन भारत ।
सलिलान्तर्गतश्शेते दुर्दर्शः कस्यचिद्विभो ॥　　५९॥

मानुषस्य मनुष्येन्द्रो गदाहस्तो नराधिप ॥　　६०

ततो दुर्योधनो राजा सलिलान्तर्गतोऽपि सन् ।
शुश्रुवे तुमुलं शब्दं जलदोपमनिस्स्वनम् ॥　　६१

युधिष्ठिरोऽपि राजेन्द्र ह्रदं तैस्सह सोदरैः ।
आजगाम महाराज तव पुत्रवधाय वै ॥　　६२

महता सिंहनादेन रथनेमिस्वनेन च ।
धून्वंश्चापि महारेणुं कम्पयंश्चापि मेदिनीम् ॥　　६३

यौधिष्ठिरस्य सैन्यस्य श्रुत्वा शब्दं महारथाः ।
कृतवर्मा कृपो द्रौणी राजानमिदमब्रुवन् ॥ ६४

कृपादयः—

इमे ह्यायान्ति संहृष्टाः पाण्डवा जितकाशिनः ।
अपयास्यामहे तावद् अनुजानातु नो भवान् ॥ ६५

सञ्जयः—

दुर्योधनस्तु तच्छ्रुत्वा तेषां चैव यशस्विनाम् ।
तथेत्युक्त्वा ह्रदं तं वै माययाऽस्तम्भयत् प्रभो ॥ ६६

ते त्वनुज्ञाप्य राजानं भृशं शोकपरायणाः ।
जग्मुर्दूरं महाराज कृपप्रभृतयो रथाः ॥ ६७

ते गत्वा दूरमध्वानं न्यग्रोधं प्रेक्ष्य मारिष ।
न्यविशन्त भृशं श्रान्ताश् चिन्तयन्तो नृपं प्रति ॥ ६८

विष्टभ्य सलिलं सुप्तो धार्तराष्ट्रो महाबलः ।
पाण्डवाश्चापि सम्प्राप्तास् तं देशं [1]युद्धमीप्सवः ॥ ६९

कृपादयः—

कथं न युद्धं भविता कथं नु स्यात् स पार्थिवः ।
कथं नु पाण्डवाश्चात्र प्रतिपत्स्यन्ति कौरवम् ॥ ७०

---

1. ख-घ—युद्धकाङ्क्षिणः

सञ्जयः—

इत्येवं चिन्तयन्तस्ते रथेभ्योऽश्वान् विमुच्य च ।
तत्रासाञ्चक्रिरे राजन् कृपप्रभृतयस्तदा ॥　　७१

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
॥ ७५ ॥ ह्रदप्रवेशपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ७१ श्लोकाः ]

## ॥ अष्टाविंशोऽध्यायः ॥

युधिष्ठिरेण ह्रदस्थं दुर्योधनं प्रति निष्ठुरोक्तिभिः सन्तर्जनम् ॥ १ ॥ युधिष्ठिरदुर्योधनयोर्विवादः ॥ २ ॥ युधिष्ठिरकटुभाषणरुष्टेन सुयोधनेन गदया सह ह्रदादुत्थानम् ॥ ३ ॥ युधिष्ठिरदुर्योधनयोः पुनर्विवादः ॥ ४ ॥

सञ्जयः—

ततस्तेष्वपयातेषु रथेषु त्रिषु पाण्डवाः ।
तं ह्रदं प्रत्यपद्यन्त यत्र दुर्योधनोऽभवत् ॥　　१

आसाद्य तु कुरुश्रेष्ठ तत्र द्वैपायनं ह्रदम् ।
स्तम्भितं धार्तराष्ट्रेण दृष्ट्वा तं सलिलाशयम् ॥　　२

वासुदेवमिदं वाक्यम् अब्रवीत् कुरुनन्दनः ॥　　२॥

युधिष्ठिरः—

पश्येमां धार्तराष्ट्रेण मायामप्सु प्रयोजिताम् ।

विष्टभ्य सलिलं शेते नास्य मानुषतो भयम् ॥ ३॥

दैवीं मायामिमां कृत्वा सलिलान्तर्गतो ह्ययम् ।
निकृत्या निकृतिप्रज्ञो न स जीवन् विमोक्ष्यते ॥ ४॥

यद्यस्य समरे साह्यं कुरुते वासवस्स्वयम् ।
तथाऽप्येतं हतं युद्धे लोका द्रक्ष्यन्ति माधव ॥ ५॥

श्रीभगवान्—

मायाविन इमां मायां मायया जहि भारत ।
मायावी मायया वध्यस् सत्यमेतद्युधिष्ठिर ॥ ६॥

क्रियाभ्युपायैर्बहुलैर् मायामप्सु प्रयुज्य ह ।
जहि त्वं भरतश्रेष्ठ माययैव सुयोधनम् ॥ ७॥

क्रियाभ्युपायैरिन्द्रेण निहता दैत्यदानवाः ।
क्रियाभ्युपायैः पूर्वं हि बलिर्बद्धो महात्मना ॥ ८॥

क्रियाभ्युपायैः पूर्वं हि हिरण्याक्षो महासुरः ।
हिरण्यकशिपुश्चैव क्रिययैव निषूदितः ॥ ९॥

[1]वृत्रश्च निहतो राजन् क्रिययैव न संशयः ॥ १०

तथा पौलस्त्यतनयो रावणो नाम राक्षसः ।
रामेण निहतो राजन् सानुबन्धस्सहानुगः ॥ ११

क्रियया योगमास्थाय तथा त्वमपि विक्रम ।

1. ख—अर्धत्रयं नास्ति

क्रियाभ्युपायैर्निहतो यमो नाम महासुरः ॥ १२

नरकश्च महावीर्यो विप्रचित्तिश्च वीर्यवान् ।
वातापिरिल्वलश्चैव [1]त्रिशिराश्च तथा विभो ॥ १३

सुन्दोपसुन्दावसुरौ क्रिययैव निपूदितौ ।
[2]तारकश्च महादैत्यो ह्यन्धकश्च निपूदितः ॥ १४

क्रियाभ्युपायैरिन्द्रेण त्रिदिवं भुज्यते विभो ।
[3]क्रिया बलवती राजन् नान्यत् किञ्चिद्युधिष्ठिर ॥ १५

दैत्याश्च बहवो राजन् राक्षसाः पार्थिवास्तथा ।
क्रियाभ्युपायैर्निहताः [4]क्रियां तस्मात् समाचर ॥ १६

सञ्जयः—

इत्युक्तो वासुदेवेन पाण्डवस्संशितव्रतः ।
जलस्थं तं महाराज तव पुत्रं महारथम् ॥ १७

अभ्यभाषत कौन्तेयः प्रहसन्निव भारत ॥ १७॥

युधिष्ठिरः—

सुयोधन किमर्थोऽयम् आरम्भोऽप्सु कृतस्त्वया ।
सर्वक्षत्रं घातयित्वा स्वजनं च विशां पते ॥ १८॥

---

1. ख—अगस्त्येन तथा विभो
2. अ-ख-घ—नास्तीदमर्धम्
3. घ—अर्धद्वयं नास्ति
4. ख-घ—दैत्याश्च शतशस्तथा

जलाशयं प्रविष्टोऽद्य वाञ्छञ्जीवितमात्मनः ।
उत्तिष्ठ राजन् युद्धाय सहास्माभिस्सुयोधन ॥ १९॥

क्व ते दर्पो नरश्रेष्ठ स च मानः क्व ते गतः ।
यस्त्वं संस्तम्भ्य सलिलं राजन् भीतो व्यवस्थितः ॥ २०॥

सर्वे त्वां शूर इत्येवं जना जल्पन्ति संसदि ।
व्यर्थं तद्भवतो मन्ये शौर्यं सलिलशायिनः ॥ २१॥

उत्तिष्ठ राजन् युध्यस्व क्षत्रियोऽसि कुलोद्भवः ।
कौरवेयो विशेषेण कुलं जन्म च संस्मर ॥ २२॥

स कथं कौरवे वंशे प्रशस्तं जन्म चात्मनः ।
युद्धा त्रस्तस्ततस्तोयं प्रविश्य प्रतितिष्ठसि ॥ २३॥

अयुद्धेन व्यवस्थानं नैष धर्मस्सनातनः ।
अनार्यजुष्टमस्वर्ग्यं रणाद्राज्ञः पलायनम् ॥ २४॥

कथं पारमगत्वा हि युद्धे त्वं वै जिजीविषुः ।
इमान् निपतितान् दृष्ट्वा पुत्रान् भ्रातॄन् पितॄन् सखीन्॥ २५॥

सम्बन्धिनो बान्धवांश्च वयस्यान् मातुलांस्तथा ।
घातयित्वा कथं तात ह्रदे तिष्ठसि साम्प्रतम् ॥ २६॥

शूरमानी न शूरस्त्वं मिथ्या वदसि कौरव ।
शूरोऽहमिति दुर्बुद्धे सर्वलोकस्य पश्यतः ॥ २७॥

न हि शूराः पलायन्ते शत्रून् दृष्ट्वा कथञ्चन ।
ब्रूहि वा त्वं यया वृत्त्या शूरस्त्यजसि संयुगम् ॥　　२८॥

स त्वमुत्तिष्ठ युध्यस्व विहाय भयमात्मनः ॥　　२९

[1]पातयित्वा सर्वसैन्यान् भ्रातॄंश्चैव सुयोधन ।
नेदानीं जीविते बुद्धिः कार्या धर्मचिकीर्षया ॥　　३०
क्षत्रधर्मं समाश्रित्य त्वद्विधेन सुयोधन ॥　　३०॥

यत् त्वं हि कर्णमुपाश्रित्य शकुनिं चापि सौबलम् ।
दुश्शासनं च मोहान् त्वम् आत्मानं नावबुद्धवान् ॥　　३१॥

तत् पापं सुमहत् कृत्वा प्रतियुध्यस्व भारत ॥　　३२
[2]कथं हि त्वद्विधो मोहाद् रोचयेत पलायनम् ॥　　३२॥

क्व चैतत् पौरुषं यातं क्व च मानस्सुयोधन ।
क्व च विक्रान्तता याता क्व च विष्फूर्जितं महत् ॥　　३३॥

क्व ते कृतास्त्रता याता किं नु शेषे जलाशये ।
स त्वमुत्तिष्ठ युध्यस्व क्षत्रधर्मेण भारत ॥　　३४॥

अस्मान् वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथवा निहतोऽस्माभिस् स्वर्गमाप्नुहि भारत ॥　　३५॥

एष ते [3]प्रथमो धर्मस् सृष्टो धात्रा महात्मना ।

---

1. ख-घ—प्रमुखे सर्वसैन्यानां भ्रातॄणां च सुयोधन ।　　[पाठान्तरम्]
2. ख—अर्धपङ्क्तं नास्ति
3. ख-घ—परमो

तं कुरुष्व यथातत्त्वं पौरुषे स्वे व्यवस्थितः ॥ ३६॥

दुर्योधनः—

नैतच्चित्रं महाराज यद्भीः प्राणिनमाविशेत् ।
न च प्राणभयाद्भीतो व्यपयातोऽस्मि भारत ॥ ३७॥

विरथश्चानिषङ्गी च निहतः पार्ष्णिसारथिः ।
एकश्च विगणस्सोऽहं प्रत्याश्वासमरोचयम् ॥ ३८॥

न प्राणहेतोर्न भयान्न विषादाद्विशां पते ।
इदमम्भः प्रविष्टोऽस्मि श्रमात्त्विदमनुष्ठितम् ॥ ३९॥

त्वं चाश्वसिहि कौन्तेय ये चाप्यनुगतास्तव ।
अहमुत्थाय वस्सर्वान् प्रतियोद्धास्मि संयुगे ॥ ४०॥

युधिष्ठिरः—

आश्वस्ताश्च वयं सर्वे चिरं त्वां मृगयामहे ।
त्वमिदानीं समुत्तिष्ठ युध्यस्वेह सुयोधन ॥ ४१॥

हत्वा च समरे पार्थान् स्फीतं राज्यमवाप्नुहि ।
निहतो वा रणेऽस्माभिर् वीरलोकं गमिष्यसि ॥ ४२॥

दुर्योधनः—

यदर्थं राज्यमिच्छेयं कुरूणां कुरुनन्दन ।
त इमे निहतास्सर्वे भ्रातरो मे जनेश्वर ॥ ४३॥

क्षीणरत्नां च पृथिवीं हतक्षत्रियपुङ्गवाम् ।

नैतामिच्छाम्यहं भोक्तुं विधवामिव योषितम् ॥ ४४॥

अद्यापि त्वहमाशंसे त्वां विजेतुं युधिष्ठिर ।
भङ्क्त्वा पाञ्चालपाण्डूनाम् उत्साहं भरतर्षभ ॥ ४५॥

न त्विदानीमहं मन्ये कार्यं युद्धेन केन चित् ।
द्रोणे कर्णे च संशान्ते निहते च पितामहे ॥ ४६॥

अस्त्विदानीमियं राजन् केवला पृथिवी तव ।
असहायो हि को राजा राज्यमिच्छेत् प्रशासितुम् ॥ ४७॥

सुहृदस्तादृशान् हित्वा पुत्रान् भ्रातॄन् पितॄनपि ।
भवद्भिश्च हृते राज्ये को नु जीवेत मादृशः ॥ ४८॥

अहं वनं गमिष्यामि अजिनैः परिवारितः ।
रतिर्हि नास्ति मे राज्ये हतपक्षस्य भारत ॥ ४९॥

हतबान्धवभूयिष्ठा हताश्वा हतकुञ्जरा ।
एषा ते पृथिवी राजन् भुङ्क्ष्वैनां विगतज्वरः ॥ ५०॥

वनमेव गमिष्यामि वसानो मृगचर्म वै ।
न हि मे निर्जितस्यास्ति जीवितेऽद्य स्पृहा विभो ॥ ५१॥

गच्छ त्वं भुङ्क्ष्व राजेन्द्र पृथिवीं निहतद्विपम् ।
हतयोधां नष्टरत्नां क्षीणक्षत्रां यथासुखम् ॥ ५२॥

युधिष्ठिरः—

आर्तप्रलापं मा तात सलिलस्थः प्रभाषथाः ।

नैतन्मे रोचते राजन् वाशितं शकुनेरिव ॥ ५३॥

यदि वाऽपि समर्थस्स्यास् त्वं दानाय सुयोधन ।
नाहमिच्छेयमवनिं त्वया दत्तां प्रशासितुम् ॥ ५४॥

अधर्मेण न गृह्णीयां त्वया दत्तां महीमिमाम् ।
न हि धर्मो भवेद्राजन् क्षत्रियस्य प्रतिग्रहः ॥ ५५॥

त्वया दत्तां न चेच्छेयं पृथिवीमखिलामपि ।
त्वां च युद्धे विनिर्जित्य भोक्तास्मि वसुधामिमाम् ॥ ५६॥

अनीश्वरश्च पृथिवीं कथं त्वं दातुमिच्छसि ।
त्वयैषा पृथिवी राजन् किं न दत्ता तदैव हि ॥ ५७॥

धर्मतो याचमानस्य शमार्थं च कुलस्य नः ।
वार्ष्णेयः प्रथमं राजन् प्रत्याख्यातो महाबलः ॥ ५८॥

अभियुक्तो हि को राजन् दातुमिच्छति मेदिनीम् ।
किमिदानीं ददास्यद्य को हि ते चित्तविभ्रमः ॥ ५९॥

न त्वमद्य महीं दातुम् ईशः कौरवनन्दन ।
आच्छेत्तुं वा बलाद्राजन् स कथं दातुमिच्छसि ॥ ६०॥

मां त्वं निर्जित्य सङ्ग्रामे पालयेमां वसुन्धराम् ॥ ६१

सूच्यग्रेणापि यद्भूमेर् अपि ध्रीयेत भारत ।
तन्मात्रमपि वै मह्यं न ददाति पुरा भवान् ॥ ६२

स कथं पृथिवीमेतां प्रददासि विशां पते ।

सूच्यग्रं नात्यजः पूर्वं स कथं त्यजसि क्षितिम् ॥　६३

एवमैश्वर्यमासाद्य केवलं पृथिवीपते ।
को नु मूढो व्यवस्येत शत्रोर्दातुं वसुन्धराम् ॥　६४

त्वं तु केवलमौर्ख्येण विमूढो नावबुध्यसे ।
पृथिवीं दातुकामोऽपि जीवंस्त्वं न विमोक्ष्यसे ॥　६५

अस्मान् वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथवा निहतोऽस्माभिर् व्रज लोकाननुत्तमान् ॥　६६

आवयोर्जीवतो राजन् मयि च त्वयि च ध्रुवम् ।
संशयस्सर्वभूतानां विजये नौ भविष्यति ॥　६७

जीवितं तव दुष्प्रापं मयि सम्प्रति वर्तते ।
जीवयेयमहं [1]पाप न त्वं जीवितुमर्हसि ॥　६८

दहने हि कृतो यत्नस् त्वयाऽस्मासु विशेषतः ।
आशीविषविषैश्चापि जले वाऽपि प्रवेशनैः ॥　६९

त्वया विनिकृता राजन् राज्यस्य हरणेन च ॥　६९॥

एतस्मात् कारणात् पाप जीवितं ते न विद्यते ।
उत्तिष्ठोत्तिष्ठ युध्यस्व तत्ते श्रेयो भविष्यति ॥　७०॥

सञ्जयः—

एवं तु विविधा वाचो जययुक्ताः पुनः पुनः ।

---

1. ब—कामं

कीर्तयन्ति स्म ते वीरास् तत्र तत्र नराधिप *॥ ७१॥

धृतराष्ट्रः—

एवं सन्तर्ज्यमानस्तु पुत्रो मम महीपतिः ।
प्रकृत्या मन्युमान् वीरः कथमासीत् परन्तपः ॥ ७२॥

न हि सन्तर्जना तेन श्रुतपूर्वा कदाचन ।
राजभावेन मान्यश्च सर्वलोकस्य सोऽभवत् ॥ ७३॥

इदं च पृथिवी सर्वा सम्लेच्छाटविका भृशम् ।
प्रसादाद्ध्रियते तस्य प्रत्यक्षं तव सञ्जय ॥ ७४॥

स तथा तर्ज्यमानस्तु विषमस्थो विशेषतः ।
विहीनश्च स्वकैर्भृत्यैर् विजनैश्च वृतो भृशम् ॥ ७५॥

श्रुत्वा वाचस्सुकटुका जययुक्ताः पुनः पुनः ।
किमब्रवीत् पाण्डवेयांस् तन्ममाचक्ष्व सञ्जय ॥ ७६॥

सञ्जयः—

तर्ज्यमानस्तदा राजा उदकस्थस्तवात्मजः ।
युधिष्ठिरेण राजेन्द्र भ्रातृभिस्सहितेन हि ॥ ७७॥

श्रुत्वा तु कटुका वाचो विषमस्थो नराधिपः ।
दीर्घमुष्णं च निश्श्वस्य सलिलस्थो मुहुर्मुहुः ॥ ७८॥

सलिलान्तर्गतो राजा धून्वन् हस्तौ पुनः पुनः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

मनश्चकार युद्धाय राजानं चाभ्यभाषत ॥ ७९॥

दुर्योधनः—

यूयं ससुहृदः पार्थास् सर्वे सरथवाहनाः ।
अहमेकः परिद्यूनो विरथो हतवाहनः ॥ ८०॥

आत्तशस्त्रै रथगतैर् बहुभिः परिवारितः ।
कथमेकः पदातिस्सन्नशस्त्रो योद्धुमुत्सहे ॥ ८१॥

एकैकश्चैव मां यूयं योधयध्वं युधिष्ठिर ।
न ह्येको बहुभिर्वीरैर् न्याय्यं योधयितुं रिपुः ॥ ८२॥

हीनशस्त्रो विकवचश् श्रान्तश्चापस्समाश्रितः ।
भृशं विक्षतगात्रश्च श्रान्तवाहनसैनिकः ॥ ८३॥

न मे त्वत्तो भयं राजन् न च पार्थाद्वृकोदरात् ।
फल्गुनाद्वासुदेवाद्वा पाञ्चालेभ्योऽथवा पुनः ॥ ८४॥

यमाभ्यां युयुधानाद्वा ये चान्ये तव सैनिकाः ।
एकस्सर्वानहं क्रुद्धान् एतान् योद्धुमिहोत्सहे ॥ ८५॥

धर्ममूला सतां कीर्तिर् मनुष्याणां जनाधिप ।
धर्मं चैवेह कीर्तिं च पालयन् प्रब्रवीमि ते ॥ ८६॥

अहमुत्थाय वस्सर्वान् प्रतियोत्स्यामि संयुगे ।
अन्वभ्याशं गतान् सर्वान् निहनिष्यामि भारत ॥ ८७॥

अद्य वस्सरथान् साश्वान् अशस्त्रो विरथोऽपि सन् ।

नक्षत्राणीव सर्वाणि सविता रात्रिसङ्क्षये ॥ ८८॥

तेजसा नाशयिष्यामि स्थिरीभवत पाण्डवाः ॥ ८९

अद्यानृण्यं गमिष्यामि क्षत्रियाणां यशस्विनाम् ।
बाह्लीकद्रोणभीष्माणां कर्णस्य च महात्मनः ॥ ९०

जयद्रथस्य शूरस्य भगदत्तस्य चोभयोः ।
मद्रराजस्य शल्यस्य भूरिश्रवस एव च ॥ ९१

भ्रातॄणां भरतश्रेष्ठ शकुनेस्सौबलस्य च ।
मित्राणां सुहृदां चैव बान्धवानां च सर्वशः ॥ ९२

आनृण्यमद्य यास्यामि हत्वा त्वां भ्रातृभिस्सह ॥ ९२॥

सञ्जयः—

एवमुक्त्वा तु वचनं विरराम नराधिपः ।
सलिलान्तर्गतश्श्रीमान् पुत्रो दुर्योधनस्तव ॥ ९३॥

युधिष्ठिरः—

दिष्ट्या त्वमपि जानीषे क्षत्रधर्मं सुयोधन ।
दिष्ट्या ते वर्तते बुद्धिर् युद्धायैव महाभुज ॥ ९४॥

दिष्ट्या शूरोऽसि गान्धारे दिष्ट्या जानासि सङ्गरम् ।
यस्त्वमेकोऽद्य नस्सर्वान् संयुगे योद्धुमिच्छसि ॥ ९५॥

एक एकेन सङ्गम्य यत्ते सम्मतमायुधम् ।
तत् त्वमादाय युध्यस्व प्रेक्षकास्ते वयं स्थिताः ॥ ९६॥

अहमिष्टं च ते कामं वीर भूयो ददाम्यहम् ।
हत्वैकं भव नो राजा हतो वा स्वर्गमाप्नुहि ॥　　९७॥

दुर्योधनः—

एकश्चेद्योद्धुमाक्रन्दे वरोऽद्य मम दीयताम् ।
आयुधानामियं चापि मता मे सततं गदा ॥　　९८॥

[1]भ्रातॄणां भवतामेकश् शक्तो मां यो हि मन्यते ।
पदातिर्गदया सङ्ख्ये स युध्यतु मया सह ॥　　९९॥

वृत्तानि रथयुद्धानि विचित्राणि पदे पदे ।
इदं त्वेकं गदायुद्धं भवत्वद्याद्भुतं महत् ॥　　१००॥

अन्नानामपि पर्यायं भोक्तुमिच्छन्ति मानवाः ।
युद्धानामपि पर्यायो भवत्वनुमते तव ॥　　१०१॥

गदया त्वां महाबाहो विजेष्यामि सहानुजम् ।
पाञ्चालान् सृञ्जयांश्चैव ये चान्ये तव बान्धवाः ॥　　१०२॥

युधिष्ठिरः—

उत्तिष्ठोत्तिष्ठ गान्धारे मां योधय सुयोधन ।
एक एकेन सङ्गम्य गदया संयुगे बली ॥　　१०३॥

[2]पुरुषो भव गान्धारे युध्यस्व सुसमाहितः ।
अद्य ते जीवितं नास्ति यद्यपि त्वं मनोजवः ॥　　१०४॥

---

1. ब—भ्रातॄणां सुहृदां चैव बान्धवानां च सर्वशः ।　　[अधिकः पाठः]
2. ब—दुर्धर्षो

सञ्जयः—

एतत् स नरशार्दूलो नामृष्यत तवात्मजः ।
सलिलान्तर्गतश्श्वभ्रे महानाग इव श्वसन् ॥ १०५॥

ततोऽसौ वाक्प्रतोदेन तुद्यमानः पुनः पुनः ।
वाचं न ममृषे धीमान् उत्तमाश्वः कशामिव ॥ १०६॥

सङ्क्षोभ्य सलिलं वेगाद् गदामादाय वीर्यवान् ।
अद्रिसारमयीं गुर्वीं जातरूपपरिष्कृताम् ॥ १०७॥

अन्तर्जलात् समुत्तस्थौ नागेन्द्र इव निश्श्वसन् ॥ १०८

स हित्वा स्तम्भितं तोयं स्कन्धे कृत्वाऽऽयसीं गदाम् ।
उदतिष्ठत पुत्रस्ते प्रतपन् रश्मिमानिव ॥ १०९

ततश्शैक्यायसीं गुर्वीं जातरूपपरिष्कृताम् ।
गदां परामृशन् धीमान् धार्तराष्ट्रो महायशाः ॥ ११०

गदाहस्तं तु तं दृष्ट्वा सशृङ्गमिव पर्वतम् ।
प्रजानामिव सङ्क्रुद्धं शूलपाणिमवस्थितम् ॥ १११

[1]तमुत्तीर्णं महाबाहुं [2]गदाहस्तमरिन्दमम् ।
मेनिरे सर्वभूतानि [3]दण्डहस्तमिवान्तकम् ॥ ११२

वज्रहस्तं यथा शक्रं शूलहस्तं यथा हरम् ।

---

1. क-ख-घ—सगदो भारतो भाति प्रतपन् भास्करो यथा ।
[अधिकः पाठः]

2. ख—इतः पादद्वयं नास्ति 3. अ-क-ख—गदा

ददृशुस्सर्वभूतानि पुत्रं तव जनाधिप ॥ ११३

तमुत्तीर्णं तु सम्प्रेक्ष्य समहृष्यन्त सर्वशः ।
पाञ्चालाः पाण्डवेयाश्च तेऽन्योन्यस्य तलं ददुः ॥ ११४

अपहासं तु तं मत्वा पुत्रो दुर्योधनस्तव ।
उद्वृत्य नयने क्रूरे दिधक्षुरिव पाण्डवान् ॥ ११५

त्रिशिखां भ्रुकुटीं कृत्वा सन्दष्टदशनच्छदः ।
प्रत्युवाच ततस्तान् वै पाण्डवान् सहकेशवान् ॥ ११६

दुर्योधनः—

अपहासस्य वोऽद्यास्य प्रतिमोक्तास्मि पाण्डवाः ।
गमिष्यथ हतास्सद्यस् सपाञ्चाला यमक्षयम् ॥ ११७

सञ्जयः—

उत्थितस्तु जलात् तस्माद् योद्धुकामस्सुतस्तव ।
अतिष्ठच्च गदापाणी रुधिरेण समुक्षितः ॥ ११८

तस्य शोणितदिग्धस्य रुधिरेण समुक्षितम् ।
शरीरं तु तदा भाति स्रवन्निव महीधरः ॥ ११९

तमुद्यतगदं वीरं मेनिरे तत्र पाण्डवाः ।
वैवस्वतमिव क्रुद्धं शूलपाणिमवस्थितम् ॥ १२०

स मेघनिनदो हर्षाद् विनदन्निव गोवृषः ।
आजुहाव तदा पार्थान् गदया भीमविक्रमः ॥ १२१

दुर्योधनः—

एकैकशश्च मां यूयं योधयध्वं युधिष्ठिर ।
न ह्येको बहुभिर्न्याय्यं वीर योधयितुं रणे ॥ १२२

न्यस्तवर्मा विशेषेण श्रान्तश्चाप्सु परिप्लुतः ।
भृशं विक्षतगात्रश्च हतवाहनसैनिकः ॥ १२३

युधिष्ठिरः—

मा भूदियं तव प्रज्ञा कथमेकं सुयोधन ।
यथाऽभिमन्युं बहवो युधि जघ्नुर्महारथाः ॥ १२४

गृहाण कवचं वीर मूर्धजान् यमयस्व च ।
यच्चान्यदपि ते नास्ति तदप्यादत्स्व भारत ॥ १२५

इदमेकं च ते कामं वीर भूयो ददाम्यहम् ॥ १२५॥

पञ्चानां पाण्डवेयानां येन योद्धुमिहेच्छसि ।
तं हत्वा भव राजा त्वं हतो वा स्वर्गमाप्नुहि ॥ १२६॥

ऋते च जीवितं वीर युद्धे किं कुर्मि ते प्रियम् ॥ १२७

सञ्जयः—

ततस्तव सुतो राजन् वर्म जग्राह काञ्चनम् ।
विचित्रं च शिरस्त्राणं जाम्बूनदपरिष्कृतम् ॥ १२८

सोऽवबद्धशिरस्त्राणश् शुद्धकाञ्चनवर्मधृक् ।
रराज राजन् पुत्रस्ते काञ्चनश्शैलराडिव ॥ १२९

सन्नद्धस्सगदी राजन् सज्जस्सङ्ग्राममूर्धनि ।
अब्रवीत् पाण्डवान् राजन् पुत्रो दुर्योधनस्तव ॥　　१३०

दुर्योधनः—

भ्रातॄणां भवतामेको युध्यतां गदया मया ।
सहदेवेन वा योत्स्ये भीमेन नकुलेन वा ॥　　१३१

अथ वा फल्गुनेनाद्य त्वया वा भरतर्षभ ।
योत्स्येऽहं सङ्गरं प्राप्य विजेष्ये च रणाजिरे ॥　　१३२

अहमद्य गमिष्यामि वैरस्यान्तं सुदुर्गमम् ।
गदया पुरुषव्याघ्र हेमपट्ट[1]निबद्धया ॥　　१३३

गदायुद्धे न मे कश्चित् सदृशोऽस्तीति चिन्तय ॥　　१३३॥

गदया पोथयिष्यामि सर्वानेव पृथक् पृथक् ।
गृह्यतां तु गदा यो वै युध्यतेऽद्य मया सह ॥　　१३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ ७५ ॥ ह्रदप्रवेशपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये १३४॥ श्लोकाः]
[ह्रदप्रवेशपर्व समाप्तम्]

———

## ॥ एकोनत्रिंशोऽध्यायः ॥

(गदायुद्धपर्व)

युधिष्ठिरेण दुर्योधनं प्रति स्वेष्वन्यतमपराजयेनापि तस्य राज्यप्राप्तिवचने कृष्णेन तं प्रति सकोपं भीमेनापि दुर्योधनपराजये स्वस्य संशयोक्तिः ॥ १ ॥ भीमेन कृष्णं प्रति स्वसामर्थ्यकथनपूर्वकं स्वेन दुर्योधनवधस्य सुकरत्वे कथिते कृष्णादिभिस्तत्प्रशंसनम् ॥ २ ॥ भीमदुर्योधनयोर्वीरवादपूर्वकं युद्धोद्यमः ॥ ३ ॥ गदायुद्धारम्भे बलभद्रागमनम् ॥ ४ ॥ तस्मिन् पाण्डवादिभिरर्चितोपविष्टे पुनर्गदायुद्धारम्भः ॥ ५ ॥

सञ्जयः—

एवं दुर्योधने राजन् गर्जमाने पुनः पुनः ।
वासुदेवोऽब्रवीत् क्रुद्धो युधिष्ठिरमिदं वचः ॥ १

श्रीभगवान्—

यदि नाम ह्ययं क्रुद्धो वरयेत् त्वां युधिष्ठिर ।
अर्जुनं नकुलं वाऽपि सहदेवमथापि वा ॥ २

किमिदं व्याहृतं राजंस् त्वया साहसमीदृशम् ।
एकमेव निहत्याजौ भव राजा कुरुष्विति ॥ ३

एतेन हि कृता योग्या* वर्षाणीह त्रयोदश ।
आयसैः पुरुषै राजन् भीमसेनवधेप्सया ॥ ४

* योगः प्रशस्तकरसञ्चरः-तदुचिता चेष्टा योग्या-आयसपुरुषान्निर्माय भीमसेनजिघांसया गदया ताडयतीत्यर्थः—

कथं नाम भवेत् कार्यम् अस्माभिर्भरतर्षभ ।
साहसं कृतवान् यत् त्वम् अनुक्रोशान्नृपोत्तम ॥ ५

न चान्यमद्य पश्यामि प्रतियोद्धारमाहवे ।
ऋते वृकोदरात् पार्थात् स च नातिकृतश्रमः ॥ ६

तदिदं द्यूतमारब्धं पुनरेव यथा पुरा ।
विषमं शकुनेश्चैव तव चैव विशेषतः ॥ ७

बली भीमस्समर्थश्च कृती राजन् सुयोधनः ।
बलवान् वै कृती वेति कृती राजन् विशिष्यते ॥ ८

सोऽयं राजंस्त्वया शत्रुस् समे पथि निवेशितः ।
न्यस्तश्चात्मा सुविषमे कृच्छ्रमापादिता वयम् ॥ ९

को हि सर्वान् विनिर्जित्य शत्रूनेकेन वैरिणा ।
पणित्वा चैकपाणेन [1]शोचयेदेवमाहवम् ॥ १०

न हि पश्यामि तँल्लोके गदाहस्तं नरेश्वर ।
योऽद्य दुर्योधनं सङ्ख्ये कृतित्वाद्धि विशेषयेत् ॥ ११

फल्गुनो वा भवान् वाऽपि माद्रीपुत्रावथापि वा ।
न समर्थानहं मन्ये गदाहस्तस्य संयुगे ॥ १२

स कथं वदसे शत्रुं युध्यस्व गदयेति ह ।
एकं वा त्वं निहत्याजौ भव राजेति भारत ॥ १३

---

1. क-ख—रोचये

वृकोदरं समासाद्य संशयो विजयो हि नः ।
न्यायतो युध्यमानानां कृती ह्येव महाबलः ॥ १४

भीमः—

मधुसूदन मा कार्षीर् विषादं यदुपुङ्गव ।
अद्य पारं गमिष्यामि वैरस्यास्य सुदुर्गमम् ॥ १५

अहं सुयोधनं सङ्ख्ये हनिष्यामि न संशयः ।
विजयो वै ध्रुवः कृष्ण धर्मराजस्य दृश्यते ॥ १६

अत्यर्थेन गुणेनेयं गदा गुरुतरी मम ।
न तथा धार्तराष्ट्रस्य मा कार्षीर्माधव व्यथाम् ॥ १७

[1]अनया गदया चाहं संयुगे योद्धुमुत्सहे ।
भवन्तः प्रेक्षकास्सर्वे मम सन्तु जनार्दन ॥ १८

सामरानपि लोकांस्त्रीन् नानाशस्त्रधरान् युधि ।
योधयेयं रणे हृष्टः किमुताद्य सुयोधनम् ॥ १९

सञ्जयः—

तं तथा भाषमाणं तु वासुदेवो वृकोदरम् ।
हृष्टस्सम्पूजयामास वचनं चेदमब्रवीत् ॥ २०

श्रीभगवान्—

त्वामासाद्य महाबाहो धर्मराजो युधिष्ठिरः ।

1. ख—एतदादि चतुर्विंशत्यर्धानि न सन्ति

निहतारिस्स्वकां दीप्तां श्रियमाप्नोत्यसंशयम् ॥  २१

त्वया विनिहतास्सर्वे धृतराष्ट्रसुता रणे ।
राजानो राजपुत्राश्च नागाश्च विनिपातिताः ॥  २२

कलिङ्गमागधाः प्राच्या गान्धाराः कुरवस्तथा ।
त्वामासाद्य महायुद्धे निहताः पाण्डुनन्दन ॥  २३

हत्वा दुर्योधनं चापि प्रयच्छोर्वीं ससागराम् ।
धर्मराजाय कौन्तेय सशैलवनकाननाम् ॥  २४

त्वां तु प्राप्य रणे पापो धार्तराष्ट्रो विनश्यति ।
त्वमस्य सक्थिनी भङ्क्त्वा प्रतिज्ञां पालयिष्यसि ॥  २५

यत्नेन हि त्वया पार्थ योद्धव्यो धृतराष्ट्रजः ।
कृती च युद्धशौण्डश्च बलवांश्चैव पार्थिवः ॥  २६

सञ्जयः—

ततस्तु [1]सात्यकी राजन् पूजयामास पाण्डवम् ।
विविधाभरणस्रग्भिर् भीमसेनं जनेश्वर ॥  २७

पाञ्चालाः पाण्डवेयाश्च धर्मराजपुरोगमाः ।
तद्वचो भीमसेनस्य सर्वे एवाभ्यपूजयन् ॥  २८

ततो भीमबलो भीमो युधिष्ठिरमथाब्रवीत् ।
सृञ्जयैस्सह तिष्ठन्तं तपन्तमिव भास्करम् ॥  २९

---

1. अ-क-ख— पाण्डवान् राजन्+केशवः

भीमः—

अहमेतेन सङ्गम्य संयुगे योद्धुमुत्सहे ।
न हि शक्तो रणे जेतुं मामेष पुरुषाधमः ॥ ३०

अद्य क्रोधं विमोक्ष्यामि निहितं हृच्छयं भृशम् ।
सुयोधने धार्तराष्ट्रे खाण्डवेऽग्निमिवार्जुनः ॥ ३१

शल्यमद्योद्धरिष्यामि तव पाण्डव हृद्गतम् ।
निहत्य गदया पापम् अद्य राजन् सुखी भव ॥ ३२

अद्य कीर्तिमयीं मालां प्रतिमोक्ष्ये तवानघ ।
प्राणान् श्रियं च राज्यं च मोक्ष्यतेऽद्य सुयोधनः ॥ ३३

राजा तु धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं निपातितम् ।
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ ३४

सञ्जयः—

इत्युक्त्वा भरतश्रेष्ठो गदामुद्यम्य भारत ।
अवातिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ ३५

तमेकाकिनमासाद्य धार्तराष्ट्रं महाबलम् ।
निर्यूथमिव मातङ्गं समहृष्यन्त पाण्डवाः ॥ ३६

तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
भीमसेनस्तदा राजन् दुर्योधनमथाब्रवीत् ॥ ३७

भीमः—

राज्ञा च धृतराष्ट्रेण त्वया चास्मासु यत् कृतम् ।
स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते ॥　　३८

द्रौपदी सुपरिक्लिष्टा सभामध्ये रजस्वला ।
द्यूते च वञ्चितो राजा शकुनेर्बुद्धिलाघवात् ॥　　३९

यानि चान्यानि दुष्टात्मन् पापानि कृतवानसि ।
[1]पार्थेषु यत् कृतं त्वागस् तस्य पश्य महत् फलम् ॥　　४०

त्वत्कृते निहतश्शेते शरतल्पे महायशाः ।
[2]गाङ्गेयो भरतश्रेष्ठस् सर्वेषां नः पितामहः ॥　　४१

हतो द्रोणश्च कर्णश्च हतश्शल्यश्च वीर्यवान् ।
वैराग्नेरादिकर्ता च शकुनिर्विनिपातितः ॥　　४२

भ्रातरस्ते हताश्शूरा पुत्राश्च सहसैनिकाः ।
राजानश्च हताश्शूरास् समरेष्वनिवर्तिनः ॥　　४३

एते चान्ये च बहवो निहताः क्षत्रियर्षभाः ॥　　४३॥

प्रातिकामी हतः पापो द्रौपद्याः क्लेशकृच्छठः ।
अवशिष्टस्त्वमेवैकः कुलघ्नोऽधमपूरुषः ॥　　४४॥

त्वामप्यद्य हनिष्यामि गदया नात्र संशयः ।

---

1. ख-घ—पुरा पार्थेष्वनागस्सु तस्य
2. अ—नास्तीदमर्धम्

अद्य तेऽहं रणे दर्पं सर्वं नाशयिता नृप ॥ ४५॥

राज्याशां विपुलां चापि पाण्डवेषु च दुष्टताम् ॥ ४६

दुर्योधनः—

किं कत्थनेन बहुधा युध्यस्वाद्य मया सह ।
अद्य तेऽहं विनेष्यामि युद्धश्रद्धां वृकोदर ॥ ४७

किं न पश्यसि मां पार्थ गदापाणिमवस्थितम् ।
हिमवच्छिखराकारां प्रगृह्य महतीं गदाम् ॥ ४८

गदिनं कोऽद्य मां पार्थ जेतुमुत्सहते रिपुः ।
न्यायतो युध्यमानश्च देवेष्वपि पुरन्दरः ॥ ४९

मा वृथा गर्ज कौन्तेय शारदाभ्र इवाजलः ।
दर्शयस्व बलं युद्धे यावत्तत्सून् निहन्मि ते ॥ ५०

सञ्जयः—

तस्य तद्वचनं श्रुत्वा पाञ्चालास्सहसृञ्जयाः ।
सर्वे सम्पूजयामासुस् तद्वचो विजिगीषवः ॥ ५१

तं मत्तमिव मातङ्गं तलशब्देन पार्थिवाः ।
भूयस्संहर्षयामासू राजन् दुर्योधनं द्विषः ॥ ५२

बृंहन्ति कुञ्जरा राजन् हया हेषन्ति चासकृत् ।
शस्त्राणि सम्प्रदीप्यन्ते पाण्डवानां यशस्विनाम् ॥* ५३

* ब—कोशं विना इतरकोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

तस्मिन् युद्धे महाराज सम्प्रवृत्ते भयानके ।
उपविष्टेषु सर्वेषु पाण्डवेषु महात्मसु ॥ ५४

ततस्तालध्वजो रामस् तयोर्युद्ध उपस्थिते ।
[1]श्रुत्वा तच्छिष्ययोर्युद्धम् आजगाम महाबलः ॥ ५५

तं दृष्ट्वा परमप्रीताः पूजयित्वा महाबलाः ।
शिष्ययोः कौशलं युद्धे पश्य रामेति चाब्रुवन् ॥ ५६

अब्रवीच्च तदा रामो दृष्ट्वा कृष्णं च पाण्डवम् ।
दुर्योधनं च कौरव्यं गदापाणिमवस्थितम् ॥ ५७

बलरामः—

चत्वारिंशद्दिनान्यद्य द्वे चान्ये निस्सृतस्य मे ।
पुष्येण सम्प्रयातोऽस्मि श्रवणे पुनरागतः ॥ ५८

शिष्ययोर्वै गदायुद्धं द्रष्टुकामोऽस्मि माधव ॥ ५८॥

सञ्जयः—

ततो युधिष्ठिरो राजा परिष्वज्य हलायुधम् ।
स्वागतं कुशलं चास्मै पर्यपृच्छद्यथातथम् ॥ ५९॥

कृष्णौ चापि महेष्वासावभिवाद्य हलायुधम् ।
सस्वजाते परं प्रीत्या प्रीयमाणौ यशस्विनौ ॥ ६०॥

माद्रीपुत्रौ तथा शूरौ द्रौपद्याः पञ्च चात्मजाः ।

---

1. अ—पञ्चार्धानि न सन्ति

अभिवाद्य स्थिता राजन् रौहिणेयं महाबलम् ॥ ६१॥

भीमसेनोऽपि बलवान् पुत्रश्च तव भारत ।
तौ तथैवोद्यतगदौ पूजयेतां हलायुधम् ॥ ६२॥

[1]स्वागतेन च ते तत्र प्रतिपूज्य पुनः पुनः ।
पश्य युद्धं महा[2]बाह्वोर् इति ते राममब्रुवन् ॥ ६३॥

एवमूचुर्महात्मानं रौहिणेयं [3]नराधिप ॥ ६४

परिष्वज्य तदा रामः पाण्डवान् सृञ्जयानपि ।
अपृच्छत् कुशलं सर्वान् पाण्डवांश्चामितौजसः ॥ ६५

तथैव ते समासाद्य पप्रच्छुस्तमनामयम् ॥ ६५॥

तान् प्रत्यर्च्य हली सर्वान् क्षत्रियांश्चा[4]मितौजसः ।
कृत्वा कुशलसम्प्रश्नं संविदं च यथावयः ॥ ६६॥

जनार्दनं सात्यकिं च प्रेम्णा सम्परिषस्वजे ॥ ६७

मूर्ध्नि चैतावुपाघ्राय कुशलं पर्यपृच्छत ॥ ६७॥

तौ चैनं विधिवद्राजन् पूजयामासतुर्गुरुम् ।
ब्रह्माणमिव देवेशम् इन्द्रोपेन्द्रौ मुदा युतौ ॥ ६८॥

ततोऽब्रवीद्धर्मसुतो रौहिणेयमरिन्दमम् ।
इदं भ्रात्रोर्महायुद्धं पश्य रामेति भारत ॥ ६९॥

---

1. ख—अर्धलयं नास्ति 2. घ—बाह्रो इति
3. घ—महारथाः 4. क—महात्मनः

तेषां मध्ये महाबाहुश् श्रीमान् केशवपूर्वजः ।
न्यविशत् परमप्रीतः प्रीयमाणो महारथैः ॥ ७०॥

स बभौ राजमध्यस्थो नीलवासास्सितप्रभः ।
दिवीव नक्षत्रगणैः परिकीर्णो निशाकरः ॥ ७१॥

ततस्तयोस्सन्निपातस् तुमुलो रोमहर्षणः ।
आसीदन्तकरो राजन् वैरस्यान्तं विधित्सतोः ॥ ७२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
॥ ७६ ॥ गदायुद्धपर्वणि प्रथमोऽध्यायः ॥ १ ॥*
[ अस्मिन्नध्याये ७२॥ श्लोकाः ]

---

## ॥ त्रिंशोऽध्यायः ॥

( सारस्वतपर्व )

जनमेजयेन वैशम्पायनं प्रति बलरामस्य तीर्थयात्राप्रकारप्रश्नः ॥ १ ॥ तेन तं प्रति तत्कथनमुपक्रम्य प्रभासतीर्थस्य तत्पदवाच्यत्वे हेतुकथनम् ॥ २ ॥ चन्द्रे स्वभार्यासु अश्विन्यादिदक्षपुत्रीषु उपेक्षणेन रोहिण्यामेकस्यामेवासक्ते दक्षेण रोषाच्चन्द्रे यक्ष्मप्रक्षेपः ॥ ३ ॥ देवैः प्रसादितदक्षवचनाच्चन्द्रेण प्रभासतीर्थनिमज्जनेन क्षयरोगपरिहरणम् ॥ ४ ॥ बलभद्रेण तत्तीर्थे मज्जनादि ॥ ५ ॥

जनमेजयः—

पूर्वमेव यदा रामो युद्धे तस्मिन्नुपस्थिते ।
आमन्त्र्य केशवं यातो वृष्णिभिस्सहितः प्रभुः ॥ १

बलरामः—

साहाय्यं धार्तराष्ट्रस्य न चेत् कर्तास्मि केशव ।
तथैव पाण्डुपुत्राणां गमिष्यामि यथातथम् ॥ २

जनमेजयः—

एवमुक्त्वा तदा रामो यातश्शत्रुनिषूदनः ।
तस्य चागमनं भूयो ब्रह्मन् ब्रूहि मे प्रभो ॥ ३

आख्याहि मे विस्तरतः कथं राम उपस्थितः ।
कथं च दृष्टवान् युद्धं कुशलो ह्यसि वै द्विज ॥ ४

वैशम्पायनः—

उपप्लाव्ये निविष्टेषु पाण्डवेषु महात्मसु ।
प्रेषितो धार्तराष्ट्रस्य समीपं मधुसूदनः ॥ ५

शमं प्रति महाबाहो हितार्थं सर्वदेहिनाम् ।
स गत्वा हास्तिनपुरं धृतराष्ट्रं समेत्य च ॥ ६

उक्तवान् वचनं पथ्यं हितं चैव विशां पते ।
न च तत् कृतवान् राजा यथाऽऽख्यातं हि ते पुरा ॥ ७

अनवाप्य शमं तत्र कृष्णः पुरुषसत्तमः ।
आगच्छच्च महाबाहुर् उपप्लाव्यं जनाधिप ॥ ८

ततः प्रत्यागतः कृष्णो धृतराष्ट्रविसर्जितः ।
आजगाम नरव्याघ्रः पाण्डवानामनीकिनीम् ॥ ९

[1]यथोक्तं च यथावृत्तम् उक्त्वा पाण्डवमब्रवीत् ॥ ९॥

श्रीभगवान्—

न कुर्वन्ति वचो मह्यं कुरवः कालचोदिताः ।
निर्गच्छध्वं पाण्डवेयाः पुष्येण सहिता मया ॥ १०॥

वैशम्पायनः—

ततो विभज्यमानेषु बलेषु बलिनां वरः ।
प्रोवाच भ्रातरं कृष्णं रौहिणेयः प्रतापवान् ॥ ११॥

तेषामपि महाबाहो साहाय्यं मधुसूदन ।

1. ख—इदमर्धं नास्ति

क्रियतामिति तत् कृष्णो नास्य चक्रे वचस्तदा ॥ १२॥

ततो मन्युपरीतात्मा जगाम यदुनन्दनः ।
तीर्थयात्रां हलधरस् सरस्वत्यां महायशाः ॥ १३॥

मैत्रे नक्षत्रयोगे वै सहितस्सर्वयादवैः ॥ १४

आश्रयामास भोजस्तु दुर्योधनमरिन्दमम् ।
युयुधानेन सहितो वासुदेवश्च पाण्डवान् ॥ १५

रौहिणेये गते शूरे पुष्येण मधुसूदनः ।
पाण्डवेयान् पुरस्कृत्य ययावभिमुखः कुरून् ॥ १६

गच्छन्नेव पथिस्थस्तु रामः प्रेष्यानुवाच ह ॥ १६॥

बलरामः—

सम्भारांस्तीर्थयात्रायास् सर्वोपकरणानि च ।
आनयध्वं द्वारकाया अग्नीन् वै याजकांस्तथा ॥ १७॥

सुवर्णं रजतं चैव धेनूर्वासांसि वाजिनः ।
कुञ्जरांश्च रथांश्चैव खरोष्ट्रमहिषानपि ॥ १८॥

क्षिप्रमानीयतां सर्वं तीर्थहेतोः परिच्छदम् ।
प्रतिस्रोतस्सरस्वत्या गच्छध्वं शीघ्रगामिनः ॥ १९॥

ऋत्विजश्चानयध्वं वै शतशश्च द्विजर्षभान् ॥ २०

वैशम्पायनः—

एवं सन्दिश्य तु प्रेष्यान् बलदेवो महाबलः ।

तीर्थयात्रां गतो रामः कुरूणां वैशसे तदा ॥ २१

सरस्वत्याः प्रतिस्रोतस् समुद्रादभिजग्मिवान् ।
रामो यदूत्तमश्श्रीमान् तीर्थयात्रामनुस्मरन् ॥ २२

ऋत्विग्भिश्च सुहृद्भिश्च तथाऽन्यैर्द्विजसत्तमैः ।
रथैर्नागैस्तथाऽश्वैश्च प्रेष्यैश्च भरतर्षभ ॥ २३

गोखरोष्ट्रप्रयुक्तैश्च यानैश्च बहुभिर्नृप ।
श्रान्तानां क्लान्तमनसां शिशूनां विपुलायुषाम् ॥ २४

तानि यानानि देशेषु प्रतीक्षन्ते स्म भारत ।
बुभुक्षितानामर्थाय क्लृप्तं राजन् समन्ततः ॥ २५

यो यो यत्र द्विजो भोक्तुं कामं कामयते तदा ।
तस्य तस्य तु तत्रैव उपजह्रुस्तथा नृप ॥ २६

यत्र स्थिता नरा राजन् रौहिणेयस्य शासनात् ।
भक्ष्यपेयस्य कुर्वन्ति राशिं तत्र पृथक् पृथक् ॥ २७

वासांसि च महार्हाणि पर्यङ्कास्तरणानि च ।
पूजार्थं तत्र क्लृप्तानि विप्राणां सुखमिच्छताम् ॥ २८

यत्रैव सुषुपुर्विप्रा ये वा जाग्रति भारत ।
तत्र तत्रैव सर्वस्य क्लृप्तं सर्वमदृश्यत ॥ २९

यथासुखं जनस्सर्वस् तिष्ठते च दिवानिशम् ।
यातुकामस्य यानानि पानानि तृषितस्य च ॥ ३०

बुभुक्षितस्य चान्नानि स्वादूनि भरतर्षभ ।
[1]पूजार्थं तत्र कॢप्तानि विप्राणां सुखमिच्छताम् ॥ ३१

उपजह्रुर्नरास्तत्र वस्त्राण्याभरणानि च ॥ ३१॥

स पन्थाः प्रबभौ राजन् सर्वस्यैव सुखावहः ।
स्वर्गोपमस्तदा राजन् नराणां तत्र गच्छताम् ॥ ३२॥

नित्यप्रमुदितोपेतस् स्वादुभक्ष्यजलान्वितः ।
विपणापणपण्यैश्च नानाजनपदैर्वृतः ॥ ३३॥

नानाद्रुमलतोपेतो नानारत्नविभूषितः ॥ ३४

ततो महात्मा नियमे स्थितात्मा
पुण्येषु तीर्थेषु वसूनि राजन् ।
ददौ द्विजेभ्यः क्रतुदक्षिणां च
यदुप्रवीरो हलधृक् प्रतीतः ॥ ३५

दोग्ध्रीश्च धेनूश्च सहस्रशो वै
सुवाससः काञ्चनबद्धशृङ्गाः ।
हयांश्च नानाविधदेशजातान्
यानानि दासीश्च शुचीर्द्विजेभ्यः ॥ ३६

वासांसि मुक्तामणिविद्रुमांश्च
गृहान् सुवर्णं रजतं च शुभ्रम् ।

1. घ—कोश एकस्मिन्नेवेदमर्धं वर्तते

[1]अयोमयं ताम्रमयं च भाण्डं
दद‍ौ द्विजातिप्रवरेषु रामः ॥ ३७

एवं स वित्तं प्रददौ महात्मा
सरस्वतीतीर्थगतेषु भूरि ।
ययौ क्रमेणाप्रतिमप्रभावस्
ततः कुरुक्षेत्रमुदारवृत्तः ॥ ३८

जनमेजयः—

सारस्वतानां तीर्थानां गुणोत्पत्तिं ब्रवीहि मे ।
फलं च द्विपदां श्रेष्ठ निवृत्तिमपि कर्मणाम् ॥ ३९

यथाक्रमं च भगवंस् तीर्थानामनुपूर्वशः ।
ब्रूहि ब्रह्मविदां श्रेष्ठ परं कौतूहलं हि मे ॥ ४०

वैशम्पायनः—

तीर्थानां विस्तरं राजन् गुणोत्पत्तिं च सर्वशः ।
मयोच्यमानां शृणु मे पुण्यां राजेन्द्र पावनीम् ॥ ४१

पूर्वं महाराज यदुप्रवीर
ऋत्विक्सुहृद्विप्रगणैश्च सार्धम् ।
पुण्यं प्रभासं समुपाजगाम
यत्रोडुराड्यक्ष्मणा क्लिश्यमानः ॥ ४२

---

1. क-ख—अयस्मयं

विमुक्तशापः पुनराप्ततेजास्
सर्वं जगद्भासयते नरेन्द्र ॥ ४२॥

एतत्तु तीर्थप्रवरं पृथिव्यां
प्रभासनात् तस्य ततः प्रभासः ॥* ४३

जनमेजयः—

किमर्थं भगवान् सोमो यक्ष्मणा पर्यगृह्यत ।
कथं च तीर्थप्रवरे तस्मिंश्चन्द्रो न्यमज्जत ॥ ४४

कथमाप्लुत्य तस्मिंश्च पुनराप्यायितश्शशी ।
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ॥ ४५

वैशम्पायनः—

दक्षस्य तनया राजन् प्रादुरासन् विशां पते ।
सप्तविंशत्तु ताः कन्यास् सोमाय प्रददौ प्रभुः ॥ ४६

नक्षत्रयोगनिरतास् सङ्ख्यानार्थं च भावयन् ।
पत्न्यस्तस्य तु राजेन्द्र सोमस्य शुभलक्षणाः ॥ ४७

तास्तु सर्वा विशालाक्ष्यो रूपेणाप्रतिमा भवन् ।
अत्यरिच्यत तासां तु रोहिणी रूपसम्पदा ॥ ४८

ततस्तस्यां स भगवान् प्रीतिं चक्रे निशाकरः ।
साऽस्य हृद्या बभूवाथ तस्मात्तां भजते सदा ॥ ४९

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

[1]शशी पुरा हि राजेन्द्र रोहिण्यामवसच्चिरम् ।
ततोऽस्मै कुपितान्यासन् नक्षत्राणि महात्मने ॥　　५०

ता गत्वा पितरं प्राहुः प्रजापतिमनिन्दिताः ॥　　५०॥

तारकाः—

सोमो वसति नास्मासु रोहिण्यां वसते सदा ॥　　५१

ता वयं सहितास्सर्वास् त्वत्सकाशं प्रजेश्वर ।
वत्स्यामो नियताहारास् तपश्चरणतत्पराः ॥　　५२

वैशम्पायनः—

श्रुत्वा तु वचनं तासां दक्षस्सोममथाब्रवीत् ॥　　५२॥

दक्षः—

[2]सोम वर्तस्व सर्वासु मा त्वाऽधर्मो महान् स्पृशेत् ॥　　५३

वैशम्पायनः—

तास्सर्वाश्चाब्रवीद्दक्षो गच्छध्वं सोममन्तिकम् ।
समं वत्स्यति सर्वासु चन्द्रमा मम शासनात् ॥　　५४

विसृष्टास्तास्तदा जग्मुश् शीतांशोर्भवनं तथा ॥　　५४॥

ततस्तु सोमो भगवान् पुनरेव महीपते ।
रोहिण्या सार्धमवसत् प्रीयमाणो मुहुर्मुहुः ॥　　५५॥

ततस्तास्सहितास्सर्वा भूयः पितरमब्रुवन् ॥　　५६

नक्षत्राणि—

सोमो वसति नास्मासु नाकरोद्वचनं तव ।

---

1. घ—इदमर्धं नास्ति　　2. क-ख—समं

तव शुश्रूषणे युक्ता वत्स्यामो हि तवाग्रतः ॥ ५७

वैशम्पायनः—

तासां तु वचनं श्रुत्वा दक्षस्सोममथाब्रवीत् ॥ ५७॥

दक्षः—

समं वर्तस्व सर्वासु मा स्म शप्स्ये ह चन्द्रमाः ॥ ५८

वैशम्पायनः—

अनादृत्य तु तद्वाक्यं दक्षस्य भगवान् शशी ।
रोहिण्या सार्धमवसत् ततस्ताः कुपिताः पुनः ॥ ५९

गत्वा च वचनं प्राहुश् शिरोभिः प्रणतास्तदा ॥ ५९॥

नक्षत्राणि—

सोमो वसति नास्मासु तस्मान्नश्शरणं भव ।
रोहिण्यामेव भगवान् सदा वसति चन्द्रमाः ॥ ६०॥

तस्मान्नस्त्राहि सर्वा वै यथा नस्सोम आविशेत् ॥ ६१

वैशम्पायनः—

तच्छ्रुत्वा भगवान् क्रुद्धो यक्ष्माणं पृथिवीपते ।
ससर्ज रोषात् सोमाय स चोडुपतिमाविशत् ॥ ६२

स यक्ष्मणाऽभिभूतस्सन् क्षीयतेऽहरहश्शशी ।
यत्नं चाप्यकरोद्राजन् मोक्षार्थं तस्य यक्ष्मणः ॥ ६३

इष्टेष्टिभिर्महाराज विचित्राभिर्निशाकरः ।
न चामुच्यत शापाद्वै क्षयं चैवाधिगच्छति ॥ ६४

क्षीयमाणे ततस्सोमे ओषध्यो न प्रजज्ञिरे ।
निरास्वादरसास्सर्वा हीनवीर्याश्च सर्वशः ॥ ६५

ओषधीनां क्षये जाते प्राणिनामपि सङ्क्षयः ।
कृशाश्चासन् प्रजास्सर्वाः क्षीयमाणे निशाकरे ॥ ६६

ततो देवास्समागम्य सोममूचुर्नराधिप ॥ ६६॥

देवाः—

किमिदं भवतो रूपम् ईदृशं सम्प्रकाशते ।
कारणं ब्रूहि नस्सर्वं येनेदं ते महद्भयम् ॥ ६७॥

श्रुत्वा तु कारणं त्वत्तो विधास्यामस्ततो वयम् ॥ ६८

वैशम्पायनः—

एवमुक्तः प्रत्युवाच सर्वांस्ताञ् शशलक्षणः ।
शापस्य कारणं चैव यक्ष्माणं च तथाऽऽत्मनः ॥ ६९

देवास्तस्य वचश्श्रुत्वा गत्वा दक्षमथाब्रुवन् ॥ ६९॥

देवाः—

प्रसीदतु भवान् सोमाच् छापश्चैव निवर्त्यताम् ।
असौ हि चन्द्रमाः क्षीणः किञ्चिच्छेषश्च लक्ष्यते ॥ ७०॥

क्षयं व्रजति शीतांशौ तत्प्रजा आगताः क्षयम् ।
वीरुदोषधयश्चैव बीजानि विविधानि च ॥ ७१॥

तथा वयं लोकगुरो प्रसादं कर्तुमर्हसि ॥ ७२

वैशम्पायनः—

एवमुक्तस्तु सञ्चिन्त्य प्राह वाक्यं प्रजापतिः ॥ ७२॥

दक्षः—

न तच्छक्यं मम वचो व्यावर्तयितुमञ्जसा ।
हेतुना तु महाभागा निवर्तिष्यति केनचित् ॥ ७३॥

समं वर्तेत सर्वासु शशी भार्यासु सर्वशः ।
अस्मिंस्तीर्थवरे चापि निमज्जेच्छशलक्षणः ॥ ७४॥

पुनर्वर्धिष्यते देवास् तद्वै सत्यं वचो मम ।
मासार्धं च क्षयं सोमो नित्यमेव गमिष्यति ॥ ७५॥

मासार्धं च पुनर्वृद्धिं सत्यमेवं ब्रवीमि वः ॥ ७६

तीर्थयात्रां ततस्सोमो जगाम ऋषिशासनात् ।
प्रभासं परमं तीर्थं सरस्वत्यां जगाम ह ॥ ७७

अमावास्यां महातेजास् तत्र मज्जन् महाद्युतिः ।
लोकान् प्रभासयामास शीतांशुत्वमवाप च ॥ ७८

देवाश्च सर्वे राजेन्द्र [1]प्रसादं प्राप्य पुष्कलम् ।
सोमेन सहिता भूत्वा दक्षस्य प्रमुखे स्थिताः ॥ ७९

ततः प्रजापतिर्देवो विससर्जाथ देवताः ।
सोमं च भगवान् भूयः प्रीतो वचनमब्रवीत् ॥ ८०

1. घ—प्रभासं

दक्षः—

माऽवमंस्थास्स्त्रियः पुत्र मा च विप्रान् कदाचन ।
गच्छ युक्तस्सदा भूत्वा कुरु त्वं शासनं मम ॥ ८१

वैशम्पायनः—

स विसृष्टो महातेजा जगामाथ स्वमालयम् ।
प्रजाश्च मुदिता भूत्वा ईजिरे च यथापुरम् ॥ ८२

एतत् ते सर्वमाख्यातं यथा शप्तो निशाकरः ।
प्रभासं च यथा तीर्थं तीर्थानां प्रवरं [1]ह्यभूत् ॥ ८३

अमावास्यां महाराज स नित्यं शशलक्षणः ।
स्नात्वा ह्याप्यायते श्रीमान् प्रभासे तीर्थसत्तमे ॥ ८४

अतश्चैनं प्रजानन्ति प्रभासमिति भूमिप ।
प्रभां हि परमां लेभे तस्मिन्नामज्य चन्द्रमाः ॥ ८५

लोकान् प्रभासयामास पुपोष च वपुस्तदा ॥ ८५॥

तत्र स्नात्वा हली रामो दत्वा प्रीतोऽथ दक्षिणाः ।
ततस्तु चमसोद्भेदम् अभीतस्त्वगमद्धली ॥ ८६॥

चमसोद्भेद इत्येव यं जनोऽकथयद्भुवि ॥ ८७

[2]तत्र दत्त्वा च दानानि विशिष्टानि हलायुधः ।
उषित्वा रजनीमेकां स्नात्वा च विधिवत् तदा ॥ ८८

---

1. ख-घ—महत्    2. अ—नास्तीदमर्धम्

उदपानमथागच्छत् त्वरावान् केशवाग्रजः ॥ ८८॥
आद्यं स्वस्त्ययनं चैव तत्रावाप्य महाबलः ।
स्निग्धत्वादोषधीनां च भूमेश्च जनमेजय ॥ ८९॥
जानन्ति सिद्धा मुनयो निगूढां तां सरस्वतीम् ॥ ९०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
॥ ७७ ॥ सारस्वतपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ९० श्लोकाः]

## ॥ एकत्रिंशोऽध्यायः ॥

एकतद्वितत्रितनामकानां विप्राणां कथा ॥

वैशम्पायनः—

तस्मान्नदीगतं चापि उदपानं [1]महात्मनः ।
त्रितस्य वै ततो राजन् जगामाथ हलायुधः ॥ १

तत्र दत्वा बहु द्रव्यं पूजयित्वा च वै द्विजान् ।
उपस्पृश्य तु तत्रैव प्रहृष्टो मुसलायुधः ॥ २

तत्र धर्मपरो ह्यासीत् त्रितस्तु सुमहातपाः ॥ २॥
कूपे वै वसताऽ[2]नेन सोमः पीतो महात्मना ॥ ३

1. ख—महामनाः 2. ख—तेन सोमः पीतो अ—प्रीतो

तत्र चैनं समुत्सृज्य भ्रातरौ जग्मतुर्गृहान् ।
ततस्तु तौ शशापाथ त्रितो ब्राह्मणपुङ्गवः ॥ ४

जनमेजयः—

उदपानं कथं ब्रह्मन् कथं च सुमहातपाः ।
पतितः किञ्च सन्त्यक्तो भ्रातृभ्यां द्विजसत्तम ॥ ५

कूपे कथं च हित्वैनं जग्मतुर्भ्रातरौ गृहान् ।
एतदाचक्ष्व मे ब्रह्मन् यदि श्राव्यं हि मन्यसे ॥ ६

वैशम्पायनः—

आसन् पूर्वयुगे राजन् मुनयो भ्रातरस्त्रयः ।
एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः ॥ ७

सर्वे प्रजापतिसमाः प्रजापतय एव च ।
ब्रह्मलोकजितास्सर्वे तपसा ब्रह्मवादिनः ॥ ८

तेषां तु तपसा प्रीतो नियमेन [1]यमेन च ।
अभवद्गौतमो नित्यं पिता धर्मरतस्सदा ॥ ९

[2]स तु दीर्घेण कालेन तेषां प्रीतिमवाप्य च ।
जगाम भगवान् स्थानम् अनुरूपमिवात्मनः ॥ १०

राजानस्तस्य ये चापि याज्या ह्यासन् महात्मनः ।
ते सर्वे स्वर्गते तस्मिंस् तस्य पुत्रानपूजयन् ॥ ११

---

1. ख-ब—दमेन च	2. ख—अर्धेलयं नास्ति

तेषां तु कर्मणा राजंस् तपसाऽध्ययनेन च ।
त्रितश्श्रेष्ठत्वमापेदे यथा चास्य पिता तथा ॥ १२

ते स्म सर्वे महाभागा मुनयः पुण्यलक्षणाः ।
अपूजयन् महाभागं तथा विद्वांस एव च ॥ १३

कदाचिद्धि ततो राजन् भ्रातरावेकतद्वितौ ।
यज्ञार्थं चक्रतुश्चिन्तां धनार्थं च विशेषतः ॥ १४

तयोश्चिन्ता समभवत् [1]तं प्रगृह्य परन्तप ॥ १४॥
याज्यान् सर्वानुपादाय परिगृह्य पशूंस्ततः ।
सोमं पास्यामहे हृष्टाः प्राप्य यज्ञं महाफलम् ॥ १५॥

चक्रुश्चैव तदा राजन् भ्रातरस्त्रय एव च ॥ १६

तथा हि ते परिक्रम्य याज्यान् सर्वान् पशून् प्रति ।
याजयित्वा ततो याज्याँल्लब्ध्वा च सुबहून् पशून् ॥ १७

याज्येन कर्मणा तेन प्रतिगृह्य विधानतः ।
प्राचीं दिशं महाराज आजग्मुस्ते महर्षयः ॥ १८

त्रितस्तेषां महाराज पुरस्ताद्याति हृष्टवत् ।
एकतश्च द्वितश्चैव [2]पृष्ठतः कालयन् पशून् ॥ १९

तयोश्चिन्ता समभवद् एकतस्य द्वितस्य च ।
कथं नु स्युरिमा गाव आवाभ्यां च त्रितं विना ॥ २०

---

1. क—त्रितं गृह्य 2. अ-ब—त्रितश्चा

तावन्योन्यं समाभाष्य एकतश्च द्वितश्च ह ।
यदूचतुर्मिथः पापौ तन्निबोध जनाधिप ॥ २१

एकतद्वितौ—

त्रितो यज्ञेषु कुशलस् त्रितो वेदेषु निष्ठितः ।
अन्यास्त्रितो बहुतरा गावस्समुपलप्स्यते ॥ २२

तेनावां सहितौ भूत्वा गाः प्रगृह्य प्रयावहे ।
त्रितोऽपि गच्छेत् तं कामं भ्रातृभ्यां वै विनाकृतः ॥ २३

वैशम्पायनः—

तेषामागच्छतां रात्रौ पथि स्थाने वृकोऽभवत् ।
तथा कूपोऽविदूरेऽभूत् सरस्वत्यास्तटीगतः ॥ २४

अथ त्रितो वृकं दृष्ट्वा पथि तिष्ठन्तमग्रतः ।
तद्भयादपसर्पन् वै तस्मिन् कूपे पपात ह ॥ २५

अगाधे सुमहाघोरे सर्वभूतभयङ्करे ॥ २५॥

त्रितस्ततो महाभागः कूपस्थो मुनिसत्तमः ।
आर्तनादं महच्चक्रे ततश्शुश्रुवतुर्मुनी ॥ २६॥

तं ज्ञात्वा पतितं कूपे भ्रातरावेकतद्वितौ ।
वृकत्रासाच्च लोभाच्च तमुत्सृज्य प्रजग्मतुः ॥ २७॥

भ्रातृभ्यां पशुलुब्धाभ्याम् उत्सृष्टस्सुमहातपाः ।
उदपाने तदा राजन् निर्जले पांसुसंवृते । २८॥

त्रित आत्मानमालक्ष्य वीरुत्पुञ्जतृणावृते ।
निमग्नो भरतश्रेष्ठ पापकृन्नरके यथा ॥ २९॥

ततोऽन्वचिन्तयत् प्राज्ञो मृतभूतोऽस्म्यसोमपाः ॥ ३०
सोमः कथं नु पातव्य इहस्थेन मया भवेत् ॥ ३०॥

स एवमभिसञ्चिन्त्य तस्मिन् कूपे महातपाः ।
[1]ऋचो यजूंषि सामानि मनसाऽचिन्तयन्मुनिः ॥ ३१॥

ददर्श वीरुधां जालं लम्बमानं यदृच्छया ॥ ३२

पांसुग्रस्ते ततः कूपे न्यखनत् सलिलं मुनिः ।
अग्निं सङ्कल्पयामास होतृनात्मानमेव हि ॥ ३३

ततस्तां वीरुधं सोमं सङ्कल्प्य सुमहातपाः ।
[2]ग्रावृणस्तु शर्कराः कृत्वा प्रचक्रेऽभिषवं मुनिः ॥ ३४

आज्यं च सलिलं चक्रे भागांश्च त्रिदिवौकसाम् ।
सोमस्याभिषवस्याग्रे प्रवृद्धस्तुमुलो ध्वनिः ॥ ३५

स चाविशद्दिवं राजन् स्वरश्चैव त्रितस्य वै ।
समवाप च तं यज्ञं यथोक्तं ब्रह्मवादिभिः ॥ ३६

वर्तमाने तथा यज्ञे त्रितस्य सुमहात्मनः ।
आविग्नं त्रिदिवं सर्वं कारणं न च बुध्यते ॥ ३७

---

1. क-ख—इदमर्धं नास्ति
2. क-ख-घ—ऋचो यजूंषि सामानि मनसा चिन्तयन्मुनिः ।
[अधिकः पाठः]

ततस्तु तुमुलं शब्दं शुश्राव स बृहस्पतिः ।
श्रुत्वैव चाब्रवीद्देवान् सर्वान् देवपुरोहितः ॥ ३८

बृहस्पतिः—

त्रितस्य वर्तते यज्ञस् तत्र गच्छामहे [1]सुराः ।
स हि क्रुद्धस्सृजेदन्यान् देवानपि महातपाः ॥ ३९

वैशम्पायनः—

तच्छ्रुत्वा वचनं तस्य सहितास्सर्वदेवताः ।
आययुस्तत्र यत्रास्ते त्रितो यज्ञश्च वर्तते ॥ ४०

ते तत्र गत्वा विबुधास् तं कूपं यत्र स त्रितः ।
ददृशुस्तं महात्मानं दीक्षितं यज्ञकर्मणि ॥ ४१

दृष्ट्वा चैनं महात्मानं श्रिया परमया युतम् ।
ऊचुश्चैनं महाराज प्राप्ता भागार्थिनो वयम् ॥ ४२

अथाब्रवीदृषिर्देवान् पश्यध्वं त्रिदिवौकसः ।
अस्मिन् प्रतिभये कूपे निमग्नं नष्टचेतसम् ॥ ४३

तत्र त्रितो महाराज भागांस्तेषां यथाविधि ।
मन्त्रयुक्तान् समाजह्रे तेन प्रीतास्ततोऽभवन् ॥ ४४

ततो यथाविधि प्राप्तान् भागान् प्राप्य दिवौकसः ।
प्रीतात्मानो ददुस्तस्मै वरान् यान् मनसेच्छति ॥ ४५

---

1. ख—वयम्

स तु वव्रे वरं देवांस् त्रातुमर्हथ मामितः ।
यश्चेहापस्स्पृशेत् कूपे स सोमपगतिं लभेत् ॥ ४६

तत्र चोर्मिमती राजन्नुत्पपात सरस्वती ।
तयोत्क्षिप्तस्त्रितस्तस्थौ पूजयंस्त्रिदिवौकसः ॥ ४७

तथेति चोक्त्वा विबुधा जग्मू राजन् यथागतम् ।
त्रितश्चाप्यगमत् प्रीतस् स्वमेव भवनं तदा ॥ ४८

क्रुद्धस्स तु समासाद्य तावृषी भ्रातरौ तदा ।
उवाच परुषं वाक्यं शशाप च परन्तप ॥ ४९

त्रितः—

पशुलुब्धौ युवां यस्मान्मामुत्सृज्य प्रधावितौ ।
तस्माद्रूपेण तासां वै दंष्ट्रिणामभितश्चरौ ॥ ५०

भवितारौ मया शप्तौ पापेनानेन कर्मणा ।
प्रसवश्चापि युवयोर् गोलाङ्गूलर्क्षवानराः ॥ ५१

वैशम्पायनः—

इत्युक्तेऽथ तदा तेन क्षणादेव विशां पते ।
तथाभूतावदृश्येतां वचनात् सत्यवादिनः ॥ ५२

तत्राप्यमितविक्रान्तस् स्पृष्ट्वा तोयं हलायुधः ।
दत्वा च विविधान् देयान् पूजयित्वा च वै द्विजान् ॥ ५३

उदपानं च तद्दृष्ट्वा प्रशस्य च पुनः पुनः ।
नदीगतममेयात्मा प्राप्तो विनशनं तदा ॥ ५४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ ७७ ॥ सारस्वतपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ५४ श्लोकाः ]

---

## ॥ द्वात्रिंशोऽध्यायः ॥



बलभद्रस्य सरस्वतीतीरस्थनानातीर्थयात्राप्रकारवर्णनम् ॥ १ ॥ तत्त-त्तीर्थमहिमानुवर्णनं च ॥ २ ॥

---

वैशम्पायनः—

ततो विनशनं राम आजगाम महाबलः ।
शूद्राभिर्द्विष्यमाणा या यत्र नष्टा सरस्वती ॥ १

[1]यस्मात् सा भरतश्रेष्ठ शूद्रद्वेष्या सरस्वती ।
तस्मात् तामृषयो नित्यम् आहुर्विनशनेति वै ॥ २

तत्राप्यतिक्रम्य बलस् सरस्वत्यां महाबलः ।
सुभूमिकं ततोऽगच्छत् सरस्वत्यास्तटं परम् ॥ ३

यत्र चाप्सरसश्शुभ्रास् सर्वकालमतन्द्रिताः ।
क्रीडाभिर्विविधाभिश्च क्रीडन्ति विमलाननाः ॥ ४

---

1. ख—इदमर्धं नास्ति

तत्र देवास्सगन्धर्वा मासि मासि जनेश्वर ।
अभिगच्छन्ति तत्तीर्थं पुण्यं ब्राह्मणसेवितम् ॥ ५

तत्र नृत्यन्ति गन्धर्वास् तथैवाप्सरसां गणाः ।
समेतास्सहिता राजन् यथाप्रातं यथासुखम् ॥ ६

तत्र मोदन्ति देवाश्च पितरश्च सवीरुधः ।
पुण्यैः पुष्पैस्सदा दिव्यैः कीर्यमाणैः पुनः पुनः ॥ ७

आक्रीडभूमिस्सा राजंस् तासामप्सरसां शुभा ।
सुभूमिकेति विख्याता सरस्वत्यास्तटे वने ॥ ८

तत्र स्नात्वा च दत्त्वा च वसु विप्रेषु माधवः ।
श्रुत्वा गीतं च तद्दिव्यं वादित्राणां च निस्वनम् ॥ ९

छायां च विपुलां दृष्ट्वा देवगन्धर्वरक्षसाम् ।
गन्धर्वाणां ततस्तीर्थम् अगमद्रोहीणीसुतः ॥ १०

विश्वावसुमुखास्तत्र गन्धर्वास्तपसाऽन्विताः ।
नृत्तवादित्रगीतं च प्राप्तवन्तो मनोरमम् ॥ ११

तत्र दत्वा हलधरो विप्रेभ्यो विविधं वसु ।
अजाविकं खरोष्ट्रं च सुवर्णं रजतं तथा ॥ १२

भोजयित्वा द्विजान् कामैस् सन्तर्प्य च महाधनैः ।
प्रययौ सहितो विप्रैस् स्तूयमानस्तु माधवः ॥ १३

तस्माद्गन्धर्वतीर्थाच्च महाबाहुररिन्दमः ।

गर्गस्रोतो महत्तीर्थम् आजगामैककुण्डलः ॥ १४

यत्र गर्गेण वृद्धेन तपसा भावितात्मना ।
कालज्ञानगतिश्चैव ज्योतिषां गतिरेव च ॥ १५

उत्पाता दारुणाश्चैव शुभाश्च जनमेजय ।
सरस्वत्याश्शुभे तीर्थे विहिताश्च महात्मना ॥ १६

तस्य नाम्ना च तत्तीर्थं गर्गस्रोत इति स्मृतम् ॥ १६॥
तत्र गर्गं महात्मानम् ऋषयस्सुव्रता नृप ।
उपासाञ्चक्रिरे नित्यं कालज्ञानगतिं प्रति ॥ १७॥

तत्र गत्वा महाराज बलश्श्वेतानुलेपनः ।
विधिवद्धि धनं प्रादान्मुनीनां भावितात्मनाम् ॥ १८॥

उच्चावचांस्तथा देयान् द्विजेभ्योऽभिप्रदाय च ।
नीलवासास्ततोऽगच्छच् छङ्खतीर्थं महायशाः ॥ १९॥

तत्रापश्यन्महाशङ्खं महापद्ममिवोत्थितम् ॥ २०

श्वेतपर्वतसङ्काशम् ऋषिसङ्घैर्निषेवितम् ।
सरस्वत्यास्तटे जातं नगं तालध्वजो बली ॥ २१

यक्षविद्याधराश्चैव राक्षसाश्च सहस्रशः ।
पिशाचाश्चामितबलास् तत्र सिद्धास्सहस्रशः ॥ २२

ते सर्वे ह्यशनं कृत्वा फलैस्तस्य वनस्पतेः ।
व्रतैश्च नियमैश्चैव काले काले स्म भुञ्जते ॥ २३

[1]अदृश्यमाना मनुजैर् व्यचरन् भरतर्षभ ॥ २३॥
एवं ख्यातो नरपते लोकेऽस्मिन् स वनस्पतिः ।
तत्र तीर्थं सरस्वत्याः पावनं लोकविश्रुतम् ॥ २४॥
तस्मिंश्च यदुशार्दूलो दत्वा तीर्थे यशस्विनाम् ।
ताम्रायसानि भाण्डानि वस्त्राण्याभरणानि च ॥ २५॥
पूजयित्वा द्विजांश्चैव पूजितश्च द्विजोत्तमैः ।
पुण्यं राजन्नाजगाम मुनितीर्थं महाबलः ॥ २६॥
[2]तत्र गत्वा मुनीन् दृष्ट्वा नानावेषधरान् बहून् ।
आप्लुत्य सलिले चापि पूजयामास वै द्विजान् ॥ २७॥
तथैव दत्त्वा विप्रेभ्यः परिभोगान् सुपुष्कलान् ।
ततः प्रायाद्बलो राजन् दक्षिणेन सरस्वतीम् ॥ २८॥
गत्वा चैनां महाबाहुर् नातिदूरे महाबलः ।
धर्मात्मा नागधन्वानं तीर्थं चागमदच्युतः ॥ २९॥
तत्तु पन्नगराजस्य वासुकेस्तन्निवेशनम् ।
महाद्युतेर्महाराज बहुभिः पन्नगैर्वृतम् ॥ ३०॥
तत्रासन् ऋषयस्सिद्धास् सहस्राणि चतुर्दश ॥ ३१
यत्र देवास्समासाद्य वासुकिं पन्नगोत्तमम् ।

---

1. क-ख-ब—व्रतैश्च नियमैस्तैस्तैः सुमहद्भिः पृथक् पृथक् ।
2. अ—पद्याधानि न सन्ति [अधिकः पाठः पुनरुक्तः]

सर्वपन्नगराजानम् अभ्यषिञ्चन् यथाविधि ॥ ३२
पन्नगेभ्यो भयं तत्र न च विद्येत भारत ॥ ३२॥

तत्रापि विधिवद्दत्त्वा विप्राणां वित्तसञ्चयान् ।
ययौ प्राचीं दिशं राजन् दीप्यमानस्स वीर्यवान् ॥ ३३॥

आप्लुत्य बहुशो हृष्टस् तेषु तीर्थेषु लाङ्गली ।
दत्त्वा वसु द्विजाग्र्येभ्यो निर्जगाम महाबलः ॥ ३४॥

तत्रस्थान् ऋषिसङ्घांस्तान् अभिवाद्य हलायुधः ।
ततो रामोऽगमत्तीर्थं ऋषिभिस्सेवितं महत् ॥ ३५॥

यत्र भूयो निववृते प्राङ्मुखा वै सरस्वती ।
ऋषीणां नैमिशीयानाम् अपेक्षार्थं महात्मनाम् ॥ ३६॥

निवृत्तां तां सरिच्छ्रेष्ठां तत्र गत्वा तु लाङ्गली ।
बभूव विस्मितो राजन् बलश्श्वेतानुलेपनः ॥ ३७॥

जनमेजयः—

कस्मात् सरस्वती ब्रह्मन् निवृत्ता प्राङ्मुखी तथा ।
आख्यातुमेतदिच्छामि सर्वमध्वर्युसत्तम ॥ ३८॥

कस्मिंश्च कारणे तत्र विस्मितो यदु[1]नन्दनः ।
निवृत्ता च सरिच्छ्रेष्ठा कथमेतद्द्विजोत्तम ॥ ३९॥

---

1. [illegible]

वैशम्पायनः—

पूर्वं कृतयुगे राजन् नैमिशेयास्तपोधनाः ।
वर्तमाने सुबहुले सत्रे द्वादशवार्षिके ॥ ४०॥

ऋषयो बह्वो राजंस् तत्र सम्प्रतिपेदिरे ।
उषित्वा च महाभागास् तत्र तीर्थे यथाविधि ॥ ४१॥

निर्वृत्ते नैमिशेये वै सत्रे द्वादशवार्षिके ।
आजग्मु रृषयस्तत्र बह्वस्तीर्थकारणात् ॥ ४२॥

ऋषीणां बहुलत्वात् तु सरस्वत्या विशां पते ।
तीर्थानि नगरायन्ते कूले वै दक्षिणोत्तरे ॥ ४३॥

समन्तपञ्चकं यावत् तावत्ते द्विजसत्तमाः ।
तीर्थलोभान्नरव्याघ्र नद्यास्तीरं समाश्रिताः ॥ ४४॥

[1]जुह्वतां तत्र तेषां तु मुनीनां भावितात्मनाम् ।
स्वाध्यायेनापि महता बभूवुः परितो दिशः ॥ ४५॥

अग्निहोत्रैस्ततस्तेषां हूयमानैर्महात्मनाम् ।
अशोभत सरिच्छ्रेष्ठा दीप्यमानैस्समन्ततः ॥ ४६॥

वालखिल्या महाराज अश्मकुट्टाश्च तापसाः ।
दन्तोलूखलिनश्चान्ये सम्प्रक्षालास्तथा परे ॥ ४७॥

वायुभक्षाः फलाहाराः पर्णभक्षाश्च तापसाः ।

---

1. क-घ—स्थितानां

नानानियमधर्माश्च तथाऽन्ये स्थण्डिलेशयाः ॥ ४८॥

अवसन् मुनयस्तत्र सरस्वत्यास्समीपतः ॥ ४९

व्यशोभयन् सरिच्छ्रेष्ठां गङ्गामिव दिवौकसः ॥ ४९॥

ततः पश्चात् समापेतुर् ऋषयस्सत्रयाजिनः ।
तेऽवकाशं च ददृशुः कुरुक्षेत्रे [1]महायशः ॥ ५०॥

ततो [2]यज्ञैः पवित्रैस्ते तत्र कृत्वा सरस्वतीम् ।
जुहुवुश्चाग्निहोत्राणि चक्रुश्च विविधाः क्रियाः ॥ ५१॥

ततस्तमृषिसङ्घातं निराशं चिन्तयाऽन्वितम् ।
दर्शयामास राजेन्द्र तेषामर्थे सरस्वती ॥ ५२॥

तत्र कुञ्जान् बहून् कृत्वा सन्निवृत्ता सरस्वती ।
ऋषीणां पुण्यतपसां [3]माननार्थं महात्मनाम् ॥ ५३॥

ततो निवृत्ता राजेन्द्र तेषामर्थे सरस्वती ।
भूयः प्रतीच्यभिमुखी सुस्राव सरितां वरा ॥ ५४॥

अमोघं गमनं कृत्वा तेषां भूयो जगाम ह ।
अत्यद्भुतं तदा चक्रे तत्र राजन् महानदी ॥ ५५॥

एवं स कुञ्जो राजेन्द्र नैमिशेय इति [4]स्मृतः ।

---

1. ख—महाव्रताः
2. अ-ध—यज्ञोपवीतै ख—यज्ञं व्यत्रर्थस्ते तत्तोर्थं निर्मिमीयते
3. ख—यतीनां भावितात्मनाम्
4. क—श्रुतिः

कुरुक्षेत्रे कुरुश्रेष्ठ कुरुष्व महतीः क्रियाः ॥ ५६॥

तत्र कुञ्जान् बहून् दृष्ट्वा सन्निवृत्तां च तां नदीम् ।
बभूव विस्मयस्तत्र रामस्याथ महात्मनः ॥ ५७॥

उपस्पृश्य च तत्रापि विधिवद्यदुनन्दनः ।
दत्त्वा देयान् द्विजातिभ्यो भाण्डानि विविधानि च ॥ ५८॥
भक्ष्यं पेयं च विविधं ब्राह्मणान् प्रत्यभोजयत् ॥ ५९

ततः प्रायाद्बलो राजन् पूज्यमानो द्विजातिभिः ।
सरस्वत्यास्तीर्थवरं नानाद्विजगणायुतम् ॥ ६०

बदरेङ्गुदकाश्मर्यप्लक्षाश्वत्थविभीतकैः ।
पनसैश्च पलाशैश्च [1]करवीरैश्च पीलुभिः ॥ ६१

सरस्वतीतीररुहैश् चन्दनैस्स्पन्दनैस्तथा ।
[2]शिरीषकवनैश्चैव बिल्वैरामलकैरपि ॥ ६२

अतिमुक्तकषण्डैश्च पारिजातैश्च शोभितम् ।
कदलीवनभूयिष्ठं दृष्टिकान्तं मनोहरम् ॥ ६३

वाय्वम्बुफलपर्णादैर् दन्तोलूखलिकैरपि ।
तथाऽश्मकुट्टैर्वा तोयैर् मुनिभिर्बहुभिर्वृतम् ॥ ६४

स्वाध्यायघोषैस्सङ्घुष्टं गजयूथशताकुलम् ।
अजस्रं धर्मपरमैर् नृभिरत्यन्तसेवितम् ॥ ६५

---

1. ख—शोभितं कदलीयुतम्   2. क-ख-ब—परूषक

सप्तसारस्वतं तीर्थम् आजगाम हलायुधः ॥ ६५॥

[1]यत्र मङ्कणकस्सिद्धस् तपस्तेपे महामुनिः ॥ ६६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ ७७ ॥ सारस्वतपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ६६ श्लोकाः]

---

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

---

सरस्वत्याः सप्तधा विभागे कारणाभिधानम् ॥ १ ॥ सप्तभागानां कस्मिंश्चित्तीर्थे एकीभवनात्तत्तीर्थस्य सप्तसारस्वतनामप्राप्तिः ॥ २ ॥ मङ्कणमुनिचरितप्रतिपादनम् ॥ ३ ॥

---

जनमेजयः—

सप्तसारस्वतं कस्मात् कश्च मङ्कणको मुनिः ।
कथं सिद्धस्स भगवान् कश्चास्य नियमोऽभवत् ॥ १

कस्य वंशे समुद्भूतः किं वाऽधीतं च वै द्विज ।
एतन्मे सर्वमाचक्ष्व यथावृत्तं महामुने ॥ २

वैशम्पायनः—

सप्त नद्यस्सरस्वत्यो याभिर्व्याप्तमिदं जगत् ।
आहूता बलवद्भिस्तु तत्र तत्र सरस्वती ॥ ३

---

1. ख—इदमर्धं नास्ति

सुप्रभा काञ्चनाक्षी च विशाला च मनोवृता ।
सरस्वत्योघमाला च सुवेणिर्विमलोदका ॥ ४

पितामहस्य महतो वर्तमाने महीपते ।
वितते यज्ञवाटे वै समेतेषु द्विजातिषु ॥ ५

पुण्याहघोषैर्विमलैर् वेदानां निनदैस्तथा ।
देवेषु चैव व्यग्रेषु तस्मिन् यज्ञविधौ ततः ॥ ६

तत्र चैवं महाराज दीक्षिते प्रपितामहे ।
यजतस्तत्र सत्रेण सर्वकामसमृद्धिना ॥ ७

मनसा चिन्तिता ह्यर्था धर्मार्थकुशलैस्तदा ।
उपतिष्ठन्ति राजेन्द्र द्विजातींस्तत्र तत्र ह ॥ ८

जगुश्च तत्र गन्धर्वा ननृतुश्चाप्सरोगणाः ।
प्रावाद्यन्त च तूर्याणि विचित्राणि विचक्षणैः ॥ ९

तस्य यज्ञस्य सम्पत्त्या तुष्टुवुर्दैवतान्यपि ।
विस्मयं च परं जग्मुस् सर्वे मानुषयोनयः ॥ १०

वर्तमाने तथा यज्ञे पुष्करस्थे पितामहे ।
अब्रुवन्नृषयो राजन् नायं यज्ञो महाफलः ॥ ११

न दृश्यते सरिच्छ्रेष्ठा यस्मादिह सरस्वती ॥ ११॥
[1]तच्छ्रुत्वा भगवान् प्रीतस् सस्माराथ सरस्वतीम् ॥ १२

---

1. ब—अर्धचतुष्टयं नास्ति

पितामहेन यजता आहूता पुष्करेषु वै ।
सुप्रभा नाम राजेन्द्र नाम्ना तत्र सरस्वती ॥　　१३

तां दृष्ट्वा मुनयस्तुष्टा वेगयुक्तां सरस्वतीम् ।
[1-2]पितामहं मानयन्तीं क्रतुं तं मेनिरे बहु ॥　　१४

एवमेषा सरिच्छ्रेष्ठा पुष्करेषु सरस्वती ।
पितामहार्थं सम्भूता तुष्ट्यर्थं च मनीषिणाम् ॥　　१५

नैमिशे मुनयो राजन् समासाद्य समासते ।
तत्र चित्राः कथा ह्यासन् वेदं प्रति जनेश्वर ॥　　१६

नैमिशे मुनयो राजन् नानास्वाध्यायवादिनः ।
ते समागम्य मुनयस् सस्मरुर्वै सरस्वतीम् ॥　　१७

सा तु ध्याता महाराज मुनिभि[3]स्सत्यवादिभिः ।
समागतानां राजेन्द्र साहाय्यार्थं महात्मनाम् ॥　　१८

आजगाम महाभागा तत्र पुण्या सरस्वती ॥　　१८॥

नैमिशे काञ्चनाक्षी तु मुनीनां भावितात्मनाम् ।
आहूता सरितां श्रेष्ठा तत्र भारत पूजिता ॥　　१९॥

गयस्य यजमानस्य गयेष्वेव महाक्रतुम् ।
आहूता सरितां श्रेष्ठा तत्र तेन सरस्वती ॥　　२०॥

---

1. अ—सद्यार्धानि न सन्ति
2. घ—इदमर्धद्वयं नास्ति
3. क-ख-घ—सत्रयाजिभिः

विशालां तु गयेष्वाहुर् मुनयस्संशितव्रताः ।
सरित् सा हिमवत्पार्श्वात् प्रसूता शीघ्रगामिनी ॥ २१॥

[1]औद्दालकेस्तथा यज्ञं यजतस्तत्र भारत ।
समेते सर्वतस्स्फीते मुनीनां मण्डले तथा ॥ २२॥

उत्तरे कोसले भागे पुण्ये राजन् महात्मना ।
औद्दालकेन यजता पूर्वं ध्याता सरस्वती ॥ २३॥

आजगाम सरिच्छ्रेष्ठा तं देशं मुनिकारणात् ।
पूज्यमाना मुनिगणैर् वल्कलाजिनसंवृतैः ॥ २४॥

मनोवृतेति विख्याता सा हि तैर्मनसा वृता ॥ २५

[2]कुरोस्तु यजमानस्य कुरुक्षेत्रे महात्मनः ।
आजगाम महाभागा सरिच्छ्रेष्ठा सरस्वती ॥ २६

ओघवत्यपि राजर्षे वसिष्ठेन महात्मना ।
समाहूता कुरुक्षेत्रे दिव्यतोया सरस्वती ॥ २७

दक्षेण यजता चैव गङ्गातीरे सरस्वती ।
सुवेणिरिति विख्याता प्रस्नुता शीघ्रगामिनी ॥ २८

विमलोदा भगवती ब्रह्मणा यजता पुनः ।
समाहूता ययौ तत्र पुण्ये हैमवते गिरौ ॥ २९

---

1. अ—त्रयोदशार्धानि न सन्ति
2. ख—सुवेणुरभवद्वीयं पुण्ये राजर्षिसेविते । [अधिकः पाठः]

एकीभूतास्ततस्तास्तु तस्मिंस्तीर्थे समागताः ॥ २९॥
सप्तसारस्वतं तीर्थं ततस्तत् प्रथितं भुवि ॥ ३०

इति सप्त सरस्वत्यो नामतः परिकीर्तिताः ।
सप्तसारस्वतं चैव तीर्थं पुण्यतमं स्मृतम् ॥ ३१

शृणु मङ्कणकस्यापि कौमारब्रह्मचारिणः ।
आपगामवगाढस्य राजन् प्रक्रीडितं महत् ॥ ३२

दृष्ट्वा यदृच्छया तत्र स्त्रियमम्भसि भारत ।
स्नायन्तीं रुचिराकारां दिग्वाससमनिन्दिताम् ॥ ३३

सरस्वत्यां महाराज चस्कन्दे रेत अम्भसि ॥ ३३॥

तद्रेतस्स तु जग्राह कलशेन महातपाः ।
ऋषिः परमधर्मात्मा तदा पुरुषसत्तमः ॥ ३४॥

सप्तधा प्रविभक्तं तत् कलशस्थं जगाम ह ।
तत्रर्षयस्सप्त जाता जज्ञुरेभ्यो मरुद्गणाः ॥ ३५॥

वायुवेगो वायुबलो वायुहा वायुमण्डलः ।
वायुजालो वायुरेता वायुचक्रश्च वीर्यवान् ॥ ३६॥
एवमेते समुत्पन्ना मरुतां भावयिष्णवः ॥ ३७

इदमन्यच्च राजेन्द्र शृण्वाश्चर्यतमं भुवि ।
महर्षेश्चरितं यादृक् त्रिषु लोकेषु विश्रुतम् ॥ ३८

पुरा मङ्कणकस्सिद्धः कुशाग्रेणेति विश्रुतः ॥ ३८॥

क्षतः किल करे राजंस् तस्य शाकरसोऽस्रवत् ।
तं वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान् ॥ ३९॥

ततस्तस्मिन् प्रनृत्ते वै स्थावरं जङ्गमं च यत् ।
प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् ॥ ४०॥

ब्रह्मादिभिस्सुरै राजन् ऋषिभिश्च तपोधनैः ।
विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप ॥ ४१॥

नायं नृत्येद्यथा देव तथा त्वं कर्तुमर्हसि ॥ ४२

ततो देवो मुनिं दृष्ट्वा हर्षाविष्टमतीव ह ।
सुराणां हितकामार्थं तं शिवः प्रत्यभाषत ॥ ४३

शिवः—

हर्षाद्ब्राह्मण धर्मज्ञ किमर्थं त्वं प्रनृत्यसि ।
हर्षस्थानं किमर्थं वा तवेदं मुनिसत्तम ॥ ४४

मङ्कणः—

किं न पश्यसि मे देव कराच्छाकरसं स्रुतम् ।
यं दृष्ट्वा वै प्रनृत्तोऽहं हर्षेण महता विभो ॥ ४५

वैशम्पायनः—

ततस्तमब्रवीद्देवो मुनिं रागेण मोहितम् ॥ ४५॥

शिवः—

अहं वै विस्मयं विप्र न गच्छामीह पश्य माम् ॥ ४६

वैशम्पायनः—

एवमुक्त्वा मुनिश्रेष्ठं महादेवेन धीमता ।
अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितो भृशम् ॥ ४७

ततो भस्मक्षताद्राजन् निर्गतं हिमसन्निभम् ।
तद्दृष्ट्वा व्रीडितो राजन् स मुनिः पादयोर्नतः ॥ ४८

मङ्कणकः—

नान्यं देवमहं मन्ये रुद्रात् परतरं महत् ।
सुरासुरेषु जगतो गतिस्त्वमसि शूलधृक् ॥ ४९

त्वया सृष्टमिदं सर्वं वदन्तीह मनीषिणः ।
त्वामेव सर्वं व्रजति पुनरेव युगक्षये ॥ ५०

देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ।
त्वयि सर्वेश दृश्यन्ते सुरा ब्रह्मादयोऽनघ ॥ ५१

सर्वस्त्वमसि देवानां कर्ता कारयिता च ह ।
त्वत्प्रसादात् सुरास्सर्वे मोदन्ते ह्यकुतोभयाः ॥ ५२

[1]त्वं प्रभुः परमैश्वर्याद् अधिकं भासि शङ्कर ।
त्वयि ब्रह्मा च शक्रश्च लोकान् सन्धार्य तिष्ठतः ॥ ५३

त्वन्मूलं च जगत् सर्वं त्वदन्तं च महेश्वर ।
त्वया हि वितता लोकास् सप्तेमे सर्वसम्भव ॥ ५४
सर्वथा सर्वभूतेश त्वामेवार्चन्ति देवताः ॥ ५४॥

1. ख—त्रयोदश अर्धानि न सन्ति

त्वन्मयं हि जगत् सर्वं भूतं स्थावरजङ्गमम् ॥ ५५

स्वर्गं च परमं स्थानं नृणामभ्युदयार्थिनाम् ।
ददासि च प्रसन्नस्त्वं भक्तानां परमेश्वर ॥ ५६

अनावृत्तिपदं नृणां नित्यं निश्रेयसार्थिनाम् ।
ददासि कर्मिणां कर्म भावयन् ध्यानयोगतः ॥ ५७

न वृथाऽस्ति महादेव प्रसादस्ते महेश्वर ।
[1]यस्मात् त्वयोपकरणात् करोमि कमलेक्षण ॥ ५८

प्रपद्ये शरणं शम्भुं सर्वदा सर्वतस्स्थितम् ॥ ५८॥

कर्मणा मनसा वाचा तमेवाभिजगाम ह ॥ ५९

वैशम्पायनः—

एवं स्तुत्वा महादेवम् ऋषिस्स प्रणतोऽब्रवीत् ॥ ५९॥

मङ्कणः—

भगवन् त्वत्प्रसादाद्धि तपो मे न क्षरेदिति ॥ ६०

वैशम्पायनः—

ततो देवः प्रीयमाणस् तमृषिं पुनरब्रवीत् ॥ ६०॥

शिवः—

तपस्ते वर्धतां विप्र मत्प्रसादात् सहस्रधा ।
आश्रमे चेह वत्स्यामि त्वया सार्धमहं सदा ॥ ६१॥

सप्तसारस्वते चास्मिन्नर्चयिष्यन्ति ये नराः ।

1. अ-ख—नास्तीदमर्धम्

तेषां न दुर्लभं किञ्चिद् भवितेह परत्र च ॥ ६२॥
सारस्वतं च लोकं ते गमिष्यन्ति न संशयः ॥ ६३

एवं मङ्कणकस्यापि चरितं भूरितेजसः ।
स पुत्रस्सहजन्यायाम् उत्पन्नो मातरिश्वना ॥ ६४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ७७ ॥ सारस्वतपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ६४ श्लोकाः]

---

## ॥ चतुस्त्रिंशोऽध्यायः ॥

बलरामस्य औशनसतीर्थगमनम् ॥ १ ॥ तत्तीर्थस्य कपालमोचनना-
मप्राप्तिहेतूक्तिः ॥ २ ॥ बलेन उशङ्ग्वाश्रमगमनम् ॥ ३ ॥ उशङ्गुचरित्रकथ-
नम् ॥ ४ ॥ बलदेवेन पृथूदकतीर्थे स्नानदानादि ॥ ५ ॥

---

वैशम्पायनः—

उषित्वा तत्र रामस्तु सम्पूज्याश्रमवासिनः ।
तदा मङ्कणके प्रीतिं परां चक्रे हलायुधः ॥ १

दत्त्वा दानं द्विजातिभ्यो रजनीं तामुपोष्य च ।
पूजितो मुनिभिश्चैव प्रातरुत्थाय लाङ्गली ॥ २

अनुज्ञाप्य मुनीन् सर्वान् स्पृष्ट्वा तोयं च भारत ।
प्रययौ त्वरितं रामस् तीर्थहेतोर्महाबलः ॥ ३

[1]तत औशनसं तीर्थम् आजगाम हलायुधः ॥ ३॥

कपालमोचनं नाम यत्र मुक्तो महामुनिः ।
महता शिरसा राजन् ग्रस्तजङ्घो महोदरः ॥ ४॥

राक्षसस्य महाराज रामक्षिप्तस्य वै पुरा ।
तत्र पूर्वं तपस्तप्तं काव्येन सुमहात्मना ॥ ५॥

यत्रास्य नीतिर्निखिला प्रादुर्भूता महात्मनः ।
तत्र सञ्चिन्तयामास देवदानवविग्रहम् ॥ ६॥

तत् प्राप्य च बलो राजन् तीर्थप्रवरमुत्तमम् ।
विधिवद्धि ददौ वित्तं ब्राह्मणानां महात्मनाम् ॥ ७॥

जनमेजयः—

कपालमोचनं ब्रह्मन् कथं प्राप्तो महामुनिः ।
कथं चास्य शिरो लग्नं केन चैव तु हेतुना ॥ ८॥

वैशम्पायनः—

पुरा वै दण्डकारण्ये राघवेण महात्मना ।
वसता राजशार्दूल राक्षसास्तत्र हिंसिताः ॥ ९॥

जनस्थाने शिरश्छिन्नं राक्षसस्य दुरात्मनः ।
क्षुरेण शितधारेण तत् पपात महावने ॥ १०॥

महोदरस्य तल्लग्नं जङ्घायां वै यदृच्छया ।

---

1. अ—नास्तीदमर्धम्

वने विचरतो राजन्नस्थि भित्त्वाऽस्फुरत् तदा ॥    ११॥

स तेन लग्नेन तदा द्विजातिर्न शशाक ह ।
अभिगन्तुं महाप्राज्ञ तीर्थान्यायतनानि च ॥    १२॥

स पूतिना विस्रवता वेदनार्तो महामुनिः ।
जगाम सर्वतीर्थानि पृथिव्यामिति नश्श्रुतम् ॥    १३॥

स गत्वा सरितस्सर्वास् समुद्रांश्च महातपाः ।
कथयामास तत् सर्वम् ऋषीणां भावितात्मनाम् ॥    १४॥

आप्लुतस्सर्वतीर्थेषु न च मोक्षमवाप्तवान् ।
स तु शुश्राव विप्रेन्द्रो मुनीनां वचनं महत् ॥    १५॥

सरस्वत्यां तीर्थवरं ख्यातमौशनसं तथा ।
सर्वपापप्रशमनं सिद्धिक्षेत्रमनुत्तमम् ॥    १६॥

स तु गत्वा ततस्तत्र तीर्थमौशनसं द्विजः ।
ततश्चौसनसं तीर्थं तस्योपस्पृशतस्तदा ॥    १७॥

तच्छिरश्चरणं मुक्त्वा पपातान्तर्जले ततः ॥    १८

ततस्स नीरुजो राजन् महात्मा वीतकल्मषः ।
आजगामाश्रमं प्रीतः कृतकृत्यो महोदरः ॥    १९

सोऽथ गत्वाऽश्रमं पुण्यं विप्रमुक्तो महातपाः ।
कथयामास तत् सर्वं ऋषीणां भावितात्मनाम् ॥    २०

तच्छ्रुत्वा वचनं तस्य तदा तीर्थस्य मानद ।
कपालमोचनमिति नाम चक्रुस्समागताः ॥ २१

तत्र दत्वा बहून् देयान् विप्रान् सम्पूज्य [1]सादरम् ।
जगाम तत्र राजेन्द्र उशङ्गोराश्रमं प्रति ॥ २२

यत्र तप्तं तपो घोरम् आर्ष्टिषेणेन भारत ।
ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रो महातपाः ॥ २३

ततो हलायुधश्श्रीमान् ब्राह्मणैः परिवारितः ।
जगाम तत्र राजेन्द्र उशङ्गुस्तनुमत्यजत् ॥ २४

उशङ्गुर्ब्राह्मणो वृद्धस् तपोनित्यश्च भारत ।
देहन्यासे कृतमना विचिन्त्य बहुधा नृप ॥ २५

ततस्सर्वानुपादाय तनयान् वै महातपाः ।
उशङ्गुरब्रवीत् तत्र नयध्वं मां पृथूदकम् ॥ २६

विज्ञायातीतवयसम् उशङ्गुं तं तपोधनाः ।
तद्वै तीर्थमुपानिन्युस् सरस्वत्यास्तपोधनम् ॥ २७

स तैः पुत्रैस्तदा धीमान् आनीतो वै सरस्वतीम् ।
पुण्यां तीर्थशतोपेतां विद्वत्सङ्घैर्निषेविताम् ॥ २८

स तत्र विधिना राजन्नाप्लुत्य सुमहातपाः ।
ज्ञात्वा तीर्थगुणं चैव प्राहेदं मुनिसत्तमः ॥ २९

1. क—सादरः ख-ध—माधवः

सुप्रीतः पुरुषव्याघ्रस् सर्वान् पुत्रानिदं वचः ॥ २९॥

उशङ्कुः—

सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम् ।

पृथूदके जप्यपरो नैनं श्वो मरणं तपेत् ॥ ३०॥

वैशम्पायनः—

तत्राप्लुत्य स धर्मात्मा उपस्पृश्य हलायुधः ।

दत्त्वा चैव बहून् देयान् विप्राणां विप्रवत्सलः ॥ ३१॥

ससर्ज यत्र भगवान् ब्रह्मा लोकपितामहः ॥ ३२

यत्रार्ष्टिषेणः कौरव्य ब्राह्मणस्संशितव्रतः ।

तपसा महता राजन् प्राप्तवान् सिद्धिमुत्तमाम् ॥ ३३

सिन्धुद्वीपं च सम्प्राप्य देवापिश्च महातपाः ।

ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रो महातपाः ॥ ३४

तपस्वी भगवानुग्र उरुतेजा महायशाः ॥ ३४॥

तत्राजगाम बलवान् बलदेवः प्रतापवान् ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां

शल्यपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ ७७ ॥ सारस्वतपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[अस्मिन्नध्याये ३५ श्लोकाः]

## ॥ पञ्चत्रिंशोऽध्यायः ॥

आर्ष्टिषेणेन पृथूदकतीर्थे तपश्चर्यया कृत्स्नवेदाधिगमः ॥ १ ॥ विश्वामित्रादीनां तत्तत्तीर्थे तपश्चर्यया ब्राह्मण्याधिगमः ॥ २ ॥ बलभद्रेण तत्र स्नानादिपूर्वकं बकाश्रमं प्रति गमनम् ॥ ३ ॥

जनमेजयः—

आर्ष्टिषेणः कथं ब्रह्मन् विपुलं तप्तवांस्तपः ।
सिन्धुद्वीपः कथं चापि ब्राह्मण्यँल्लब्धवान् पुरा ॥ १
देवापिश्च कथं राजन् विश्वामित्रश्च सत्तमः ॥ १॥
तन्ममाचक्ष्व भगवन् परं कौतूहलं हि मे ॥ २

वैशम्पायनः—

पुरा कृतयुगे राजन्नार्ष्टिषेणो द्विजोत्तमः ।
वसन् गुरुकुले नित्यं नियमाध्ययने रतः ॥ ३
तस्य राजन् गुरुकुले वसतो नित्यमेव हि ।
समाप्तिं नागमन् विद्या नापि वेदा विशां पते ॥ ४
स निर्विण्णस्ततो राजंस् तपस्तेपे महातपाः ॥ ४॥
ततो वै तपसा तेन प्राप्य वेदाननुत्तमान् ।
स विद्वान् वेदसंयुक्तस् सिद्धश्चाप्यृषिसत्तमः ॥ ५॥
तत्र तीर्थे वरान् प्रादात् त्रीनेव सुमहातपाः ॥ ६

आर्ष्टिषेणः—

अस्मिंस्तीर्थे महानद्या अद्यप्रभृति मानवः ।
आप्लुतो वाजपेयस्य फलं प्राप्नोति पुष्कलम् ॥ ७

अद्यप्रभृति व्यालेभ्यो न भयं भविता पुनः ।
अपि चाल्पेन यत्नेन तपः प्राप्स्यति पुष्कलम् ॥ ८

वैशम्पायनः—

एवमुक्त्वा महातेजा जगाम त्रिदिवं मुनिः ।
एवं स सिद्धो भगवान् आर्ष्टिषेणः प्रतापवान् ॥ ९

तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान् ।
देवापिश्च महाराज ब्राह्मण्यं प्रापतुर्महत् ॥ १०

तथा कुशिकदायादस् तपोनित्यो जितेन्द्रियः ।
तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान् ॥ ११

गाधिर्नाम महानासीत् क्षत्रियप्रवरो भुवि ।
यस्य पुत्रस्त्वभूद्राजन् विश्वामित्रः प्रतापवान् ॥ १२

स राजा कौशिकस्तात महायोग्यभवत् किल ।
स पुत्रमभिषिच्यैव विश्वामित्रं महातपाः ॥ १३

[1]देहन्यासे मनश्चक्रे तमूचुः प्रणताः प्रजाः ॥ १३॥

प्रजाः—

न गन्तव्यं महाप्राज्ञ त्राहि चास्मान्महाभयात् ॥ १४

1. अ—पञ्चार्धानि न सन्ति

वैशम्पायनः—

एवमुक्तः प्रत्युवाच ततो गाधिः प्रजास्ततः ॥ १४॥

गाधिः—

कृत्स्नस्य जगतो गोप्ता भविष्यति सुतो मम ॥ १५

वैशम्पायनः—

इत्युक्त्वाऽथ ततो गाधिर् विश्वामित्रं निवेश्य च ।
जगाम स तदा राजा पथि वै पुण्यकर्मणाम् ॥ १६

तदा गाधिसुतो राजा विश्वामित्रोऽप्यभून्नृपः ।
न च शक्नोति पृथिवीं यत्नवानपि रक्षितुम् ॥ १७

ततश्शुश्राव राजाऽसौ राक्षसेभ्यो महद् भयम् ।
निर्ययौ नगराच्चापि चतुरङ्गबलान्वितः ॥ १८

स गत्वा दूरमध्वानं वसिष्ठाश्रममभ्ययात् ।
ततस्ते सैनिका राजञ् जघ्नुस्तत्र बहून् मृगान् ॥ १९

ततस्तु भगवान् विप्रो वसिष्ठस्तु स्व आश्रमे ।
ददृशे तु ततस्सर्वं वध्यमानं महावनम् ॥ २०

तस्य क्रुद्धो महाराज वसिष्ठो मुनिसत्तमः ।
विसृजस्व बलं घोरम् इति स्वां गामुवाच ह ॥ २१

तथोक्ता साऽसृजद्धेनुः पुरुषान् घोरदर्शनान् ।
ते च तद्बलमासाद्य बभञ्जुस्सर्वतोदिशम् ॥ २२

तद्दृष्ट्वा विद्रुतं सैन्यं विश्वामित्रस्तु गाधिजः ।
तपः परं मन्यमानस् तपस्येव मनो दधे ॥　　२३

सोऽस्मिंस्तीर्थवरे राजन् सरस्वत्यां समाहितः ।
नियमैश्चोपवासैश्च क्षपयन् देहमात्मनः ॥　　२४

जलाहारो वायुभक्षः पर्णाहारश्च सोऽभवत् ।
ततस्स्थण्डिलशायी च ये चान्ये नियमाः पृथक् ॥　　२५

असकृत्तस्य देवाश्च व्रतविघ्नं प्रचक्रिरे ।
न तस्य नियमाद्बुद्धिर् अपयाति महात्मनः ॥　　२६

ततः परेण यत्नेन तप्त्वा बहुविधं तपः ।
तेजसा भास्कराकारो गाधिजस्समपद्यत ॥　　२७

[1]घृणया तु तदा युक्तो विश्वामित्रं पितामहः ।
अमन्यत महातेजा वरदोऽदर्शयत् तदा ॥　　२८

स तु वव्रे वरं राजन् स्यामहं ब्राह्मणस्त्विति ।
तथेति चाब्रवीद्ब्रह्मा सर्वलोकपितामहः ॥　　२९

स लब्ध्वा तपसोग्रेण ब्राह्मण्यं सुमहायशाः ।
विचचार महीं कृत्स्नां कृतकामस्सुरोत्तमैः ॥　　३०

तस्मिंस्तीर्थवरे रामः प्रदाय विविधं वसु ।
[2]पयस्विनीस्तथा धेनूर् यानानि विविधानि च ॥　　३१

---

1. ख—तृष्णया तु समायुक्तं　　2. अ—अर्धेतयं नास्ति

तथा वस्त्राण्यलङ्कारं भक्ष्यं पेयं च शोभनम् ।
अददान्मुदितो राजन् पूजयित्वा द्विजोत्तमान् ॥ ३२

ययौ राजंस्ततो रामो बकस्याश्रममन्तिकात् ।
यत्र तेपे तपस्तीव्रं बको दाल्भ्य इति श्रुतिः ॥ ३३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ ७७ ॥ सारस्वतपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये ३३ श्लोकाः ]

## ॥ षट्त्रिंशोऽध्यायः ॥

बलदेवस्यावाकीर्णतीर्थगमनम् ॥ १ ॥ बकमुनिचरित्रकथनम् ॥ २ ॥
बलदेवस्य ततो वसिष्ठापवाहतीर्थगमनम् ॥ ३ ॥

वैशम्पायनः—

ब्रह्मयोनिभिराकीर्णो जगाम यदुनन्दनः ।
यत्र दाल्भ्यो बको राजन् पश्वर्थं सुमहातपाः ॥ १

जुहाव धृतराष्ट्रस्य राष्ट्रं कोपसमन्वितः ॥ १॥

तपसा घोररूपेण कर्शयन् देहमात्मनः ।
क्रोधेन महताऽऽविष्टो धर्मात्मा वै प्रतापवान् ॥ २॥

पुरा हि नैमिशेयानां सत्रे द्वादशवार्षिके ।

वृत्ते वैश्वजिते चैव पाञ्चालानृषयोऽगमन् ॥　　३॥

तत्रेश्वरमयाचन्त दक्षिणार्थे मनीषिणः ।
[1]तत्र ते लेभिरे राजन् पाञ्चालेभ्यो महर्षयः ॥　　४॥

बलान्वितान् वत्सतरान् निर्व्याधीन् सप्तविंशतिम् ॥　　५

तानब्रवीद्बको विप्रो विभजध्वं पशूनिति ॥　　५॥

पशूनेतानहं त्यक्त्वा भिक्षिष्ये राजसत्तमम् ॥　　६

एवमुक्त्वा बको राजन्नृपीन् सर्वान् प्रतापवान् ।
जगाम धृतराष्ट्रस्य भवनं ब्राह्मणोत्तमः ॥　　७

स समीपं गतो भूत्वा धृतराष्ट्रं नरेश्वरम् ।
अयाचत पशून् दाल्भ्यस् स चैनं रुषितोऽब्रवीत् ॥　　८

यदृच्छया मृता दृष्ट्वा गास्तदा नृपसत्तम ।

धृतराष्ट्रः—

एतान् पशून् नय क्षिप्रं ब्रह्मबन्धो यदिच्छसि ॥　　९

वैशम्पायनः—

ऋषिस्त्वथ बकः क्रुद्धश् चिन्तयामास धर्मवित् ।

बकः—

अहो बत नृशंसं वै वाक्यमुक्तोऽस्मि संसदि ॥　　१०

वैशम्पायनः—

चिन्तयित्वा मुहूर्तेन रोषाविष्टो द्विजोत्तमः ।
मतिं चक्रे विनाशाय धृतराष्ट्रस्य भारत ॥　　११

---

1. ख—इदमर्धं नास्ति

[1]उत्कृत्य तु मृता गा वै मांसानि द्विजसत्तमः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेः परम् ॥ १२

अवतीर्णस्सरस्वत्यास् तीर्थे प्रज्वाल्य पावकम् ।
बको दाल्भ्यो महाराज परमं नियमं स्थितः ॥ १३
स तैरेव जुहावाग्नौ राष्ट्रं मांसैर्महातपाः ॥ १३॥

तस्मिंस्तु विधिवत् सत्रे वर्तमाने सुदारुणे ।
अक्षीयत ततो राष्ट्रं धृतराष्ट्रस्य पार्थिव ॥ १४॥

छिद्यमानं यथा कान्तं वनं परशुना तथा ।
बभूवापहृतं तच्च व्यवकीर्णमचेतनम् ॥ १५॥

दृष्ट्वा तदवकीर्णं तु राज्यं स मनुजाधिपः ।
बभूव दुर्मना राजंश् चिन्तयामास च प्रभुः ॥ १६॥

मोक्षार्थमकरोद्यत्नं ब्राह्मणैस्सहितः पुरा ।
अथासौ पार्थिवः खिन्नस् ते च विप्रास्तदा नृप ॥ १७॥

यदा चापि न शक्नोति राष्ट्रं मोचयितुं नृपः ।
अथ [2]विप्रश्निकांस्तत्र पप्रच्छ जनमेजय ॥ १८॥

ततो [3]विप्रश्निकाः प्राहुः पशोर्विप्रकृतस्त्वया ।
मांसैरथ जुहोतीदं तव राष्ट्रं मुनिर्बकः ॥ १९॥

---

1. अ—अर्धसप्तकं नास्ति 2. क-घ—विप्रादिकांस्तत्र
3. क-घ—विप्रादिकाः प्राहुः पशो

तेन ते हूयमानस्य राष्ट्रस्यासीत् क्षयो महान् ।
तस्य तत्तपसः कर्म येन ते ह्यनयो महान् ॥　　२०॥

यदीच्छसि महाबाहो शान्तिं राष्ट्रस्य भूमिप ।
अपां कूले सरस्वत्यास् तं प्रसादय पार्थिव ॥　　२१॥

सरस्वतीं ततो गत्वा स राजा वकमब्रवीत् ।
निपत्य शिरसा भूमौ प्राञ्जलिर्भरतर्षभ ॥　　२२॥

राजा—

प्रसादये त्वां भगवन्नपराधं क्षमस्व मे ।
मम दीनस्य लुब्धस्य मौर्ख्येण हतचेतसः ॥　　२३॥

त्वं गतिस्त्वं च मे नाथः प्रसादं कर्तुमर्हसि ॥　　२४

वैशम्पायनः—

तं तथा विलपन्तं तु शोकोपहतचेतसम् ।
दृष्ट्वा तस्य कृपा जज्ञे राष्ट्रं तस्य व्यमोचयत् ॥　　२५

ऋषिः प्रसन्नस्तस्यासीत् संरम्भं च विहाय सः ।
मोक्षार्थं तस्य राष्ट्रस्य जुहाव पुनराहुतिम् ॥　　२६

मोक्षयित्वा तदा राष्ट्रं प्रतिगृह्य तथा पशून् ।
हृष्टात्मा नैमिशारण्यं जगाम पुनरेव ह ॥　　२७

धृतराष्ट्रोऽपि धर्मात्मा स्वस्थचेता महामनाः ।
स्वमेव नगरं राजन् प्रविवेश महर्द्धिमत् ॥　　२८

तत्र तीर्थे महाराज बृहस्पतिरुदारधीः ।
असुराणामभावाय [1]भवाय च दिवौकसाम् ॥ २९

मांसैरभिजुहावेष्टिम् अक्षीयन्त ततोऽसुराः ।
दैवतैरभिसम्भग्ना जितकाशिभिराहवे ॥ ३०

तत्रापि विधिवद्दत्त्वा ब्राह्मणेभ्यो महायशाः ।
वाजिनः कुञ्जरांश्चैव रथांश्चाश्वतरीस्तथा ॥ ३१

रत्नानि च महाराज धनं धान्यं च पुष्कलम् ।
ययौ तीर्थं महाराज यायातं पृथिवीपते ॥ ३२

तत्र यज्ञे ययातेस्तु महाराज सरस्वती ।
[2]सर्पिः पयश्च सुस्राव नाहुषस्य महात्मनः ॥ ३३

यत्रेष्ट्वा पुरुषव्याघ्र ययातिः पृथिवीपतिः ।
आक्रामदूर्ध्वं त्वरितो लेभे कामांश्च पुष्कलान् ॥ ३४

ययातेर्यजमानस्य यत्र राजन् सरस्वती ।
सघृता प्रययौ राजन् ब्राह्मणानां महात्मनाम् ॥ ३५

यत्र यत्र हि यो विप्रो यान् यान् कामानभीप्सति ।
तत्र तत्र सरिच्छ्रेष्ठा ससर्ज सुबहून् रसान् ॥ ३६

तत्र देवास्सगन्धर्वाः प्रीता यज्ञस्य सम्पदा ।
विस्मिता मानुषा ह्यासन् दृष्ट्वा तां यज्ञसम्पदम् ॥ ३७

1. घ—जयाय ख—भावाय
2. घ—प्रसृता प्रददौ कामान् ब्राह्मणानां महात्मनाम् । [अधिकः पाठः]

ततस्तालकेतुर्महाधर्मसेतुर्
महात्मा कृतात्मा महादाननित्यः ।
वसिष्ठापवाहं महाभीमवेगं
धृतात्मा जितात्मा समभ्याजगाम ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ ७७ ॥ सारस्वतपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

## ॥ सप्तत्रिंशोऽध्यायः ॥



वसिष्ठापवाहतीर्थस्य तन्नामप्राप्तिप्रकारकथनम् ॥

जनमेजयः—

[1]वसिष्ठापवाहो ब्रह्मन् वै भीमवेगः कथं नु सः ।
किमर्थं च सरिच्छ्रेष्ठा तमृषिं प्रत्यवाहयत् ॥ १

केन चाप्यभवद्वैरं कारणं किं च तत् प्रभो ।
वद पृष्टो महाप्राज्ञ न हि तृप्यामि ते वचः ॥ २

वैशम्पायनः—

विश्वामित्रस्य चैवर्षेर् वसिष्ठस्य च भारत ।

1. ख—वसिष्ठस्यापवाहो वै भीमवेगः प्रतापवान् । [ पाठान्तरम् ]

भृशं वैरमभूद्राजंस् तपस्स्पर्धाकृतं महत् ॥ ३

आश्रमो वै वसिष्ठस्य स्थाणुतीर्थेऽभवन्महान् ।
पूर्वतः पश्चिमश्चासीद् विश्वामित्रस्य धीमतः ॥ ४

तत्र स्थाणुर्महाराज तप्तवान् सुमहत् तपः ।
यत्रास्य कर्म तद्घोरं प्रवदन्ति मनीषिणः ॥ ५

यत्रेष्ट्वा भगवान् स्थाणुः पूजयित्वा सरस्वतीम् ।
स्थापयामास तत्तीर्थं स्थाणुतीर्थमिति प्रभुः ॥ ६

यत्र सर्वे सुरास्स्कन्दम् अभ्यषिञ्चन् नराधिप ।
सैनापत्येन तं स्कन्दं सुरारिविनिबर्हणम् ॥ ७

तस्मिन् सारस्वते तीर्थे विश्वामित्रो महातपाः ।
वसिष्ठं चालयामास तपसोग्रेण तच्छृणु ॥ ८

विश्वामित्रवसिष्ठौ तावहन्यहनि भारत ।
स्पर्धां तपोन्वितां तीव्रां चक्रतुस्तौ तपोधनौ ॥ ९

तत्राप्यधिकसन्तप्तो विश्वामित्रो महामुनिः ।
दृष्ट्वा तेजो वसिष्ठस्य चिन्तामभिजगाम ह ॥ १०

तस्य बुद्धिरियं चासीद् धर्मनित्यस्य भारत ॥ १०॥

विश्वामित्रः—

इयं सरस्वती तूर्णं मत्समीपं तपोधनम् ॥
आनयिष्यति वेगेन जपन्तं जपतां वरम् ॥ ११॥

इहागतं द्विजश्रेष्ठं हनिष्यामि न संशयः ॥　　१२

वैशम्पायनः—

एवं निश्चित्य मनसा विश्वामित्रो महामुनिः ।
सस्मार सरितां श्रेष्ठां क्रोधसंरक्तलोचनः ॥　　१३

सा ध्याता मुनिना तेन व्याकुलत्वं जगाम ह ।
गत्वा चैव महावीर्यं महाकोपं च भामिनी ॥　　१४

तदा तं वेपमानाङ्गी विवर्णा प्राञ्जलिर्भृशम् ।
उपतस्थे मुनिवरं विश्वामित्रं सरस्वती ॥　　१५

हतवीरा यथा नारी दुःखिता साऽभवद्भृशम् ।
ब्रूहि किं करवाणीति प्रोवाच मुनिसत्तमम् ॥　　१६

तामुवाच ततः क्रुद्धो वसिष्ठं शीघ्रमानय ।
यावदेनं निहन्म्यद्य तच्छ्रुत्वा व्यथिता नदी ॥　　१७

साऽञ्जलिं तु तदा कृत्वा पुण्डरीकनिभेक्षणा ।
विव्यथे सुविरूढेव लता वायुसमीरिता ॥　　१८

तथागतां तु तां दृष्ट्वा वेपमानां कृताञ्जलिम् ।
विश्वामित्रोऽब्रवीत् क्रुद्धो वसिष्ठं शीघ्रमानय ॥　　१९

ततो भीता सरिच्छ्रेष्ठा चिन्तयामास भारत ।
उभयोश्शापभीता सा कथमेतद्भविष्यति ॥　　२०

साऽभिगम्य वसिष्ठं त इममर्थमचोदयत ।

यदुक्ता सरितां श्रेष्ठा विश्वामित्रेण धीमता ॥ २१

[1]उभयोश्शापयोर्भीता वेपमाना पुनः पुनः ।
चिन्तयित्वा महाशापम् ऋषिभ्यां त्रासिता भृशम् ॥ २२

तां कृशां च विवर्णां च दृष्ट्वा चिन्तासमन्विताम् ।
उवाच राजन् धर्मात्मा वसिष्ठस्सुमहातपाः ॥ २३

वसिष्ठः—

त्राह्यात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनी ।
विश्वामित्रश्शपेद्धि त्वां मा कृथास्त्वं विचारणाम् ॥ २४

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा कृपाशीलस्य वै सरित् ।
चिन्तयामास कौरव्य किं कृत्वा सुकृतं भवेत् ॥ २५

तस्याश्चिन्ता समुत्पन्ना वसिष्ठो मय्यतीव हि ।
कृतवान् हि दयां नित्यं तस्य कार्यं हितं मया ॥ २६

अथ कूले स्वके राजञ् जपन्तमृषिसत्तमम् ।
[2]जुह्वानं कौशिकं दृष्ट्वा सरस्वत्यभ्यचिन्तयत् ॥ २७

इदमन्तरमित्येव ततस्सा सरितां वरा ॥
कूलापहारमकरोत् स्वेन वेगेन भारत ॥ २८

कूलापहारिणा तेन मैत्रावरुणिरौह्यत ।
उह्यमानश्च तुष्टाव तदा राजन् सरस्वतीम् ॥ २९

---

1. अ—नास्तीदमर्धम् 2. अ—अर्धद्वयं नास्ति

वसिष्ठः—

पितामहस्य सरसः प्रवृत्ताऽसि सरस्वति ।
व्याप्तं चेदं जगत् सर्वं तवैवाम्भोभिरुत्तमैः ॥ ३०

त्वमेवाकाशगा देवि मेघेषूत्सृजसे पयः ।
सर्वाश्चापस्त्वमेवेति यथा वयमधीमहे ॥ ३१

बुद्धिः पुष्टिस्तथा कीर्तिस् सिद्धिर्वृद्धिर्यथा तथा ।
त्वमेव वाणी त्वं स्वाहा त्वय्यायत्तमिदं जगत् ॥ ३२
त्वमेव सर्वभूतेषु वससीह चतुर्विधा ॥ ३२॥

वैशम्पायनः—

एवं सरस्वती राजन् स्तुता तेन महात्मना ।
वेगेनोवाह तं विप्रं विश्वामित्राश्रमं प्रति ॥ ३३॥

न्यवेदयत चाभीक्ष्णं विश्वामित्राय तं मुनिम् ॥ ३४

तमानीतं सरस्वत्या दृष्ट्वा कोपसमन्वितः ।
अथान्वेषत् प्रहरणं वसिष्ठान्तकरं तदा ॥ ३५

तं च क्रुद्धमभिप्रेक्ष्य ब्रह्महत्याभयान्नदी ।
अपोवाह वसिष्ठं तु प्राचीं दिशमतन्द्रिता ॥ ३६
उभयोः कुर्वती वाक्यं वञ्चयित्वा च गाधिजम् ॥ ३६॥

ततोऽपवाहितं दृष्ट्वा वसिष्ठमृषिसत्तमम् ।
अब्रवीदथ सङ्क्रुद्धो विश्वामित्रस्सरस्वतीम् ॥ ३७॥

विश्वामित्रः—

यस्मात् त्वं सरितां श्रेष्ठे वञ्चयित्वा पुनर्गता ।
शोणितं वह कल्याणि राक्षसानां च सम्मतम् ॥ ३८॥

वैशम्पायनः—

ततस्सरस्वती शप्ता विश्वामित्रेण धीमता ।
अवहच्छोणितोन्मिश्रं तोयं संवत्सरं तदा ॥ ३९॥

अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तदा ।
सरस्वतीं तथा दृष्ट्वा बभूवुर्भृशदुःखिताः ॥ ४०॥

एवं वसिष्ठोऽपहृतश् शीघ्राद्यातो जनाधिप ।
आगच्छच्च ततो मार्गं स्वमेव सरितां वरा ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ ७७ ॥ सारस्वतपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये ४१॥ श्लोकाः]

## ॥ अष्टात्रिंशोऽध्यायः ॥

विश्वामित्रशापाद्रुधिरजलायाः सरस्वत्या ऋषिभिस्तपसा शोधनम् ॥ १ ॥ इन्द्रेण सरस्वत्यरुणासङ्गमे यजनादिना ब्रह्महत्यापरिहरणम् ॥ २ ॥ बलरामस्य तत्र स्नानादिपूर्वकं तस्मात्सोमतीर्थंगमनम् ॥ ३ ॥

वैशम्पायनः—

सा शप्ता तेन क्रुद्धेन विश्वामित्रेण धीमता ।
तस्मिंस्तीर्थवरे शुभ्रे शोणितं समुपावहत् ॥　　१

अथाजग्मुस्ततो राजन् राक्षसास्तत्र तत्र ह ।
ततस्ते शोणितं सर्वे पिबन्तस्समुपासते ॥　　२

तृप्ताश्च सुभृशं तेन सुखिनो विगतज्वराः ।
नृत्यन्तश्च हसन्तश्च यथा स्वर्गजितो नराः ॥　　३

कस्यचित्त्वथ कालस्य ऋषयस्सुतपोधनाः ।
तीर्थयात्रां समाजग्मुस् सरस्वत्यां महीपते ॥　　४

तेषु सर्वेषु तीर्थेषु आप्लुत्य मुनिपुङ्गवाः ।
प्राप्य प्रीतिं परां चापि तपोलुब्धा विशारदाः ॥　　५
प्रययुर्हि ततो राजन् येन तीर्थं तु तत् तदा ॥　　५॥

अथागम्य महाभागास् तत्तीर्थं दारुणं प्रभो ।
दृष्ट्वा तोयं सरस्वत्याश् शोणितेन समुत्थितम् ॥　　६॥

पीयमानं च रक्षोभिर् बहुभी राजसत्तम ॥ ७

तान् दृष्ट्वा राक्षसान् राजन् मुनयस्संशितव्रताः ।
परित्राणे सरस्वत्याः परं यत्नं प्रचक्रिरे ॥ ८

ते तु सर्वे महाभागास् समागम्य महाव्रताः ।
आहूय सरितां श्रेष्ठाम् इदं वचनमब्रुवन् ॥ ९

ऋषयः—

कारणं ब्रूहि कल्याणि किमर्थं ते ह्रदो ह्ययम् ।
एवमप्राह्यतां यातश् श्रुत्वा ध्यास्यामहे वयम् ॥ १०

वैशम्पायनः—

ततस्सा सर्वमाचष्ट यथावृत्तं प्रवेपती ।
दुःखितामथ तां दृष्ट्वा त ऊचुर्वै तपोधनाः ॥ ११

ऋषयः—

कारणं श्रुतमस्माभिश् शापश्चैव श्रुतोऽनघे ।
करिष्यामस्तु यत् प्राप्तं सर्व एव तपोधनाः ॥ १२

वैशम्पायनः—

एवमुक्त्वा सरिच्छ्रेष्ठाम् ऊचुस्तेऽथ परस्परम् ॥ १२॥

ऋषयः—

विमोक्ष्यामहे सर्वे शापादेनां सरस्वतीम्[1] ॥ १३
प्रसन्नसलिला भूस्त्वं यथा पूर्वं तथैव हि ॥ १३॥

---

1. ख—इति संमन्त्र्य मुनयो यदि स्म चरितव्रताः ।
न शापो भविताऽप्येष इति तैरीरिते ततः । [अधिकः पाठः]

वैशम्पायनः—

[1]एवमुक्त्वा तु मुनयो दुःखाच्चैनां व्यमोचयन् ॥ १४

विमुक्ता सरितां श्रेष्ठा विबभौ सा यथा पुरा ॥ १४॥

दृष्ट्वा तोयं सरस्वत्या मुनिभिस्तैस्तथा कृतम् ।
कृताञ्जलिपुटा राजन् शिरोभिः प्रणिपत्य च ॥ १५॥

ऊचुस्तान् वै मुनीन् सर्वान् कृपायुक्तान् पुनः पुनः ॥ १६

राक्षसाः—

वयं तु क्षुधिताश्चैव धर्माद्धीनाश्च शाश्वतात् ।
न च नः कामकारोऽयं यद्वयं पापकारिणः ॥ १७

युष्माकं [2]च प्रकोपेन दुष्कृतेन च कर्मणा ।
पक्षोऽयं वर्धतेऽस्माकं यथास्युर्ब्रह्मराक्षसाः ॥ १८

एवं हि वैश्यशूद्राणां क्षत्रियाणां तथैव च ।
ये ब्राह्मणान् विद्विषन्ति ते भवन्ति हि राक्षसाः ॥ १९

आचार्यानृत्विजश्चैव गुरून् वृद्धजनांस्तथा ।
येऽवमन्यन्ति पुरुषास् ते भवन्तीह राक्षसाः ॥ २०

योषितां चैव पापानां योनिदोषेण वर्धते ।
यक्षोऽस्माकं ऋषिश्रेष्ठा यदत्रानन्तरं क्षमम् ॥ २१

तत् कुरुध्वमिहास्माकं तारणं द्विजसत्तमाः ।

1. ख—इदमर्धं नास्ति  2. क-ख—चाप्रसादेन

शक्ता भवन्तस्सर्वेऽपि लोकानामपि तारणे ॥ २२

वैशम्पायनः—

तेभ्योऽपि ऋषयश्श्रुत्वा तुष्टुवुस्तां महानदीम् ।
मोक्षार्थं रक्षसां तेषाम् ऊचुः प्रयतमानसाः ॥ २३

ऋषयः—

क्षुतकीटावपन्नं च यच्चोच्छिष्टाश्रितं भवेत् ।
केशावपन्नमाधूतम् आरुग्णमपि चैव यत् ॥ २४

श्वभिस्संसृष्टमन्नं तु भागास्ते रक्षसामिह ।
तस्माज्ज्ञात्वा सदा विद्वान् एतान्यन्नानि वर्जयेत् ॥ २४॥

राक्षसान्नं स भुङ्क्ते हि यो भुङ्क्ते ह्यन्नमीदृशम् ॥ २५

वैशम्पायनः—

शोधयित्वा ततस्तीर्थम् ऋषयस्ते तपोधनाः ।
मोक्षार्थं रक्षसां तेषां नदीं तां सम्प्रसादयन् ॥ २६

महर्षीणां मतं ज्ञात्वा ततस्सा सरितां वरा ।
अरुणामानयामास स्वां तनुं भरतर्षभ ॥ २७

तस्यां ते राक्षसास्स्नातास् तनुं त्यक्त्वा दिवं गताः ।
अरुणायां महाराज ब्रह्म[1]वध्यापहा हि सा ॥ २८

एतमर्थमतो ज्ञात्वा देवदेवश्शतक्रतुः ।
तस्मिंस्तीर्थवरे स्नात्वा विमुक्तः पाप्मना किल ॥ २९

1. क-ख-घ—हत्यापहा हि सा

जनमेजयः—

किमर्थं भगवाञ् शक्रो ब्रह्महत्यामवाप्तवान् ।
कथमस्मिंश्च तीर्थे स आप्लुत्याकल्मषोऽभवत् ॥ ३०

वैशम्पायनः—

शृणुष्वैतदुपाख्यानं यथावृत्तं पुरातनम् ।
यदा विभेद समयं नमुचेर्वासवः पुरा ॥ ३१

नमुचिर्वासवाद्भीतस् सूर्यरश्मिं समाविशत् ।
तेनेन्द्रस्सख्यमकरोत् समयं चेदमब्रवीत् ॥ ३२

इन्द्रः—

नार्द्रेण त्वां न शुष्केण न रात्रौ न दिवाऽपि वा ।
वधिष्याम्यसुरश्रेष्ठ सखे सत्येन ते शपे ॥ ३३

वैशम्पायनः—

एवं स कृत्वा समयं स्पृष्ट्वा नीहारमीश्वरः ।
चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः ॥ ३४

तच्छिरो नमुचेश्छिन्नं पृष्ठतश्शक्रमन्वियात् ।
हे मित्रहन् पाप इति ब्रुवाणं शक्रमन्तिकात् ॥ ३५

एवं स शिरसा तेन चोद्यमानः पुनः पुनः ।
पितामहाय सन्तप्त एतमर्थं न्यवेदयत् ॥ ३६

तमब्रवील्लोकगुरुर् अरुणायां यथाविधि ।
इष्ट्वोपस्पृश देवेन्द्र ब्रह्महत्यापहा हि सा ॥ ३७

इत्युक्तस्स सरस्वत्यां गुह्यायां जनमेजय ।
इष्ट्वा यथावद्वलभिद् अरुणायामुपस्पृशत् ॥ ३८

स मुक्तः पाप्मना तेन ब्रह्महत्याकृतेन तु ।
जगाम संहृष्टमनास् त्रिदिवं त्रिदिवेश्वरः ॥ ३९

शिरस्तच्चापि नमुचेस् तत्रैवाप्लुत्य भारत ।
लोकान् कामदुघान् प्राप्तम् अक्षयान् राजसत्तम ॥ ४०

तत्राप्युपस्पृश्य तदा महात्मा
दत्त्वा च दानानि पृथग्विधानि ।
अवाप्य धर्मं परमार्यकर्मा
जगाम सोमस्य महत् स तीर्थम् ॥ ४१

यत्रायजद्राजसूयेन सोमस्
साक्षात् पुरा विधिवत् पार्थिवेन्द्र ।
अत्रिर्धीमान् ब्रह्मपुत्रो बभूव
होता यस्मिन् क्रतुमुख्ये महात्मा ॥ ४२

यस्यान्तेऽभूत् सुमहान् दानवानां
दैतेयानां राक्षसानां च देवैः ।
स सङ्ग्रामस्तारकाख्यस्सुतीव्रो
यत्र स्कन्दस्तारकं वै जघान ॥ ४३

सैनापत्यं लब्धवान् देवतानां
महासेनस्त्वन्तकर्ताऽसुराणाम् ।
साक्षाच्चात्र न्यवसत् कार्तिकेयस्
सदा कुमारो यत्र ररक्ष राजन् ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
॥ ७७ ॥ सारस्वतपर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

## ॥ एकोनचत्वारिंशोऽध्यायः ॥



कुमारोत्पत्तिवर्णनम् ॥

जनमेजयः—

सरस्वत्याः प्रभावोऽयम् उक्तस्ते द्विजसत्तम ।
कुमारस्याभिषेकं तु ब्रह्मन्नाख्यातुमर्हसि ॥ १

यस्मिन् काले च देशे च यथा च वदतां वर ।
यैश्चाभिषिक्तो भगवान् विधिना येन च प्रभुः ॥ २

स्कन्दो यथा च दैत्यानाम् अकरोत् कदनं महत् ।
तथा सर्वं त्वमाचक्ष्व परं कौतूहलं हि मे ॥ ३

वैशम्पायनः—

कुरुवंशस्य सदृशम् इदं कौतूहलं तव ।

हर्षमुत्पादयत्येतद् वचो मे जनमेजय ॥ ४

अहं तत् कथयिष्यामि शृण्वतस्ते जनाधिप ।
अभिषेकं कुमारस्य प्रभावं च महात्मनः ॥ ५.

तेजो माहेश्वरं स्कन्नम् अग्नौ प्रणिहितं पुरा ।
तत् सर्वं भगवानग्निर् नाशकद्धर्तुमक्षयम् ॥ ६.

तेन सीदति तेजस्वी दीप्तिमान् हव्यवाहनः ।
न चैनं धारयामास ब्रह्मणे चोक्तवान् प्रभुः ॥ ७.

स गङ्गामुपसङ्क्रम्य नियोगाद्ब्रह्मणः प्रभुः ।
गर्भमाहितवान् दिव्यं भास्करोपमतेजसम् ॥ ८

अथ गङ्गाऽपि तं गर्भम् असहन्ती च धारणे ।
उत्ससर्ज गिरौ तस्मिन् हिमवत्यमरार्चिते ॥ ९.

स तत्र ववृधे लोकान् आवृत्य ज्वलनात्मजः ।
ददृशुर्ज्वलनाकारं तं गर्भमथ कृत्तिकाः ॥ १०

शरस्तम्बे महात्मानम् अनलात्मजमीश्वरम् ।
ममायमिति सर्वास्ताः पुत्रार्थिन्यो विचुक्रुशुः ॥ ११

तासां विदित्वा भावं तं मातृणां भगवान् प्रभुः ।
प्रस्नुतानां पयषड्भिर् आननैरपिबत् तदा ॥ १२.

तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः ।

[1]परं विस्मयमापन्ना देव्यो दिव्यवपुर्धराः ॥ १३

यत्रोत्सृष्टश्च गर्भस्स गङ्गया गिरिमूर्धनि ।
स शैलः काञ्चनस्सर्वस् सम्बभौ मेरुरुत्तमः ॥ १४

वर्धता चैव गर्भेण पृथिवी तेन रञ्जिता ।
अतश्च सर्वे संवृत्ता गिरयः काञ्चनात्मकाः ॥ १५

[2]कुमारस्तु महावीर्यः कार्तिकेय इति स्मृतः ।
गाङ्गेयः पूर्वमभवन्महाकायो बलान्वितः ॥ १६

स देवस्तपसा चैव वीर्येण च समन्वितः ।
ववृधेऽतीव राजेन्द्र चन्द्रवत् प्रियदर्शनः ॥ १७

स तस्मिन् काञ्चने दिव्ये शरस्तम्बे श्रिया वृतः ।
स्तूयमानस्तदा शेते गन्धर्वैर्मुनिभिस्तथा ॥ १८

तथैनमुपनृत्यन्ति देवकन्यास्सहस्रशः ।
दिव्यवादित्रनृत्तज्ञास् स्तुवन्त्यश्चारुदर्शनाः ॥ १९

अन्वयुश्चाग्नयस्सर्वे गङ्गा च सरितां वरा ।
दधार पृथिवी चैनं बिभ्रती रूपमुत्तमम् ॥ २०

जातकर्मादिकास्तस्य क्रियाश्चक्रे बृहस्पतिः ।
वेदैश्चैनं चतुर्मूर्तिर् उपतस्थे कृताञ्जलिः ॥ २१

---

1. ब—कुमारस्तु महावीर्यः कार्तिकेय इति स्मृतः । [अधिकः पाठः]
2. ब—इदमर्धं नास्ति

धनुर्वेदश्चतुष्पादस् सास्त्रग्रामस्ससङ्ग्रहः ।
तत्रैनं समुपातिष्ठत् साक्षाद्वाणी च केवला ॥ २२

स ददर्श महात्मानं देवदेवमुमापतिम् ।
शैलपुत्र्या समागम्य भूतसङ्घैस्समावृतः ॥ २३

निकाया भूतसङ्घानां परमाद्भुतदर्शनाः ।
[1]विकृता विकृताकारा विकृताभरणध्वजाः ॥ २४

व्याघ्रसिंहर्क्षवदना बिडालमकराननाः ।
पृषदंशमुखाश्चान्ये खरोष्ट्रवदनास्तथा ॥ २५

उलूकवदनाः केचिद् गृध्रगोमायुदर्शनाः ।
क्रौञ्चपारावतनिभैर् वदनैर्भैरवैरपि ॥ २६

श्वाविच्छल्यकगोधानां खरैडकगवामपि ।
सदृशानि वपूंष्यन्ये तत्र तत्र व्यधारयन् ॥ २७

केचिच्छैलाम्बुदप्रख्याश् चक्रालातगदायुधाः ।
केचिदञ्जनपुञ्जाभाः केचिच्छ्वेताचलप्रभाः ॥ २८

सप्तमातृगणाश्चापि समाजग्मुर्विशां पते ।
साध्या विश्वेऽथ वसवो मरुतः पितरस्तथा ॥ २९

रुद्रादित्यास्तथा यक्षा भुजगा दानवाः खगाः ।
ब्रह्मा स्वयम्भूर्भगवान् सपुत्रस्सह विष्णुना ॥ ३०

---

1. अ-ब—अर्धचतुष्टयं नास्ति

शक्रस्तथाऽभ्ययाद्द्रष्टुं कुमारममितप्रभम् ।
नारदप्रमुखाश्चैव देवगन्धर्वसत्तमाः ॥ ३१

देवर्षयश्च सिद्धाश्च बृहस्पतिपुरोगमाः ।
ऋभवो नाम वरदा देवानामपि देवताः ॥ ३२
तेऽपि तत्र समाजग्मुर् व्योमयानास्सहस्रशः ॥ ३२॥

स तु बालोऽपि भगवान् महायोगबलान्वितः ।
अभ्याजगाम देवेशं शूलहस्तं पिनाकिनम् ॥ ३३॥
तमाव्रजन्तमालोक्य शिवस्यासीन्मनोगतम् ॥ ३४

युगपच्छैलपुत्र्याश्च गङ्गायाः पावकस्य च ।
कं नु पूर्वमयं बालो गौरवादभ्युपैति च ॥ ३५
अपि मामिति सर्वेषां तेषामासीन्मनोगतम् ॥ ३५॥

तेषामेवमभिप्रायं चतुर्णामुपलक्ष्य सः ।
युगपद्योगमास्थाय ससर्ज विविधास्तनूः ॥ ३६॥
ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान् प्रभुः ।
स्कन्दश्शाखो विशाखश्च नैगमेषश्च पृष्ठतः ॥ ३७॥
एवं कृत्वा स चात्मानं कुमारो भगवान् प्रभुः ।
यतो रुद्रस्ततस्स्कन्दो जगामाद्भुतदर्शनः ॥ ३८॥
विशाखस्तु ततो देवीं ययौ गिरिवरात्मजाम् ।

शाखो ययौ च भगवान् दिव्यमूर्तिर्विभावसुम् ॥ ३९॥
नैगमेषोऽगमद्गङ्गां कुमारः पावकप्रभः ॥ ४०
सर्वे भास्वरदेहास्ते चत्वारस्समरूपिणः ।
तान् समभ्ययुरव्यग्रास् तदद्भुतमिवाभवत् ॥ ४१
हाहाकारो महानासीद् देवदानवरक्षसाम् ।
दृष्ट्वा तन्महदाश्चर्यम् अद्भुतं रोमहर्षणम् ॥ ४२
ततो रुद्रश्च देवी च पावकश्च पितामहम् ।
गङ्गया सहितास्सर्वे प्रणिपेतुर्जगत्पतिम् ॥ ४३
प्रणिपत्य ततस्ते तु विधिवद्राजपुङ्गव ।
इदमूचुर्वचो राजन् कार्तिकेयप्रियेप्सया ॥ ४४

रुद्रादयः—

अस्य बालस्य भगवन्नाधिपत्यं यथेप्सितम् ।
अस्मत्प्रियार्थं देवेश सदृशं दातुमर्हसि ॥ ४५

वैशम्पायनः—

ततस्स भगवान् प्रीतस् सर्वलोकपितामहः ।
मनसा चिन्तयामास किमयं लभतामिति ॥ ४६
ऐश्वर्याणि हि सर्वाणि देवदानवरक्षसाम् ।
भूतयक्षपिशाचानां पन्नगानां च सर्वशः ॥ ४७
पूर्वमेवादिदेशासौ निकायेषु महात्मनाम् ॥ ४७॥

सामर्थ्यं च तथैश्वर्यं महामतिरमन्यत ॥　४८

ततो मुहूर्तं स ध्यात्वा देवानां श्रेयसि स्थितः ।
सैनापत्यं ददौ तस्मै सर्वभूतेषु भारत ॥　४९

दिवि देवनिकायानां ये च राजन् परिश्रुताः ।
तान् सर्वान् व्यादिदेशास्मै सर्वभूतपितामहः ॥　५०

ततः कुमारमादाय देवा ब्रह्मपुरोगमाः ।
अभिषेकार्थमाजग्मुश् शैलेन्द्रं सहितास्तदा ॥　५१

पुण्यां हैमवतीं देवीं सरिच्छ्रेष्ठां सरस्वतीम् ।
स्यमन्तपञ्चके या वै पितृलोकेषु विश्रुता ॥　५२

तत्र तीरे सरस्वत्याः पुण्ये सर्वगुणान्विते ।
निषेदुर्देवगन्धर्वास् सर्वे सम्पूर्णमानसाः ॥　५३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ ७७ ॥ सारस्वतपर्वणि दशमोऽध्यायः ॥ १० ॥

[ अस्मिन्नध्याये ५३ श्लोकाः ]

## ॥ चत्वारिंशोऽध्यायः ॥



बृहस्पत्यादिभिः स्कन्दस्य सैनापत्येऽभिषेचनम् ॥ १ ॥ ब्रह्मादिभिः स्कन्दाय स्वस्वपारिषदानां दानम् ॥ २ ॥

वैशम्पायनः—

ततोऽभिषेकसम्भारान् सर्वान् सम्भृत्य शास्त्रतः ।
बृहस्पतिस्समिद्धेऽग्नौ जुहावाज्यं यथाविधि ॥ १

ततो हिमवता दत्ते मणिप्रवरशोभिते ।
दिव्यरत्नयुते दिव्ये निषण्णः परमासने ॥ २

सर्वमङ्गलसम्भारैर् विधिमन्त्रपुरस्कृतम् ।
आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥ ३

इन्द्राविष्णू महावीर्यौ तथा चन्द्रदिवाकरौ ।
धाता चैव विधाता च तथोभावनिलानलौ ॥ ४

पूष्णा भगेन चार्यम्णा चांशेन च विवस्वता ।
रुद्रश्च सहितो धीमान् मित्रेण वरुणेन च ॥ ५

रुद्रैर्वसुभिरादित्यैर् अश्विभ्यां च वृतः प्रभुः ।
विश्वैर्देवैर्मरुद्भिश्च साध्यैश्च पितृभिस्सह ॥ ६

गन्धर्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः ।
देवर्षिभिरसङ्ख्येयैस् तथा ब्रह्मर्षिभिर्वरैः ॥ ७

वैखानसैर्वालखिल्यैर् वाय्वाहारैर्मरीचिपैः ।
भृगुभिश्चाङ्गिरोभिश्च यतिभिश्च महात्मभिः ॥ ८

सर्वैर्विद्याधरैः पुण्यैर् योगसिद्धैश्च संवृतः ।
पितामहः पुलस्त्यश्च पुलहश्च महातपाः ॥ ९

अङ्गिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च ।
क्रतुर्हरिः प्रचेताश्च मनुर्दक्षस्तथैव च ॥ १०

ऋतवश्च ग्रहाश्चैव ज्योतींषि च विशां पते ।
मूर्तिमन्त्यश्च सरितो नदाश्चैव सनातनाः ॥ ११

समुद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च ।
पृथिवी द्यौर्दिशश्चैव पादपाश्च जनाधिप ॥ १२

अदितिर्देवमाता च ह्रीश्श्रीस्स्वाहा सरस्वती ।
उमा शची सिनीवाली तथा चानुमतिः कुहूः ॥ १३

राका च धिषणा चैव पत्न्यश्चान्या दिवौकसाम् ।
हिमवांश्चैव विन्ध्यश्च मेरुश्चानेकशृङ्गवान् ॥ १४

ऐरावतस्सानुचरः कलाः काष्ठास्तथैव च ।
मासार्धमासा ऋतवस् तथा रात्र्यहनी नृप ॥ १५

उच्चैश्श्रवा हयश्रेष्ठो नागराजश्च वामनः ।
अरुणो गरुडश्चैव वृक्षाश्चौषधिभिस्सह ॥ १६

धर्मश्च भगवान् देवस् समाजग्मुर्हि सङ्गताः ।

कालो यमश्च मृत्युश्च यमस्यानुचराश्च ये ॥ १७

बहुलत्वाच्च ये नोक्ता विविधा देवतागणाः ।
[1-2]ते कुमाराभिषेकार्थं समाजग्मुस्ततस्ततः ॥ १८

जगृहुस्ते तदा राजन् सर्वे एव दिवौकसः ।
आभिषेचनिकं भाण्डं मङ्गलानि च सर्वशः ॥ १९

दिव्यसम्भारसंयुक्तैः कलशैः काञ्चनैर्नृप ।
[3]समिद्भिः पुण्यगन्धाभिर् अद्भिस्ताभिरलङ्कृतम् ॥ २०

अभ्यषिञ्चन् कुमारं वै हृष्टरूपा दिवौकसः ।
सैनापत्ये महात्मानम् असुराणां भयावहम् ॥ २१

पुरा यथा महाराज वरुणं वै जलेश्वरम् ।
तथाऽभ्यषिञ्चद्भगवान् ब्रह्मा लोकपितामहः ॥ २२

काश्यपश्च महातेजा ये चान्ये नानुकीर्तिताः ॥ २२॥

तस्मै ब्रह्मा ददौ प्रीतो बलिनो वातरंहसः ।
कामवीर्यधरान् सिद्धांस् तथा पारिषदान् प्रभुः ॥ २३॥

नन्दिसेनं लोहिताक्षं घण्टाकर्णं च सम्मतम् ॥ २४

चतुर्थं चाप्यतिबलं ख्यातं कुमुदमालिनम् ।

---

1. ख—ततो हिमवता दत्ते मणिप्रवरशोभिते ।
दिव्यरत्नाचिते पुण्ये निषण्णः परमासने ॥ [अधिकः पाठः]
2. ख—अर्धत्रयं नास्ति
3. क-ख-घ—सारस्वतीभिः पुण्याभि

तथा स्थाणुं महादेवं महापारिषदं क्रतुम् ॥ २५

मायाशतधरं वीरं कामवीर्यबलान्वितम् ।
ददौ स्कन्दाय राजेन्द्र सुरारिविनिबर्हणम् ॥ २६

स हि देवासुरे युद्धे दैत्यानां भीमकर्मणाम् ।
जघान दोर्भ्यां सङ्क्रुद्धः प्रयुतानि चतुर्दश ॥ २७

तथा देवा ददुस्तस्मै [1]सेनान्यै भूतसङ्कुलाम् ।
देवशत्रुक्षयकरीम् अजय्यां विश्वरूपिणीम् ॥ २८

जयशब्दं तथा चक्रुर् देवास्सर्वे सवासवाः ।
गन्धर्वयक्षरक्षांसि मुनयः पितरस्तथा ॥ २९

ततः प्रादादनुचरौ यमः कालोपमावुभौ ।
उन्माथं च प्रमाथं च महावीर्यौ महाद्युती ॥ ३०

सुभ्राजौ भास्वरौ चैव यौ तौ सूर्यानुयायिनौ ।
तौ सूर्यः कार्तिकेयाय ददौ प्रीतः प्रतापवान् ॥ ३१

कैलासशृङ्गसङ्काशौ श्वेतमाल्यानुलेपनौ ।
सोमोऽप्यनुचरौ प्रादान्मणिं सुमणिमेव च ॥ ३२

ज्वालाजिह्वं तथा ज्योतिं आत्मजाय हुताशनः ।
ददावनुचरौ शूरौ परसैन्यप्रमाथिनौ ॥ ३३

परिघं विकटं चैव भीमं च सुमहाबलम् ।

---

1. क-ख—सेनां नैर्ऋत

[1]दहतिं दहनं चैव प्रचण्डौ वीर्यसम्मतौ ॥ ३४

ईशोऽप्यनुचरान् पञ्च ददौ स्कन्दाय धीमते ॥ ३४॥

उत्क्रोशं संस्करं चैव वज्रदण्डधरावुभौ ।
ददावनलपुत्राय वासवः परवीरहा ॥ ३५॥

तौ हि शत्रून् महेन्द्रस्य जघ्नतुस्समरे बहून् ॥ ३६

चक्रं विक्रमकं चैव सङ्क्रमं च महाबलम् ।
स्कन्दाय त्रीननुचरान् ददौ विष्णुर्महायशाः ॥ ३७

वर्धनं नन्दनं चैव सर्वविद्याविशारदौ ।
स्कन्दाय ददतुः प्रीतावश्विनौ भरतर्षभ ॥ ३८

कुन्दरं क्रमुकं चैव कुमुदं च महायशाः ।
डम्बराडम्बरौ चैव ददौ धाता महात्मने ॥ ३९

वक्रानुवक्रौ बलिनौ मेषवक्त्रौ बलोत्कटौ ।
ददौ त्वष्टा महामायौ स्कन्दस्यानुचरौ वरौ ॥ ४०

सुव्रतं सत्यसन्धं च ददौ मित्रो महात्मने ।
[2]कुमाराय महात्मानौ ददौ विद्याधरौ प्रभुः ॥ ४१

सुदर्शनीयौ वरदौ त्रिषु लोकेषु विश्रुतौ ।
सुप्रभं च महात्मानं शुभकर्माणमेव च ॥ ४२

कार्तिकेयाय सम्प्रादाद् विधाता लोकविश्रुतः ॥ ४२॥

---

1. अ—अर्धषट्कं नास्ति 2. ब—इदमर्धं नास्ति

बलिनं बलकं चैव महामायाविनावुभौ ।
पूषा पारिषदौ प्रादात् कार्तिकेयाय भारत ॥　४३॥

बलं चातिबलं चैव महावक्त्रौ महाबलौ ।
प्रददौ कार्तिकेयाय [1]वायुर्भरतसत्तम ॥　४४॥

सवं चातिसवं चैव तिमिवक्त्रौ महाबलौ ।
प्रददौ कार्तिकेयाय वरुणस्सत्यसङ्गरः ॥　४५॥

सुवर्चसं महात्मानं तथैवाऽप्यतिवर्चसम् ।
हिमवान् प्रददौ राजन् हुताशनसुताय वै ॥　४६॥

[2]काञ्चनं च महात्मानं मेघमालिनमेव च ।
ददावनुचरौ मेरुर् अग्निपुत्राय भारत ॥　४७॥

[3]स्थिरं चातिस्थिरं चैव मेरुरेवापरौ ददौ ।
महात्मनेऽग्निपुत्राय महाबलपराक्रमौ ॥　४८॥

उच्छ्रितं चातिशृङ्गं च मेघमालिनमेव च ।
प्रददावग्निपुत्राय विन्ध्यः पारिषदाञ् शुभान् ॥　४९॥

सङ्ग्रहं विग्रहं चैव समुद्रोऽपि गदाधरौ ।
प्रददावग्निपुत्राय महापारिषदावुभौ ॥　५०॥

---

1. ख—इतः चत्वारः पादा न सन्ति
2. क—घसं चातिघसं चैव मेघमालिनमेव च ।
   ददावनुचरान्मेरुः　[पाठान्तरम्]
3. अ—अर्धद्वयं नास्ति

उन्मादं पुष्पदन्तं च शङ्कुकर्णं तथैव च ।
प्रददावग्निपुत्राय पार्वती शुभदर्शना ॥ ५१॥

जयं महाजयं चैव गङ्गा ज्वलनसूनवे ।
प्रददौ पुरुषव्याघ्र महाबलपराक्रमौ ॥ ५२॥

एवं साध्याश्च बहवो रुद्राश्च पितरस्तथा ।
सागरास्सरितश्चैव गिरयश्च महाबलान् ॥ ५३॥

ददुस्सेनागणाध्यक्षाञ् शूलपट्टसधारिणः ॥ ५४
दिव्यप्रहरणोपेतान् नानावेषविभूषितान् ॥ ५४॥

शृणु नामानि चाप्येषां ये चान्ये स्कन्दसैनिकाः ।
विविधायुधसम्पन्नाश् चित्रावरणवर्मिणः ॥ ५५॥

गजकर्णो निकुम्भश्च पद्मः कुमुद एव च ।
सुनन्दो द्वादशभुजस् तथा कृष्णोपकृष्णकौ ॥ ५६॥

द्रोणश्रवाः कपिस्कन्धः काञ्चनाक्षो जलन्धमः ॥ ५७

अक्षिसन्तर्जनो राजन् कुनदीकस्तथाऽभ्रकृत् ।
एकाक्षो द्वादशभुजस् तथैवैकजटः प्रभुः ॥ ५८

सहस्रबाहुर्विकचो व्याघ्रास्यः क्षितिकम्पनः ।
पुण्यनामा सुनामा च सुवक्त्रः प्रियदर्शनः ॥ ५९

परिस्रावः कोकनदः प्रियमाल्यानुलेपनः ।
गजोदरो गजशिरास् स्कन्धाक्षश्शतलोचनः ॥ ६०

ज्वालाजिह्वः करालश्च वज्रनाभो वसुप्रभः ।
चतुर्दंष्ट्रोऽष्टजिह्वश्च मेघनादः पृथुश्रवाः ॥ ६१

विद्युदक्षो धनुर्वक्त्रो जठरो मारुताशनः ।
उदाराक्षो झषाक्षश्च वज्रनाभो वसुप्रदः ॥ ६२

[1]समुद्रवेगो राजेन्द्र शैलकम्पी तथैव च ।
मन्त्रमेषः प्रभावश्च तथा नन्दोपनन्दकौ ॥ ६३

धूम्रश्श्वेतः कलिङ्गश्च सिद्धार्थो वरदस्तथा ।
प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतापवान् ॥ ६४

आनन्दश्च प्रमोदश्च स्वस्तिको ध्रुवकृत् तथा ।
क्षेमपापस्सुजातश्च चित्रयात्रश्च भारत ॥ ६५

गोव्रजः कनकापीडो महापारिषदेश्वरः ।
गायनो हायनश्चैव बाणखङ्गश्च वीर्यवान् ॥ ६६

वैताली चातिताली च तथा कालिक[2]पालिकौ ।
[3]मांसालीकङ्कदिग्धाङ्गस्समुद्रो मानसश्च ह ॥ ६७

रणोत्कटः प्रभासश्च श्वेतशीर्षश्च नन्दकः ।
कालः काण्डशरीरश्च तथा कुम्भाण्डकोऽपरः ॥ ६८

---

1. अ—नास्तीदमर्धम्
2. ख—पादिकौ क—कालिकपत्रिकौ च—पातिकौ
3. अ—नास्तीदमर्धम्

[1]अलिकान्धिस्थितश्चैव भूतलोन्मादनस्तथा ।
यज्ञवाहस्सुवाहश्च देवयाजी च सोमपः ॥ ६९

जालकश्च महातेजाः क्रुद्धाक्रुद्धौ च भारत ।
तुहनश्च तुहानश्च चित्रसेनश्च वीर्यवान् ॥ ७०

[2]मातुरस्सुप्रसादश्च किरीटी च महाबलः ।
वसानो मधुकर्णश्च कलशोदर एव च ॥ ७१

यवन्तो मन्मथकरस् सूचीवक्त्रश्च वीर्यवान् ।
श्वेत[3]वक्त्रोऽश्ववक्त्रश्च पाण्डरस्सुमहाबलः ॥ ७२

कुण्डबाहुस्सुबाहुश्च राजन् कोकिलकस्तथा ।
आढकः कनकाक्षश्च बालो मानाधिकः प्रभुः ॥ ७३

सञ्चारकः कोकनको गृध्रवक्त्रश्च चुम्बकः ।
[4]लोपाशवक्त्रोऽ[5]जफलश् शाखावक्त्रश्च [6]तुण्डकः ॥ ७४

उग्रग्रीवश्च कृष्णश्च हंसवक्त्रश्च चन्द्रमाः ।
[7]वाणिकर्मा च मण्डूकः पञ्चवक्त्रश्च शिक्षकः ॥ ७५

---

1. घ—बालकस्थिरकश्चैव क—नलकाण्डिस्थितश्चैव भूतलो मा
   ख—बलकाचिस्सितश्चैव
2. अ—अर्धषट्कं नास्ति
3. ख-घ—वक्त्रस्सुवक्त्रश्च दारुवक्त्रश्च पाण्डरः
4. अ—नास्तीदमर्धम्
5. घ—जठरः कुम्भवक्त्रश्च चण्डकः
6. ख—पार्श्वकः
7. ख—पाणि क-घ—माणिकर्मा च माण्डूकः

मेषवक्त्रश्च जम्बूकश्[1]शाकवक्त्रश्च तुण्डकः ।
योगयुक्तो महात्मा च सततं ब्राह्मणप्रियः ॥ ७६

पैतामहो महात्मा च महापारिषदश्च यः ।
यौवनस्थाश्च बालाश्च वृद्धाश्च जनमेजय ॥ ७७

सहस्रशः पारिषदाः कुमारमुपतस्थिरे ॥ ७७॥
वक्त्रैर्नानाविधैर्ये तु शृणु ताञ्जनमेजय ॥ ७८

कूर्मकुक्कुटवक्त्राश्च शशगोधामुखास्तथा ।
[2]खरोष्ट्रवदनाश्चैव वराहवदनास्तथा ॥ ७९

मनुष्यमेषवक्त्राश्च सृगालवदनास्तथा ।
[3]मार्जारशुकवक्त्राश्च दीर्घवर्णाश्च भारत ॥ ८०

नकुलोलूकवक्त्राश्च श्ववक्त्राश्च तथा परे ।
आखुवक्त्राश्श्वभ्रवक्त्रा मयूरवदनास्तथा ॥ ८१

मत्स्यमेषाननाश्चान्ये अजाविमहिषाननाः ।
ऋक्षशार्दूलवक्त्राश्च द्वीपिसिंहाननास्तथा ॥ ८२

भीमा गजाननाश्चैव तरक्षुवदनास्तथा ।
[4]गरुडाननाः खड्गमुखा वृककाकमुखास्तथा ॥ ८३

---

1. क-घ—शाखाव ख—जम्बूकश्शुकवक्त्रश्च मेषवक्त्रश्च
2. ख—इदमर्धद्वयं नास्ति
3. अ—षडर्धानि न सन्ति
4. क—इदमर्धद्वयं नास्ति

गोवानरमुखाश्चान्ये वृषदंशमुखास्तथा ।
महाजठरपादाङ्गाः काकाक्षाश्चापि भारत ॥ ८४

पारावतमुखाश्चान्ये तथा व्यक्तमुखाः परे ।
कोकिलावदनाश्चैव श्येनतित्तिरिकाननाः ॥ ८५

कृकलासमुखाश्चैव विरजोम्बरधारिणः ।
बालवक्रा मणिमुखाश् चन्द्रवक्राश्शशाननाः ॥ ८६

आशीविषासक्तकण्ठा गोनासाभरणास्तथा ।
स्थूलोदराः कृशाङ्गाश्च स्थूलाङ्गाश्च कृशोदराः ॥ ८७

ह्रस्वग्रीवा महाकण्ठा नानाव्यालविभूषिताः ।
गजेन्द्रचर्मवसनास् तथा कृष्णाजिनाम्बराः ॥ ८८

स्कन्धेमुखा महाराज तथा ह्युदरतोमुखाः ।
पृष्ठेमुखास्तथा कण्ठेमुखा जङ्घामुखा अपि ॥ ८९

पार्श्वाननाश्च बहवो नानादेशमुखाः परे ।
तथा कीटपतङ्गानां सदृशास्या गणेश्वराः ॥ ९०

नानाव्यालमुखाश्चान्ये बहुबाहुशिरोधराः ।
नानाकृतिमुखाः केचिद् बहुकर्णाक्षिनासिकाः ॥ ९१

भुजङ्गभोगवदना नानागुल्मनिवासिनः ।
चीरसंवृतगात्राश्च तथा वल्कलवाससः ॥ ९२

[1]नानावेषधराश्चान्ये चर्मवासस एव च ।
उष्णीषिणो मकुटिनः कम्बुग्रीवास्सुवर्चसः ॥　　९३

किरीटिनः पञ्चशिखास् तथा कठिनमूर्धजाः ।
त्रिशिखा द्विशिखाश्चैव तथा सप्तशिखाः परे ॥　　९४

शिखण्डिनो मकुटिनो मुण्डाश्चैव जटाधराः ।
चित्रमालाम्बरधराः केचिद्रोमाननास्तथा ॥　　९५

दिव्यमाल्याम्बरधरास् सततं प्रियविग्रहाः ।
कृष्णनिर्मांसवक्त्राश्च दीर्घपृष्ठोदरोरसः ॥　　९६

स्थूलपृष्ठा ह्रस्वपृष्ठाः प्रलम्बोदरमेहनाः ।
महाभुजा ह्रस्वभुजा ह्रस्वगात्राः प्रबाहवः ॥　　९७

कुब्जाश्च दीर्घजिह्वाश्च हस्तिकर्णशिरोधराः ।
हस्तिनासाः कूर्मनासा वृकव्याघ्रनखास्तथा ॥　　९८

दीर्घोष्ठा दीर्घजिह्वाश्च विकराला ह्यधोमुखाः ।
महादंष्ट्रा ह्रस्वदंष्ट्राश् चित्रदंष्ट्रास्तथा परे ॥　　९९

वारणेन्द्रमुखाश्चान्ये भीमा राजन् सहस्रशः ।
सुविभक्तशरीराश्च दीप्तिमन्तस्स्वलङ्कृताः ॥　　१००

पिङ्गलाक्षाश्शङ्कुकर्णाश् चक्रपादाश्च भारत ।

---

1. ख—इदमर्धं नास्ति

[1]पृथुदंष्ट्रा महादंष्ट्रास् स्थूलोष्ठा हरिमूर्द्धजाः ॥ १०१

नानापादोष्ठपृष्ठाश्च नानाहस्तशिरोधराः ।
नानावर्मभिराच्छन्ना नानाभाषाश्च भारत ॥ १०२

कुशला देशभाषासु जल्पन्तोऽन्योन्यमीश्वरम् ।
हृष्टाः परिपतन्ति स्म राजन् पारिषदास्स्मृताः ॥ १०३

दीर्घग्रीवा दीर्घनखा दीर्घपादशिरो[2]रुहाः ।
पिङ्गाक्षा नीलकण्ठाश्च लम्बकर्णाश्च भारत ॥ १०४

[3]शुकोदरनिभाश्चैव केचिदञ्जनसन्निभाः ।
श्वेताङ्गा लोहितग्रीवाः पिङ्गलाक्षास्तथा परे ॥ १०५

कल्माषबाह्वो राजंश् चित्रमालाश्च भारत ।
चामीकरापीडनिभाश् श्वेतलोहितराजयः ॥ १०६

[4]नानावर्णास्सुवर्णाश्च मयूरसदृशप्रभाः ॥ १०६॥
पुनः प्रहरणान्येषां कीर्त्यमानानि मे शृणु ॥ १०७

[5]शेषैः कृतः पारिषदैर् आयुधानां परिग्रहः ॥ १०७॥
पाशोद्यतकराश्चैव व्यादितास्याः खराननाः ।

---

1. ख—कोशमालेऽर्धद्वयमिदं वर्तते
2. ख—धराः ख—भुजाः
3. ख—कोशमालेऽर्धद्वयं वर्तते
4. ख—पञ्चार्धानि न सन्ति
5. अ—नास्तीदमर्धम्

[1]प्रदग्धनीलकण्ठाश्च तथा परिघबाहवः ॥ १०८॥

[2]शूलासिहस्ताश्च तथा तथा मुसलपाणयः ।
[3]असिपट्टसहस्ताश्च दण्डहस्ताश्च भारत ॥ १०९॥

[4]गदामुसुण्ठीहस्ताश्च तथा मुद्गरपाणयः ।
आयुधैर्विविधैर्घोरैर् महात्मानो महाजवाः ॥ ११०॥

महाजवा महाभागा महापारिषदास्तथा ।
अभिषेकं कुमारस्य दृष्ट्वा हृष्टा रणप्रियाः ॥ १११॥

घण्टाजालपिनद्धाङ्गा ननृतुस्ते महौजसः ॥ ११२

एते चान्ये च बहवो महापारिषदा नृप ।
उपतस्थुर्महात्मानं कार्तिकेयं यशस्विनम् ॥ ११३

दिव्याश्चाप्यान्तरिक्षाश्च पार्थिवाश्चानलोपमाः ।
व्यादिष्टा दैवतैश्शूरैस् स्कन्दस्यानुचरा भवन् ॥ ११४

तादृशानां सहस्राणि प्रयुतान्यर्बुदानि च ।
अभिषिक्तं महात्मानं परिवार्योपतस्थिरे ॥ ११५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ ७७ ॥ सारस्वतपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[ अस्मिन्नध्याये ११५ श्लोकाः ]

---

1. ख—पृथ्वक्षा नीलकण्ठा  2. क-ख—शतघ्नीपाशहस्ताश्च
3. क-ख-घ—शूलासिहस्ताश्च तथा  4. अ—नास्तीदमर्धम्

## ॥ एकचत्वारिंशोऽध्यायः ॥

कुमारमातृगणस्य नामकीर्तनम् ॥ १ ॥ कुमारेण तारकासुरवधः क्रौञ्चपर्वतभेदनं च ॥ २ ॥

वैशम्पायनः—

श्रृणु मातृगणान् राजन् कुमारानुचरानिमान् ।
कीर्त्यमानान् महावीर्यान् सपत्नगणसूदनान् ॥ १

यशस्विनीनां मातृणां श्रृणु नामानि भारत ।
याभिर्व्याप्तास्त्रयो लोकाः कल्याणीभिश्चराचराः ॥ २

प्रभावती विशालाक्षी पालिका गोनसा तथा ।
श्रीमती बहुला चैव तथैव बहुपुत्रिका ॥ ३

अप्सुजाता च गोपाली बृहदम्बालिका तथा ।
जयावती मालिनिका ध्रुवरत्ना भयङ्करी ॥ ४

बहुदामा सुदामा च [1]पिशङ्गी नन्दिनी तथा ।
एकचूडा महाचूडा [2]चक्रनेमिश्च भारत ॥ ५

अतेजस्वी भवत्सेना कमलाक्ष्यथ शोभना ।
शत्रुञ्जया तथा वाची क्रोधना शलभीमुखा ॥ ६

माधवी शुभवक्त्रा च तीर्थनेमिश्च भारत ।

---

1. घ—विशोका 2. घ—वक्त्रनेमि

गीतिप्रिया च कल्याणी [1]द्रुममालाऽमितौजसा ॥ ७

तेजस्विनी भोगवती सुभ्रूश्च कनकावती ।
अलाताक्षी वीर्यवती विद्युज्जिह्वा च भारत ॥ ८

पद्मावती सुनक्षत्रा कन्दरा बहु[2]लोचना ।
सन्तानिका च कौरव्य [3]कामा च कमलावती ॥ ९

मालिदा बहुदामा च [4]प्रसूना च यशस्विनी ।
नृत्यप्रिया च राजेन्द्र तथोलूखलमेखला ॥ १०

कुक्कुटिका शङ्खिणिका तथा जर्झरिका नृप ।
कुण्डलीका [5]कलालीला कुण्डलाऽथ शतोदरी ॥ ११

[6]उक्ताधिका जरेन्द्रादा महावेगा च कङ्कणा ।
मनोजवा कण्टकिनी प्रघसा पूतनादिनी ॥ १२

ऐषिका पुच्छदा वामा कोपनाऽथ तडित्प्रभा ।
[7]कुण्डोदरी प्रचण्डा च कोटरा मेघवासिनी ॥ १३

---

1. क-ख—मद्रुमालाऽमिताशना ब—कुरुमालातिशोभना
2. ख-ब—योजना
3. क-ख-ब—रामा च
4. क—वसुह्रा ब—वसुदा च ख—वसुभागा
5. क-ब—कबलिका ख—कालबिला
6. क—उत्ताडिका ब—उत्क्रोडिका ख—उत्काथिका जरेह्रादा
7. ख-क-ब—भण्डो

[1]सुतरा तन्त्रिणी लम्ब्रा वासचूडा विकर्तना ।
[2]ऊर्ध्ववेणीधरा चैव पिङ्गाक्षी हेममेखला ॥ १४

आमोदा चैव कौरव्य तथा लम्बपयोधरा ।
शशोलूकमुखी कृष्णा खरजङ्घा मनोजवा ॥ १५

शिशुमारमुखी श्वेता लोहिताक्षी विभीषणा ।
जटालिका कामचरी दीर्घजिह्वाऽथ लोभगा ॥ १६

कानेलिका वाशतिका कुमुदा चैव भारत ।
[3]शोणिताक्षी महाकाया गरदा चैव भारत ॥ १७

[4]एकालीका कुङ्कुसुमा कृष्णवर्णा च भारत ।
क्षुरकर्णी चतुष्कर्णा कर्णप्रावरणा तथा ॥ १८

चतुष्पथनिकेता च गोकर्णी महिषानना ।
खरकर्णी महाकर्णी भेरीस्वनमहास्वने ॥ १९

शङ्खकुम्भस्वरा चैव भवदा च महाबला ।
गणा च सुगणा चैव तथा काली मदा तथा ॥ २०

चतुष्पथरथा चैव भूतिनी धान्यगोचरा ।

1. ख—सुतला घ—पूतना लम्बिनो जम्बा
2. अ—नास्तीदमर्धम्
3. क—गरिण्डी चैव घ—शोभिताक्षा महाकाया शिरिण्डी
ख—लोहिताक्षी महाकाया हरिपिण्डी च
4. अ—द्वादशार्धानि न सन्ति
घ—एकालका च कुसुमा ख—एकावकाङ्कुसुमा कुष्ठक

पशुदा वित्तदा चैव [1]महदा च महायशाः ॥ २१

पयोदा गोमहिषदा सुवर्णार्नी च भारत ।
प्रतिष्ठा सुप्रतिष्ठा च रोचमाना सुरोचना ॥ २२

गोकर्णी च सुकर्णी च ससिरा सैरिका तथा ।
[2]सुरचक्रा मेघरवा मेघमाला विरोचना ॥ २३

एताश्चान्याश्च बहुला मातरो भरतर्षभ ।
कार्तिकेयानुयायिन्यो नानारूपास्सहस्रशः ॥ २४

दीर्घदन्ता दीर्घनेत्रा दीर्घतुण्डाश्च भारत ।
सरला मधुराश्चैव यौवनस्थास्स्वलङ्कृताः ॥ २५

महत्त्वेन च संयुक्ताः कामरूपधरास्तथा ।
निर्मांसगात्राश्श्वेताश्च तथा काञ्चनसन्निभाः ॥ २६

कृष्णमेघनिभाश्चान्या धूम्राश्च भरतर्षभ ।
[3]अरुणाभा महाभागा दीर्घकेश्यस्सितानना: ॥ २७

ऊर्ध्ववेणीधराश्चैव पिङ्गाक्ष्यो लोममेखलाः ।
लम्बोदरा लम्बकर्णास् तथा लम्बपयोधराः ॥ २८

[4]ताम्राक्ष्यस्ताम्रवर्णाश्च हर्यक्षाश्च तथाऽपराः ।

---

1. ख—भगदा च
2. क—शरवक्रा ख-घ—करचक्रा
3. अ-घ—सप्तार्धानि न सन्ति
4. ख—इदमर्धं नास्ति

वरदाः कामचारिण्यो नित्यं प्रमुदितास्तथा ॥ २९

वारुण्योऽप्यथ माहेन्द्र्यस् तथाऽऽग्नेय्यः परन्तप ।
वायव्यश्चाथ कौबेर्यो ब्राह्म्यश्च भरतर्षभ ॥ ३०

याम्या रौद्रास्तथा सौम्या [1]नानारूपा महाबलाः ।
रूपेणाप्सरसां तुल्या जवे वायुसमाश्च ताः ॥ ३१

शक्रवीर्योपमा युद्धे दीप्तवह्निसमप्रभाः ।
[2]परपुष्टोपमा वाक्ये धनाढ्या धनदोपमाः ॥ ३२

वृक्षचत्वरवासिन्यश् चतुष्पथनिकेतनाः ।
[3]शुभ्राश्श्मशानवासिन्यश् शैलप्रस्रवणालयाः ॥ ३३

नानाभरणधारिण्यो नानामाल्याम्बरस्रजः ।
नानाविचित्रवेषाश्च नानाभाषास्तथा पराः ॥ ३४

एते चान्ये च मातॄणां गणाश्शत्रुभयङ्कराः ।
अनुजग्मुर्महात्मानं त्रिदशेन्द्रस्य सम्मते ॥ ३५

ततश्शक्त्यस्त्रमददाद् भगवान् पाकशासनः ।
गुहाय राजशार्दूल विनाशाय सुरद्विषाम् ॥ ३६

महास्वनां महाघण्टां द्योतमानां सितप्रभाम् ।
तरुणादित्यवर्णां च पताकां भरतर्षभ ॥ ३७

---

1. क-ख—कौबेर्योऽथ
2. अ—नास्तीदमर्धम्
3. क—शुभाः ख—गुहा

ददौ पशुपतिस्तस्मै सर्वभूतमहाचमूम् ॥ ३७॥

[1]उग्रां नानाप्रहरणां तपोवीर्यबलान्विताम् ।
विष्णुर्ददौ वैजयन्तीं मालां बलविवर्धिनीम् ॥ ३८॥

उमा ददावरजसी वाससी चन्द्रसन्निभे ।
गङ्गा कमण्डलुं दिव्यम् अमृतोद्भवमुत्तमम् ॥ ३९॥

ददौ प्रीत्या कुमाराय दण्डं चैव बृहस्पतिः ॥ ४०

गरुडो दयितं पुत्रं मयूरं चित्रबर्हिणम् ।
अरुणस्ताम्रचूडं च प्रददौ चरणायुधम् ॥ ४१

छागं तु वरुणो देवो बलवीर्यसमन्वितम् ।
कृष्णाजिनं ददौ ब्रह्मा ब्रह्मण्याय ददौ नृप ॥ ४२

समरेषु जयं चैव प्रददौ लोकभावनः ॥ ४२॥

सैनापत्यमनुप्राप्य स्कन्दो देवगणस्य ह ।
शुशुभे ज्वलनार्चिष्मान् द्वितीय इव पावकः ॥ ४३॥

ततः पारिषदैश्चैव मातृभिश्च समन्वितः ।
[2]ययौ दैत्यविनाशाय ह्लादयन् सुरपुङ्गवान् ॥ ४४॥

सा सेना नैर्ऋती [3]तत्र सघण्टोच्छ्रितकेतना ।

---

1. अ—नास्तीदमर्धम्
2. क-ख-ग—इदमर्धं नास्ति
3. क-ख—धीमन्  ग—श्रीमान्

सभेरीशङ्खमुरजा सायुधा सपताकिनी ॥ ४५॥
शारदी द्यौरिव बभौ ज्योतिर्भिरिव शोभिता ॥ ४६

ततो देवनिकायास्ते भूतसेनागणास्तथा ।
वादयामासुरव्यग्रा भेरीश्शङ्खांश्च पुष्कलान् ॥ ४७

पटहान् झर्झरांश्चैव कङ्कणान् गोविषाणकान् ।
आडम्बरान् गोमुखांश्च डिण्डिमांश्च महास्वनान् ॥ ४८

तुष्टुवुस्ते कुमारं च सर्वे देवास्सवासवाः ।
जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ४९

ततः प्रीतो महासेनस् [1]त्रिदशानां वरं ददौ ।
रिपून् हन्तास्मि समरे येषां वधचिकीर्षवः ॥ ५०

प्रतिगृह्य वरं देवास् तस्माद्विबुधसत्तमात् ।
प्रीतात्मानो महात्मानो मेनिरे निहतान् रिपून् ॥ ५१

[2]सर्वेषां भूतसङ्घानां हर्षान्नादस्समुत्थितः ।
अपूरयत लोकांस्त्रीन् वरे दत्ते महात्मना ॥ ५२

स निर्ययौ महासेनो महत्या सेनया सह ।
वधाय युधि दैत्यानां रक्षसां भरतर्षभ ॥ ५३

व्यवसायो जयो धर्मस् सिद्धिर्लक्ष्मीर्धृतिस्स्मृतिः ।
महासेनस्य सैन्यानाम् अग्रे जग्मुर्नराधिप ॥ ५४

---

1. ख—इतः पादद्वयं नास्ति 2. अ—अर्धद्वयं नास्ति

स तया भीमया देवश् शूलमुद्गरहस्तया ।
[1]गदामुसलनाराचशक्तितोमरहस्तया ॥ ५५
वृतस्सिंहनिनादिन्या विनद्य प्रययौ गुहः ॥ ५५॥

तं दृष्ट्वा सर्वदैतेया राक्षसा दानवास्तथा ।
व्यद्रवन्त दिशस्सर्वा भयोद्विग्नास्समन्ततः ॥ ५६॥

अभ्यद्रवन्त देवाश्च विविधायुधपाणयः ॥ ५७
[2]दृष्ट्वा चापततः क्रुद्धस् स्कन्दस्तेजोबलान्वितः ।
शक्त्यस्त्रं भगवान् देवः पुनः पुनररिन्दमः ॥ ५८
आदधच्चात्मनस्तेजो हविषेव यथाऽनलः ॥ ५८॥

अभ्यस्यमाने शक्त्यस्त्रे स्कन्देनामिततेजसा ।
उल्काजालं महाराज पपात वसुधातले ॥ ५९॥

[3]संह्लादयन्तश्शतशो निर्घाताश्चापतन् क्षितौ ।
यथाऽन्तकालसमये सुघोरास्स्युस्तथा नृप ॥ ६०॥

क्षिप्ता ह्येका यदा शक्तिस् सुघोराऽनलसूनुना ।
तदा कोट्यो विनिष्पेतुश् शक्तीनां भरतर्षभ ॥ ६१॥
स शक्त्यस्त्रेण दनुजाञ् जघान भगवान् प्रभुः ॥ ६२
दैत्येन्द्रं तारकं नाम महाबलपराक्रमम् ।
वृतं दैत्यायुतैर्वीरैर् बलिभिर्दशभिः प्रभुः ॥ ६३

1. अ-ख—नास्तीदमर्धम् 2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति

महिषं चाष्टभिः पद्मैर् वृतं सङ्ख्ये जघान ह ॥ ६३॥
त्रिपादं चायुतशतैर् जघान दशभिर्वृतम् ॥ ६४
[1]ह्रदोदरं निखर्वैश्च वृतं दशभिरीश्वरः ।
जघानानुचरैस्सार्धं विविधायुधपाणिभिः ॥ ६५
तत्राकुर्वन्त तुमुलं नादं वध्यत्सु शत्रुषु ।
कुमारानुचरा राजन् पूरयन्तो [2]दिशो दश ॥ ६६
शक्त्यस्त्रस्य तु राजेन्द्र ततोऽर्चिभिर्विशां पते ।
[3]त्रैलोक्यं त्रासितं सर्वं जृम्भमाणाभिरेव च ॥ ६७
दग्धास्सहस्रशो दैत्या नादैस्स्कन्दस्य चापरे ॥ ६७॥
पताकया चावधूता हताः केचित् सुरद्विषः ।
केचिद्घण्टारवत्रस्ता [4]निपेतुर्धरणीतले ॥ ६८॥
केचित् प्रहरणैश्छिन्ना विनिष्पेतुर्गतासवः ॥ ६९
एवं सुरद्विषोऽनेकान् सबलानाततायिनः ।
जिगाय समरे वीरः कार्तिकेयो जघान ह ॥ ७०
बाणो नामाथ दैत्येन्द्रो बलेः पुत्रो महाबलः ।
क्रौञ्चपर्वतमासाद्य [5]देवसङ्घानबाधत ॥ ७१

1. ख—इदमर्धं नास्ति
2. ख—इतः पादद्वयं नास्ति
3. क-ख-घ—इदमर्धं नास्ति
4. ख—अयं पादोऽनन्तरश्च न स्तः
5. ख—इतः पादद्वयं नास्ति

तमभ्ययान्महासेनस् सुरशत्रुमुदारधीः ।
स कार्तिकेयस्य भयात् क्रौञ्चं शरणमेयिवान् ॥ ७२

ततः क्रौञ्चमभिद्रुत्य क्रौञ्चनादविनादितम् ।
शक्त्या बिभेद भगवान् कार्तिकेयोऽग्निदत्तया ॥ ७३

[1]ससालस्कन्धतरलं त्रस्तवानरवारणम् ।
प्रलीनत्रस्तविहगं विनिष्पतितपन्नगम् ॥ ७४

गोलाङ्गूलर्क्षचमरैर् द्रवद्भिरनुनादितम् ।
कुरङ्गारुतनिर्घोषम् उद्भ्रान्तभ्रमराचितम् ॥ ७५

विनिष्पतद्भिश्शरभैस् [2]सिंहैश्च सहसा द्रुतैः ।
शोच्यामपि दशां प्राप्तो ररासेव स पर्वतः ॥ ७६

विद्याधरास्समुत्पेतुस् तस्य शृङ्गनिवासिनः ।
किन्नराश्च भयोद्विग्नाश् शक्तिप्रासरवोद्धृताः ॥ ७७

ततो दैत्या विनिष्पेतुश् [3]शतशोऽथ सहस्रशः ।
प्रदीप्तात् पर्वतश्रेष्ठाद् विचित्राभरणस्रजः ॥ ७८

तान् निजघ्नुरतिक्रम्य कुमारानुचरा मृधे ।
बिभेद शक्त्या क्रौञ्चं च पावकिः परवीरहा ॥ ७९

बहुधा चैकधा चैव कृत्वाऽऽत्मानं महात्मना ।

---

1. ख—इदमर्धं नास्ति
2. ख—अयं पादोऽनन्तरश्च न स्तः
3. ख—अयं पादोऽनन्तरश्च न स्तः

शक्तिः क्षिप्ता रणे तेन पाणिमेति पुनःपुनः ॥ ८०

एवंप्रभावो भगवान् अतो भूयश्च पावकिः ।
क्रौञ्चस्तेन विनिर्भिन्नो दैत्याश्च शतशो हताः ॥ ८१

ततस्स भगवान् क्रौञ्चं निहत्य विबुधद्विषः ।
सभाज्यमानो विबुधैः परं हर्षमवाप ह ॥ ८२

ततो दुन्दुभयो नेदुर् दिव्याश्शङ्खाश्च भारत ।
मुमुचुर्देवसेनाश्च पुष्पवर्षमनुत्तमम् ॥ ८३

[1]योगिनामीश्वरं देवं शतशोऽथ सहस्रशः ।
दिव्यगन्धमुपादाय ववौ पुण्यश्च मारुतः ॥ ८४

गन्धर्वास्तुष्टुवुश्चैनं यज्वानश्च महर्षयः ॥ ८४॥

केचिदेनं व्यवस्यन्ति पितामहसुतं विभुम् ।
सनत्कुमारं सर्वेषां ब्रह्मयोनिं तमग्रजम् ॥ ८५॥

केचिन्महेश्वरसुतं केचित् पुत्रं विभावसोः ।
उमायाः कृत्तिकायाश्च गङ्गायाश्च वदन्त्युत ॥ ८६॥

एकधा च द्विधा चैव चतुर्धा च महाबलम् ।
योगिनामीश्वरं देवं शतधा च सहस्रधा ॥ ८७॥

एतत् ते कथितं राजन् कार्तिकेयाभिषेचनम् ।
शृणु चेमां सरस्वत्यास् तीर्थवंशस्य पुण्यताम् ॥ ८८॥

---

1. क-ख-घ—इदमर्धं नास्ति

बभूव तत्तीर्थवरं जितेषु सुरशत्रुषु ।
कुमारेण महाराज त्रिविष्टपमिवापरम् ॥ ८९॥

ऐश्वर्याणि च तत्रस्थो ददावीशः पृथक् पृथक् ।
तथा नैर्ऋतमुख्येषु त्रैलोक्ये पावकात्मजः ॥ ९०॥

एवं स भगवांस्तस्मिंस् तीर्थे दैत्यकुलान्तकृत् ।
अभिषिक्तो महाराज देवसेनापतिस्सुरैः ॥ ९१॥

औशनं नाम तत् तीर्थं यत्र तीर्थे महामतिः ।
अभिषिक्तस्सुरगणैर् वरुणो भरतर्षभ ॥ ९२॥

तस्मिंस्तीर्थवरे स्नात्वा स्कन्दमभ्यर्च्य लाङ्गली ।
ब्राह्मणेभ्यो ददौ वित्तं वासांस्याभरणानि च ॥ ९३॥

उषित्वा रजनीं तां तु माधवः परवीरहा ।
[1]आद्यं तीर्थवरं तच्च स्पृष्ट्वा तोयं च लाङ्गली ॥ ९४॥

हृष्टः प्रीतमनाश्चैव ह्यभवन्माधवोत्तमः ॥ ९५
एतत् ते सर्वमाख्यातं यन्मां त्वं परिपृष्टवान् ॥ ९५॥

यत्राऽभिषिक्तो भगवान् स्कन्दो देवैस्समागतैः ।
सेनानीश्च कृतो राजन् बाल एव महाबलः ॥ ९६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ७७ ॥ सारस्वतपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये ९६॥ श्लोकाः ]

---

1. ख—पूज्यं

## ॥ द्विचत्वारिंशोऽध्यायः ॥

देवैर्वरुणस्य जलाधिपत्येऽभिषेचनम् ॥ १ ॥ बलभद्रस्याग्नितीर्थकौबेरतीर्थगमनं तन्महिमानुवर्णनं च ॥ २ ॥

जनमेजयः—

अत्यद्भुतमिदं ब्रह्मन् श्रुतवानस्मि तत्त्वतः ।
अभिषेकं कुमारस्य विस्तरेण यथाविधि ॥ १

यच्छ्रुत्वा पूतमात्मानं विजानामि तपोधन ।
प्रहृष्टानि च रोमाणि प्रसन्नं च मनो मम ॥ २

अभिषेकं कुमारस्य दैत्यानां च वधं तथा ।
श्रुत्वा मे परमा प्रीतिर् भूयः कौतूहलं हि मे ॥ ३

अपांपतिः कथं ह्यस्मिन्नभिषिक्तः पुरा सुरैः ।
तन्मे ब्रूहि महाप्राज्ञ कुशलो ह्यसि सत्तम ॥ ४

वैशम्पायनः—

शृणु राजन्निदं चित्रं पूर्वकाले यथाऽभवत् ॥ ४॥

आदौ कृतयुगे तस्मिन् वर्तमाने यथाविधि ।
वरुणं देवतास्सर्वास् समेत्येदमथाब्रुवन् ॥ ५॥

देवाः—

यथाऽस्मान् सुरराट् शक्रो भयेभ्यस्त्राति सर्वदा ।

तथा त्वमपि सर्वासां सरितां वै पतिर्भव ॥ ६॥

वासश्च ते सदा देव सागरे मकरालये ।
समुद्रोऽयं तव वशे भविष्यति नदीपतिः ॥ ७॥

सोमेन सार्धं तव च हानिर्वृद्धिर्भविष्यति ॥ ८

वैशम्पायनः—

एवमस्त्विति तान् देवान् वरुणो वाक्यमब्रवीत् ॥ ८॥

समागम्य तु ते सर्वे वरुणं सागरालयम् ।
अपांपतिं प्रचक्रुर्हि विधिदृष्टेन कर्मणा ॥ ९॥

अभिषिच्य ततो देवा वरुणं पयसां पतिम् ।
स्वान्येव जग्मुस्स्थानानि पूजयित्वा जलेश्वरम् ॥ १०॥

अभिषिक्तस्ततो देवैर् वरुणोऽपि महायशाः ।
सरितस्सागरांश्चैव नदांश्चैव सरांसि च ॥ ११॥

पालयामास विधिना यथा देवाञ् शतक्रतुः ॥ १२

ततस्तत्राप्युपस्पृश्य दत्त्वा च विविधं वसु ।
तस्मात्तीर्थान्नरव्याघ्र स जगाम प्रलम्बहा ॥ १३

नष्टो न दृश्यते यत्र शमीगर्भो हुताशनः ।
लोकालोकविनाशे च प्रादुर्भूते तदा नृप ॥ १४

उपतस्थुर्महात्मानं सर्वलोकपितामहम् ॥ १४॥

देवाः—

अग्निः प्रनष्टो भगवान् कारणं न च विद्महे ।
सर्वलोकक्षयो मा भूत् सम्पादयतु नोऽनलम् ॥ १५॥

जनमेजयः—

किमर्थं भगवानग्निः प्रनष्टो लोकभावनः ।
विज्ञातश्च कथं देवैस् तन्ममाचक्ष्व पृच्छतः ॥ १६॥

वैशम्पायनः—

भृगोश्शापभयाद्भीतो जातवेदाः प्रतापवान् ।
शमीगर्भमथासाद्य [1]ननाश भगवांस्ततः ॥ १७॥

प्रनष्टे तु तदा वह्नौ देवास्सर्वे सवासवाः ।
अन्वेषयंस्तदा सर्वे ज्वलनं भृशदुःखिताः ॥ १८॥

ततोऽग्निर्तीर्थमागम्य शमीगर्भस्थमेव हि ।
ददृशुर्ज्वलनं तत्र वसमानं यथातथम् ॥ १९॥

देवास्सर्वे महाराज बृहस्पतिपुरोगमाः ।
ज्वलनं ते समासाद्य प्रीता भूवन् सवासवाः ॥ २०॥

[2]पुनर्यथागतं जग्मुस् सर्वभक्षश्च सोऽभवत् ॥ २१
भृगोश्शापान्महीपाल यदुक्तं ब्रह्मवादिना ।

---

1. ब—इतः द्वादश पादा न सन्ति
2. ब—प्रनष्टे तु तथा वह्नौ देवास्सर्वे सवासवाः । [अधिकः पाठः]

तत्रैवाप्लुत्य मतिमान् [1]ब्रह्मयोनिर्जगाम ह ॥  २२

तत्राप्लुत्य ततो ब्रह्मा सह देवैः पुरा प्रभुः ।
ससर्ज चान्नानि तथा देवतानां यथाविधि ॥  २३

तत्र स्नात्वा च दत्त्वा च वसूनि विविधानि च ।
कौबेरं प्रययौ तीर्थं यत्र तप्त्वा तपो महत् ॥  २४

धनाधिपत्यं सम्प्राप्तो राजन्नैलबिलः प्रभुः ॥  २४॥

तत्रस्थमेव तं राजन् धनानां निधयस्तथा ।
उपतस्थुर्नरश्रेष्ठ तत्तीर्थं लाङ्गली तदा ॥  २५॥

गत्वा स्नात्वा च विधिवद् ब्राह्मणानां ददौ धनम् ॥  २६

ददृशे तत्र तत्स्थानं कौबेरे कानने प्रभुः ॥  २६॥

[2]पुरा यत्र तपस्तप्तं विपुलं सुमहात्मना ।
यत्र राज्ञा कुबेरेण वरा लब्धाश्च पुष्कलाः ॥  २७॥

धनाधिपत्यं सख्यं च रुद्रेणामिततेजसा ।
सुरत्वं लोकपालत्वं पुत्रं च नलकूबरम् ॥  २८॥

यत्र लेभे महाबाहो धनाधिपतिरञ्जसा ॥  २९

अभिषिक्तश्च यत्रैव समागम्य मरुद्गणैः ॥  २९॥

वाहनं चास्य तद्दत्तं हंसयुक्तं मनोजवम् ।

---

1. ख—अयं पादोऽनन्तरश्च नस्तः
2. अ—पञ्चार्धानि न सन्ति

विमानं पुष्पकं दिव्यं नैर्ऋतैश्वर्यमेव च ॥ ३०॥

तत्राप्लुत्य महाराज दत्त्वा देयान् सुपुष्कलान् ।
जगाम त्वरितो राम तीर्थं श्वेतानुलेपनः ॥ ३१॥

निषेवितं महासत्त्वैर् नाम्ना बदरपाचनम् ।
सर्वर्तुकवनोपेतं सदापुष्पफलं शुभम् ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ७७ ॥ सारस्वतपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[अस्मिन्नध्याये ३२॥ श्लोकाः]

---

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

---

बलरामस्य बदरपाचनतीर्थगमनम् ॥ १ ॥ स्रुचावत्यरुन्धत्योर्महिमानुवर्णनम् ॥ २ ॥

---

वैशम्पायनः—

ततस्तीर्थवरं रामो ययौ बदरपाचनम् ।
तपस्विसिद्धचरितं यत्र कन्या धृतव्रता ॥ १

भरद्वाजस्य दुहिता रूपेणाप्रतिमा भुवि ।
स्रुचावती नाम विभो कौमारब्रह्मचारिणी ॥ २

तपश्चचार साऽत्युग्रं नियमैर्बहुभिः प्रभो ।

भर्ता मे देवराजस्स्याद् इति निश्चित्य भामिनी ॥ ३

समास्तस्या व्यतिक्रान्ता बह्व्यः कुरुकुलोद्वह ।
चरन्त्या नियमांस्तांस्तान् स्त्रीभिस्तीव्रान् सुदुश्चरान् ॥ ४

तस्यास्तु तेन वृत्तेन तपसा च विशां पते ।
भक्त्या परमया प्रीतो भगवान् पाकशासनः ॥ ५

आजगामाश्रमं तस्यास् त्रिदशाधिपतिस्तदा ।
आस्थाय रूपं ब्रह्मर्षेर् वसिष्ठस्य महात्मनः ॥ ६

सा तं दृष्ट्वोग्रतपसं वसिष्ठं जपतां वरम् ।
आचारैर्बहुभिर्जुष्टं पूजयामास भारत ॥ ७

उवाच विनयज्ञा सा कल्याणी च प्रियंवदा ॥ ७॥

स्रुचावती—

भगवंस्त्वं मुनिश्रेष्ठ किमाज्ञापयसि प्रभो ।
सर्वमद्य यथाशक्ति तव दास्यामि सुव्रता ॥ ८॥

शक्रभक्त्या च ते पाणिं न दास्यामि कथञ्चन ॥ ९

[1]व्रतैश्च नियमैश्चैव तपसा च तपोधन ।
शक्रस्तोषयितव्यो वै मया त्रिभुवनेश्वरः ॥ १०

वैशम्पायनः—

इत्युक्तो भगवान् देवस् स्मयन्निव निरीक्ष्य ताम् ।

1. अ-ख—नास्तीदमर्धम्

उवाच विनयज्ञस्तां सांत्वयन्निव भारत ॥ ११

इन्द्रः—

उग्रं तपश्चरसि हि विदिता मेऽसि सुव्रते ।
[1]यदर्थमयमारम्भस् तव कल्याणि हृद्गतः ॥ १२

तत् सर्वं च तथाभूतं भविष्यति वरानने ।
तपसा लभ्यते सर्वं सर्वं तपसि तिष्ठति ॥ १३

यानि स्थानानि सर्वाणि विबुधानां शुभानने ।
तपसा तानि लभ्यन्ते तपोमूलं महत् सुखम् ॥ १४

इह कृत्वा तपो घोरं देहं सन्त्यज्य मानवाः ।
देवत्वं यान्ति कल्याणि शृणु चेदं वचो मम ॥ १५

पचस्वैतानि सुभगे बदराणि शुभव्रते ॥ १५॥

वैशम्पायनः—

पचेत्युक्त्वा स भगवाञ् जगाम बलसूदनः ॥ १६

आमन्त्र्य तां तु कल्याणीं ततो जप्यं जजाप सा ।
अविदूरे ततस्तस्माद् आश्रमात् तीर्थ उत्तमे ॥ १७

[2]तच्च तीर्थं महाराज यत्र जप्यं जजाप सा ।
इन्द्रतीर्थं महाराज त्रिषु लोकेषु विश्रुतम् ॥ १८

तस्या जिज्ञासनार्थं तु भगवान् पाकशासनः ।

---

1. ख—इदमर्धं नास्ति
2. अ-ख—नास्तीदमर्धम्

बदराणामपचनं चकार विबुधाधिपः ॥ १९

ततस्सा प्रयता राजन् वाग्यता विगतक्लमा ।
तत्परा शुचिसंवीता पावके समधिश्रयत् ॥ २०
[1]अपचत् पुरुषव्याघ्र बदराणि शुभव्रता ॥ २०॥

तस्याः पचन्त्यास्सुचिरं कालोऽगात् पुरुषर्षभ ।
न च स्म तानि पच्यन्ते दिनं च क्षयमभ्ययात् ॥ २१॥

हुताशनेन दग्धश्च यस्तस्याः काष्ठसञ्चयः ।
अकाष्ठमग्निं सा दृष्ट्वा स्वशरीरमथापचत् ॥ २२॥

पादौ प्रक्षिप्य सा पूर्वं पावके चारुदर्शना ।
दग्धौ दग्धौ पुनः पादावुपावर्तयतानघ ॥ २३॥

चरणौ दह्यमानौ च नाचिन्तयदनिन्दिता ।
दुःखं कमलपत्राक्षी महर्षेः प्रियकाम्यया ॥ २४॥

न वैमनस्यं तस्यास्तु मुखभेदोऽथवाऽभवत् ।
शरीरमग्निना दीप्य जलमध्ये यथा स्थिता ॥ २५॥

तस्याश्च पचनं नित्यम् अवर्तद्धृदि भारत ।
सर्वथा बदराण्येव पक्तव्यानीति काम्यया ॥ २६॥

सा तद्धृदि दृढं कृत्वा महर्षेर्वचनं शुभा ।
अपचद्बदराण्येव न चापच्यन्त भारत ॥ २७॥

---

1. क—अर्धद्वयं नास्ति

तस्याश्च चरणौ वह्निर् ददाह भगवान् भृशम् ।
न च तस्या मनोदुःखं स्वल्पमप्यभवत् तदा ॥ २८॥

अथ तत् कर्म दृष्ट्वाऽस्याः प्रीतस्त्रिभुवनेश्वरः ।
ततस्स दर्शयामास कन्यायै रूपमात्मनः ॥ २९॥

उवाच च सुरश्रेष्ठस् तां कन्यां सुदृढव्रताम् ॥ ३०

इन्द्रः—

प्रीतोऽस्मि ते शुभे भक्त्या तपसा विपुलेन च ।
तस्माद्योऽभिमतः कामस् स ते सम्पत्स्यते शुभे ॥ ३१

देहं त्यक्त्वा महाभागे त्रिदिवे च निवत्स्यसि ॥ ३१॥

इदं च ते तीर्थवरं ख्यातं लोके भविष्यति ।
सर्वपापापहं सुभ्रु नाम्ना बदरपाचनम् ॥ ३२॥

विख्यातं त्रिषु लोकेषु ब्रह्मर्षिभिरभिप्लुतम् ॥ ३३

अस्मिन् खलु महाभागे शुभे तीर्थवरे पुरा ।
न्यस्य सप्तर्षयो याता हिमवन्तमरुन्धतीम् ॥ ३४

ततस्ते सुमहाभागा गत्वा तत्र सुसंशिताः ।
वृत्त्यर्थं फलमूलानि समाहर्तुं ययुः किल ॥ ३५

तेषां वृत्त्यर्थिनां तत्र वसतां हिमवद्वने ।
अनावृष्टिरनुप्राप्ता तदा द्वादशवार्षिकी ॥ ३६

ते त कृत्वाऽऽश्रमं राजन न्यवसन्त तपस्विनः ।

अरुन्धत्यपि कल्याणी तपोनित्याऽभवत् तदा ॥ ३७

अरुन्धतीं ततो दृष्ट्वा तीर्थे नियममास्थिताम् ।
अथागमत् त्रिणयनस् सम्प्रीतो वरदस्तदा ॥ ३८

ब्रह्मरूपं तदा कृत्वा महादेवो महायशाः ।
तामभ्येत्याब्रवीद्देवो भिक्षामिच्छाम्यहं शुभे ॥ ३९
प्रत्युवाच ततस्सा तु ब्राह्मणं चारुदर्शना ॥ ३९॥

अरुन्धती—

क्षीणोऽन्नसञ्चयो विप्र बदराणीह भक्षय ॥ ४०

इन्द्रः—

ततोऽब्रवीन्महादेवः पचस्वैतानि भामिनि ।
इत्युक्ता साऽपचत्तानि ब्राह्मणप्रियकाम्यया ॥ ४१
अधिश्रित्य समिद्धेऽग्नौ बदराणि यशस्विनी ॥ ४१॥

दिव्या मनोरमाः पुण्याः कथाश्शुश्राव सा शुभा ।
अतीता सा त्वनावृष्टिर् घोरा द्वादशवार्षिकी ॥ ४२॥

अनश्नन्त्याः पचन्त्याश्च शृण्वन्त्याश्च कथाश्शुभाः ।
अह्ना समस्स तस्यास्तु कालोऽतीतस्सुदारुणः ॥ ४३॥

ततस्ते मुनयः प्राप्ताः फलान्यादाय पर्वतात् ।
ततस्स भगवान् प्रीतः प्रोवाचारुन्धतीं तदा ॥ ४४॥

महादेवः—

उपसर्पस्व भद्रं ते यथापूर्वं हि तानृषीन् ।
प्रीतोऽस्मि ते महाभागे तपसा नियमेन च ॥ ४५।

इन्द्रः—

ततस्तां दर्शयामास स्वरूपं भगवान् हरः ।
ततोऽब्रवीत् तदा तेभ्यस् तस्यास्तच्चरितं महत् ॥ ४६।

महादेवः—

भवद्भिर्हिमवत्पृष्ठे यत्तपस्समुपार्जितम् ।
अस्याश्च यत्तपो विप्रास् सममेतन्मतं मम ॥ ४७।

अनया हि तपस्विन्या तपस्तप्तं सुदुश्चरम् ।
अनश्नन्त्या पचन्त्या च समा द्वादश वारिताः ॥ ४८।

इन्द्रः—

ततः प्रोवाच भगवांस् तामेवारुन्धतीं तदा ॥ ४९

महादेवः—

वरं वृणीष्व कल्याणि यस्तेऽभिलषितो हृदि ॥ ४९।

इन्द्रः—

साऽब्रवीत् पृथुताम्राक्षी देवं सप्तर्षिसंसदि ॥ ५०

अरुन्धती—

भगवन् यदि तुष्टो मे तीर्थं स्यादिदमुत्तमम् ।
सिद्धदेवर्षिचरितं नाम्ना बदरपाचनम् ॥ ५१

तथाऽस्मिन् देवदेवेश त्रिरात्रमुषितो नरः ।
प्राप्नुयादुपवासेन फलं द्वादशवार्षिकम् ॥		५२

इन्द्रः—

एवमस्त्विति तां देवः प्रत्युवाच तपस्विनीम् ।
सप्तर्षिभिस्स्तुतो देवस् तदा यातस्त्रिविष्टपम् ॥		५३

ऋषयो विस्मयं जग्मुस् तां दृष्ट्वा चाप्यरुन्धतीम् ।
अश्रान्तामविवर्णां च क्षुत्पिपासासहां सतीम् ॥		५४

एवं सिद्धिः परा प्राप्ता अरुन्धत्या विशिष्टया ॥		५४॥

त्वया तथा महाभागे मदर्थं संशितव्रते ।
विशेषो हि त्वया भद्रे व्रते ह्यस्मिन् समर्पितः ॥		५५॥

यथा तथा ददाम्यद्य नियमेन सुतोषितः ॥		५६

विशिष्टं तव कल्याणि प्रयच्छामि परं वरम् ।
अरुन्धत्या वरस्तस्या यो दत्तो वै महात्मना ॥		५७

तस्या वरप्रदानेन तव कल्याणि तेजसा ।
प्रवक्ष्याम्यपरं भूयो वरमत्र यथाविधि ॥		५८

यस्त्वेकां रजनीं तीर्थे वत्स्यते सुसमाहितः ।
स स्नात्वा प्राप्नुयाल्लोकान् देहन्यासाच्च दुर्लभान् ॥		५९

वैशम्पायनः—

इत्युक्त्वा भगवान् देवस् सहस्राक्षः प्रतापवान् ।

स्रुचावतीं ततः पुण्यां जगाम त्रिदिवं पुनः ॥ ६०

गते वज्रधरे राजंस् ततो वर्षं पपात ह ।
पुष्पाणां भरतश्रेष्ठ दिव्यानां दिव्यगन्धिनाम् ॥ ६१

नेदुर्दुन्दुभयश्चापि समन्तात् सुमहास्वनाः ।
मरुतश्च ववुर्युक्ताः पुण्यगन्धा विशां पते ॥ ६२

उत्सृज्य तु कृशं देहं जगामेन्द्रस्य भार्यताम् ।
तपसोग्रेण सा लब्ध्वा रेमे तेन सहाच्युत ॥ ६३

जनमेजयः—

का नु तस्याभवन्माता क संवृद्धा च शोभना ।
श्रोतुमिच्छाम्यहं ब्रह्मन् कौतूहलमतीव मे ॥ ६४

वैशम्पायनः—

भरद्वाजस्य विप्रर्षेस् स्कन्नं रेतो महात्मनः ।
दृष्ट्वाऽप्सरसमायान्तीं घृताचीं पृथुलोचनाम् ॥ ६५

स तु जग्राह तद्रेतः करेण जपतां वरः ।
तदाऽपतत् पर्णपुटे तत्र सा सम्भवच्छुभा ॥ ६६

तस्यास्स जातकर्मादि कृत्वा सर्वं तपोधनः ।
नाम तस्यास्तु कृतवान् भरद्वाजो महामुनिः ॥ ६७

स्रुचावतीति धर्मात्मा देवर्षिगणसंसदि ॥ ६७॥

स च तामाश्रमे न्यस्य जगाम हिमवद्वनम् ॥ ६८

तत्राप्युपस्पृश्य महानुभावो
वसूनि दत्त्वा च महाद्विजेभ्यः ।
जगाम तीर्थं सुसमाहितात्मा
शक्रस्य तत् तीर्थवरं तदानीम् ॥ ६९

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ ७७ ॥ सारस्वतपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[ अस्मिन्नध्याये ६९ श्लोकाः ]

---

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

बलभद्रस्येन्द्रतीर्थादिगमनम् ॥ १ ॥ तत्तत्तीर्थमाहात्म्यकथनम् ॥ २ ॥

---

वैशम्पायनः—

इन्द्रतीर्थं ततो गत्वा यदूनां प्रवरो बली ।
विप्रेभ्यो धनरत्नानि स्नात्वा दत्त्वा यथाविधि ॥ १

तत्र ह्यमरराजो वै ईजे क्रतुशतेन ह ।
बृहस्पतेश्च देवेशः प्रददौ विपुलं धनम् ॥ २

अनर्गलान् सजारूथ्यान् सर्वान् विविधदक्षिणान् ।
आजहार क्रतूंस्तत्र यथोक्तान् वेदपारगैः ॥ ३

क्रतूंस्तान् भरतश्रेष्ठ शतकृत्वो महाद्युतिः ।

पूरयामास विधिवत् ततः ख्यातश्शतक्रतुः ॥ ४

तस्य नाम्ना तु तत् तीर्थं शिवं पुण्यजलावृतम् ।
इन्द्रतीर्थमिति ख्यातं सर्वपापप्रमोचनम् ॥ ५

उपस्पृश्य तु तत्रापि विधिवन्मुसलायुधः ।
ब्राह्मणान् पूजयित्वा च पानाच्छादनभोजनैः ॥ ६

शुभं तीर्थवरं तस्माद् रामतीर्थं जगाम ह ॥ ६॥

यत्र रामो महाभागो भार्गवस्सुमहातपाः ।
असकृत् पृथिवीं कृत्वा हतक्षत्रियपुङ्गवाम् ॥ ७॥

उपाध्यायं पुरस्कृत्य काश्यपं मुनिपुङ्गवम् ।
अयजद्वाजपेयेन सोऽश्वमेधशतेन च ॥ ८॥

प्रददौ दक्षिणार्थं च पृथिवीं सागराम्बराम् ॥ ९

रामो दत्त्वा धनं तत्र द्विजेभ्यो जनमेजय ।
उपस्पृश्य यथान्यायं पूजयित्वा तथा द्विजान् ॥ १०

पुण्यतीर्थे शुभे देशे वसु दत्त्वा हलायुधः ।
मुनींश्चैवाभिवाद्याथ यामुनं तीर्थमागमत् ॥ ११

यत्रानयामास तदा राजसूयमपां पतिः ॥ ११॥

[1]दितेस्सुतान् महाभागो वरुणो वै सितप्रभः ।
यत्र निर्जित्य सङ्ग्रामे मानुषान् दानवांस्तथा ॥ १२॥

---

1. अ—अर्धद्वयं नास्ति

गन्धर्वान् राक्षसांश्चैव वरुणः परवीरहा ॥ १३

तस्मिन् क्रुतुवरे वृत्ते सङ्ग्रामस्समजायत ।
देवानामसुराणां च त्रैलोक्यस्य क्षयावहः ॥ १४

[1]राजसूये क्रतुश्रेष्ठे निवृत्ते जनमेजय ।
जायते सुमहाघोरस् सङ्क्षयः क्षत्रियान् प्रति ॥ १५

हलायुधस्तदा रामस् तस्मिंस्तीर्थवरे शुभे ।
तत्र स्नात्वा च दत्त्वा च द्विजेभ्यो वसु माधवः ॥ १६

[2]वनमाली ततो हृष्टस् स्तूयमानो द्विजातिभिः ।
तस्मादादित्यतीर्थं च जगाम कमलेक्षणः ॥ १७

यत्रेष्ट्वा भगवाञ्ज्योतिर् भास्करो राजसत्तम ।
ज्योतिषामाधिपत्यं च प्रभावं चाभ्यपद्यत ॥ १८

तस्या नद्यास्तु तीरे वै सर्वे देवास्सवासवाः ।
विश्वे तथा समरुतो गन्धर्वाप्सरसश्च ह ॥ १९

द्वैपायनश्शुकश्चैव कृष्णश्च मधुसूदनः ।
यक्षाश्च राक्षसाश्चैव पिशाचाश्च विशां पते ॥ २०

एते चान्ये च बहवो योगसिद्धास्सहस्रशः ।
[3]तस्मिंस्तीर्थे सरस्वत्याश् शिवे पुण्ये परन्तप ॥ २१

---

1. अ—अर्धद्वयं नास्ति 2. अ—नास्तीदमर्धम्
3. अ—नास्तीदमर्धम्

यत्र हत्वा पुरा विष्णुः कैटभं मधुमेव च ।
आप्लुतो भरतश्रेष्ठ तीर्थप्रवर उत्तमे ॥ २२

द्वैपायनश्च धर्मात्मा तत्रैवाप्लुत्य भारत ।
[1]सम्प्राप्तः परमं योगं सिद्धिं च परमां गतः ॥ २३

असितो देवलश्चैव तस्मिन्नेव महातपाः ।
परमं योगमास्थाय योगयुक्तोऽभवन्मुनिः ॥ २४

[2]अन्ये च ऋषयस्तत्र योगसिद्धाः परन्तप ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ ७१ ॥ सारस्वतपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये २४॥ श्लोकाः]

---

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥



देवलजैगीषव्ययोश्चरित्रकीर्तनम् ॥ १ ॥ बलभद्रस्यादित्यतीर्थात् सोमतीर्थगमनम् ॥ २ ॥

---

वैशम्पायनः—

तस्मिन्नेव तु धर्मात्मा [3]वसति स्म तपोधनः ।
गार्हस्थ्यं धर्ममास्थाय ह्यसितो देवलः पुरा ॥ १

---

1. अ-ब—अर्धद्वयं नास्ति 2. क-ख-ब—इदमर्धं नास्ति
3. अ—अयं पादोऽनन्तरश्च न स्तः

धर्मनित्यश्शुचिर्दान्तो यज्ञशीलो महातपाः ।
कर्मणा मनसा वाचा समस्सर्वेषु साधुषु ॥ २

अक्रोधनो महाराज तुल्यनिन्दाप्रियाप्रियः ।
[1]प्रियाप्रिये तुल्यवृत्तिर् अभवत् समदर्शनः ॥ ३

काञ्चने लोष्टके चैव समदर्शी महातपाः ।
देवान् वै पूजयन्नित्यम् अतिथींश्च द्विजैस्सह ॥ ४

ब्रह्मचर्यरतो नित्यं सदा धर्मपरायणः ।
तत्राभ्येत्य महाराज [2]योगमास्थाय भिक्षुकः ॥ ५

जैगिषव्यो मुनिर्धीमांस् तस्मिंस्तीर्थे समाहितः ।
देवलस्याश्रमे राजन् न्यवसत् स महाद्युतिः ॥ ६

योगनित्यो महाराज सिद्धिं प्राप्तो महातपाः ॥ ६॥

तं तत्र वसमानं तु जैगीषव्यं महामुनिम् ।
देवलो दर्शयन्नेव नैवायुञ्जत धर्मतः ॥ ७॥

एवं तयोर्महाराज दीर्घकालो व्यतिक्रमत् ॥ ८

जैगीषव्यो मुनिस्तं तु ददर्शाथ स देवलम् ।
आहारकाले मतिमान् परिव्राड् जनमेजय ॥ ९
उपातिष्ठत धर्मात्मा भैक्षकाले स देवलम् ॥ ९॥

---

1. क-ख-घ—अर्धमिदं नास्ति
2. अ—द्वादश पादा न सन्ति

स दृष्ट्वा भिक्षुरूपेण प्राप्तं तं तु महामुनिम् ।
गौरवं परमं चक्रे प्रीतिं च परमां तदा ॥ १०॥

देवलस्तु यथाशक्ति पूजयामास भारत ।
ऋषिदृष्टेन विधिना समाहूय समाहितः ॥ ११॥

कदाचित् तस्य नृपते देवलस्य महात्मनः ।
चिन्ता सुमहती जाता मुनिं दृष्ट्वा महाद्युतिम् ॥ १२॥

समास्तु समतिक्रान्ता बह्वचः पूजयतो मम ।
न चायमलसो भिक्षुर् अभ्यभाषत किञ्चन ॥ १३॥

एवं विगणयन्नेव स जगाम महोदधिम् ।
अन्तरिक्षगतश्श्रीमान् कलशं गृह्य देवलः ॥ १४॥

गच्छन्नेव च धर्मात्मा समुद्रं सरितां पतिम् ।
जैगीषव्यं ततोऽपश्यद् गतं प्रागेव भारत ॥ १५॥

ततस्सविस्मितश्चिन्तां जगामाथासितः प्रभुः ।
कथं भिक्षुरयं प्राप्तस् समुद्रं सुमहातपाः ॥ १६॥

इत्येवं चिन्तयामास महर्षिरसितस्तदा ।
गत्वा समुद्रं विधिवच् छुचिर्जप्यं जजाप सः ॥ १७॥

कृतजप्याह्निकश्श्रीमान् आश्रमं च जगाम ह ।
कलशं जलपूर्णं वै गृहीत्वा जनमेजय ॥ १८॥

ततस्स प्रविशन्नेव स्वमाश्रमपदं मुनिः ।

[1]आसीनमाश्रमे पुण्ये जैगीषव्यमपश्यत ॥ १९॥

न व्याहरति चैवैनं जैगीषव्यः कथञ्चन ।
काष्ठभूतो श्रमपदे वसति स्म महातपाः ॥ २०॥

तं दृष्ट्वा चाप्लुतं तोये सागरे सागरोपमम् ।
प्रविष्टमाश्रमपदं पूर्वमेव ददर्श सः ॥ २१॥

असितो देवलश्श्रीमांश् चिन्तयामास बुद्धिमान् ।
दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजम् ॥ २२॥

चिन्तयामास राजेन्द्र तं तदा मुनिसत्तमः ।
मया दृष्टस्समुद्रे च आश्रमे च कथं न्वयम् ॥ २३॥

एवं विगणयन्नेव स मुनिर्मन्त्रपारगः ।
उत्पपाताश्रमात् तस्माद् अन्तरिक्षं विशां पते ॥ २४॥

जिज्ञासार्थं तदा भिक्षोर् जैगीषव्यस्य देवलः ।
सोऽन्तरिक्षेण तान् सिद्धान् समपश्यत् समागतान् ॥ २५॥

जैगीषव्यं च तैस्सिद्धैः पूज्यमानमपश्यत ।
[2]न व्याहरत चैवैनं जैगीषव्यः कथञ्चन ॥ २६॥

ततोऽसितस्सुसंरब्धो व्यवसायी दृढव्रतः ।
अपश्यद्वै दिवं यातं जैगीषव्यं स देवलः ॥ २७॥

---

1. अ—पद्यार्धानि न सन्ति
2. घ—कोश एकस्मिन्नेवेदमर्धं वर्तते

[1]तस्माच्च पितृलोकं तं व्रजन्तं सोऽन्वपश्यत ॥ २८

पितृलोकाच्च वै याम्यं यान्तं लोकमपश्यत ।
तस्मादादित्यलोकं च व्रजन्तं सोऽन्वपश्यत ॥ २९

तस्मादभिसमुत्प्लुत्य सोमलोकमभिष्टुतम् ।
व्रजन्तमन्वपश्यत् तं जैगीषव्यं स देवलः ॥ ३०

[2]लोकान् समुत्पतन्तं च शुभानेकाग्नियाजिनाम् ॥ ३०॥

[3]अग्निष्टोमेन च तथा ये यजन्ति तपोधनाः ।
तत्स्थानमनुसम्प्राप्तम् अन्वपश्यत देवलः ॥ ३१॥

[4-5]वाजपेयं क्रतुवरं तथा बहुसुवर्णकम् ।
आहरन् ये महाप्राज्ञास् तेषां लोकेष्वपश्यत ॥ ३२॥

यजन्ते पौण्डरीकेण राजसूयेन चैव ये ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ३३॥

[6]द्वादशाहैश्च सत्रैश्च यजन्ते विविधैर्नृप ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ३४॥

मैत्रावरुणयोर्लोकान् आदित्यानां तथैव च ।
सलोकतामनुप्राप्तम् अपश्यत ततोऽसितः ॥ ३५॥

रुद्राणां च वसूनां च स्थानं यच्च बृहस्पतेः ।

---

1. ख—अर्धपञ्चकं नास्ति
2. क-ख—इदमर्धं नास्ति
3. अ-घ—नास्तीदमर्धम्
4. अ—अष्टार्धानि न सन्ति
5. घ—अर्धचतुष्टयं नास्ति
6. ख—अर्धद्वयं नास्ति

तानि सर्वाण्यतीतं च तमपश्यत् ततोऽसितः ॥ ३६॥

आरुह्य च गवां लोकं प्रशान्तं ब्रह्मसत्रिणाम् ।
लोकानपश्यद्गच्छन्तं जैगीषव्यं ततोऽसितः ॥ ३७॥

त्रीँल्लोकान् प्रवरान् विप्रम् उत्पतन्तं स्वतेजसा ।
पतिव्रतानां लोकांश्च व्रजन्तं सोऽन्वपश्यत ॥ ३८॥

तदा मुनिवरं भूयो जैगीषव्यं तथाऽसितः ।
[1]नान्वपश्यत योगस्थं [2]जैगीषव्यमरिन्दम ॥ ३९॥

सोऽचिन्तयन्महाभागो जैगीषव्यस्य देवलः ।
प्रभावं सुव्रतत्वं च सिद्धिं योगस्य चातुलाम् ॥ ४०॥

असितोऽपृच्छत तदा सिद्धाँल्लोकेषु सत्तमान् ।
प्रयतः प्राञ्जलिर्भूत्वा धीरस्तान् ब्रह्मचारिणः ॥ ४१॥

जैगीषव्यं न पश्यामि तं शंसन्तु तपोधनाः ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ ४२॥

सिद्धाः—

शृणु देवल भूतार्थं शंसतां नो दृढव्रत ।
जैगीषव्यो गतो लोकं शाश्वतं ब्रह्मणोऽक्षयम् ॥ ४३॥

वैशम्पायनः—

श्रुत्वा तु वचनं तेषां सिद्धानां ब्रह्मचारिणाम् ।

---

1. अ—नास्तीदमर्धम् 2. ख—अन्तर्हित

असितो देवलस्तूर्णम् उत्पपात [1]द्रुतं तदा ॥ ४४॥

ततस्सिद्धास्त ऊचुस्तं देवलं पुनरेव ह ॥ ४५

सिद्धाः—

न देवलगतिस्तत्र तव गन्तुं तपोधन ।
ब्रह्मणस्सदनं विप्र जैगीषव्यो यदाप्तवान् ॥ ४६

वैशम्पायनः—

तेषां तद्वचनं श्रुत्वा सिद्धानां देवलस्तदा ।
आनुपूर्व्येण लोकांस्तान् सर्वानवततार च ॥ ४७

स्वं चाश्रमपदं पुण्यम् आजगाम पतङ्गवत् ।
प्रविशन्नेव चापश्यज् जैगीषव्यं स देवलः ॥ ४८

ततो बुद्ध्या व्यगणयद् देवलो धर्मयुक्तया ।
दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजम् ॥ ४९

ततोऽब्रवीन्महात्मानं जैगीषव्यं स देवलः ।
विनयावनतो राज[2]न्नुवाच सुमहातपाः ॥ ५०

देवलः—

मोक्षधर्मं समास्थातुम् इच्छेयं भगवन्नहम् ॥ ५०॥

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा उपदेशं चकार सः ।

---

1. अ-ख—पपात च
2. क-ख-घ—न्नुपासर्पन्महातपाः

विधिं योगस्य परमं कार्याकार्यं च सर्वशः ॥ ५१॥

संन्यासे कृतबुद्धिं तं ततो दृष्ट्वा महातपाः ।
सर्वाश्चास्य क्रियाश्चक्रे विधिदृष्टेन कर्मणा ॥ ५२॥

संन्यासे कृतबुद्धिं तं भूतानि पितृभिस्सह ।
सर्वे दृष्ट्वा प्ररुरुदुः कोऽस्मान् सम्भावयिष्यति ॥ ५३॥

तेषामेव तदा श्रुत्वा दुःखार्तानां स देवलः ।
दिशो दश व्याहरतां मोक्षं त्यक्तुं मनो दधे ॥ ५४॥

ततस्तु फलमूलानि पतितानि च भारत ।
पुष्पाण्योषधयश्चैव रोरूयन्ते सहस्रशः ॥ ५५॥

पुनर्नो देवलः क्षुद्रो नूनं छेत्स्यति दुर्मतिः ।
अभयं सर्वभूतेभ्यो यो दत्त्वा नावबुध्यते ॥ ५६॥

ततो भूयो व्यगणयत् स्वबुद्ध्या मुनिसत्तमः ।
मोक्षे गार्हस्थ्यधर्मे वा किं नु श्रेयस्करं भवेत् ॥ ५७॥

इति सञ्चिन्त्य बहुधा देवलो राजसत्तम ।
त्यक्त्वा गार्हस्थ्यधर्मं तु मोक्षधर्ममरोचयत् ॥ ५८॥

एवमादीनि सञ्चिन्त्य देवलो निश्चयान्वितः ।
प्राप्तवान् परमां सिद्धिं परं योगं च भारत ॥ ५९॥

ततो देवास्समागम्य बृहस्पतिपुरोगमाः ।
जैगीषव्यं तपस्यन्तं प्रशशंसुर्मनीषिणः ॥ ६०॥

अथाब्रवीदृषिवरो देवान् वै नारदस्तथा ।
जैगीषव्ये तपो नास्ति विस्मापयति सोऽसितम् ॥ ६१॥

तमेवंवादिनं वीरं प्रत्यूचुस्त्रिदिवौकसः ।
नेत्युक्त्वा प्रशशंसुश्च जैगीषव्यं महामुनिम् ॥ ६२॥

एवंप्रभावो धर्मात्मा जैगीषव्यस्तथाऽसितः ।
तयोरिदं स्थानवरं तीर्थं चैव महात्मनोः ॥ ६३॥

तत्राप्युपस्पृश्य ततो महात्मा
दत्त्वा च वित्तं हलभृद्द्विजेभ्यः ।
अवाप्य धर्मं परमार्यकर्मा
जगाम सोमस्य महत् स तीर्थम् ॥ ६४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ७७ ॥ सारस्वतपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये ६४॥ श्लोकाः]

## ॥ षट्चत्वारिंशोऽध्यायः ॥

दधीचिसारस्वतयोश्चरितवर्णनम् ॥

वैशम्पायनः—

यत्रेजिवानुडुपती राजसूयेन भारत ।
यस्मिन् वृत्ते महानासीन् सङ्ग्रामस्तारकामयः ॥ १

ततस्तत्राप्युपस्पृश्य दत्त्वा दानानि चात्मवान् ।
सारस्वतस्य धर्मात्मा मुनेस्तीर्थं जगाम सः ॥ २

यत्र द्वादशवार्षिक्याम् अनावृष्ट्यां द्विजोत्तमान् ।
वेदानध्यापयामास तदा सारस्वतो मुनिः ॥ ३

जनमेजयः—

कथं द्वादशवार्षिक्याम् अनावृष्ट्यां द्विजोत्तमान् ।
वेदानध्यापयामास तदा सारस्वतो मुनिः ॥ ४

वैशम्पायनः—

आसीत् पूर्वं महाराज मुनिर्धीमान् महायशाः ।
[1]दधीचिरिति विख्यातो ब्रह्मचारी जितेन्द्रियः ॥ ५

तस्यातितपसश्शक्रो बिभेति सततं विभो ।
न च लोभयितुं शक्यः फलैर्बहुविधैरपि ॥ ६

---

1. क-ख-घ—दधीच इति

प्रलोभनार्थे तस्याथ प्राहिणोत् पाकशासनः ।
दिव्यामप्सरसं मुख्यां दर्शनीयामलम्बुसाम् ॥ ७

तस्य तर्पयतो देवान् सरस्वत्यां महात्मनः ।
समीपतो महाराज [1]सोपातिष्ठत भामिनी ॥ ८

तां दिव्यवपुषं दृष्ट्वा तस्यर्षेर्भावितात्मनः ।
रेतस्स्कन्नं सरस्वत्यां तत् सा जग्राह निम्नगा ॥ ९

कुक्षौ चाप्यदधद्दृष्ट्वा तद्रेतः पुरुषर्षभ ।
सा दधार च तं गर्भं पुत्रहेतोर्महात्मनः ॥ १०

सुषुवे चापि समये पुत्रं सारस्वतं वरम् ।
जगाम पुत्रमादाय तमृषिं प्रति च प्रभो ॥ ११

[2]ऋषिसंसदि तं दृष्ट्वा दधीचमृषिसत्तमम् ।
ततः प्रोवाच राजेन्द्र ददती पुत्रमस्य वै ॥ १२

सरस्वती नदी—

ब्रह्मर्षे तव पुत्रोऽयं त्वद्भक्त्या धारितो मया ॥ १२॥

दृष्ट्वा तेऽप्सरसं रेतो यत् स्कन्नं प्रागलम्बुसाम् ।
तत् कुक्षिणाऽहं ब्रह्मर्षे भक्त्या धृतवती तव ॥ १३॥

न विनाशमिदं गच्छेत् त्वत्तेज इति निश्चयात् ॥ १४

---

1. घ—इतः पादद्वयं नास्ति
2. अ—नास्तीदमर्धम्

प्रतिगृह्णीष्व पुत्रं स्वं मया दत्तमनिन्दितम् ॥　　१४॥

वैशम्पायनः—

इत्युक्तः प्रतिजग्राह प्रीतिं चावहदुत्तमाम् ।
पितृवच्चोपजिघ्रत्तं मूर्ध्नि प्रेम्णा द्विजोत्तमः ॥　　१५॥

परिष्वज्य चिरं कालं तदा भरतसत्तम ।
सरस्वत्यै वरं प्रादात् प्रीयमाणो द्विजोत्तमः ॥　　१६॥

दधीचः—

विश्वे देवास्सपितरो गन्धर्वाप्सरसां गणाः ।
तृप्तिं यास्यन्ति सुभगे तर्प्यमाणास्त्वदम्भसा ॥　　१७॥

वैशम्पायनः—

इत्युक्त्वा तां स तुष्टाव वचोभिर्विविधैस्तदा ।
प्रीतः परमहृष्टात्मा यथावच्छृणु पार्थिव ॥　　१८॥

दधीचः—

प्रस्रुताऽसि महाभागे सरसो ब्रह्मणः पुरा ।
जानन्ति त्वां सरिच्छ्रेष्ठे मुनयस्संशितव्रताः ॥　　१९॥

मम प्रियकरी चापि सततं प्रियदर्शने ।
तस्मात् सारस्वतं पुत्रम् अदधा वरवर्णिनि ॥　　२०॥

तवैव नाम्ना प्रथितः पुत्रस्ते लोकभावनः ।
सारस्वत इति ख्यातो भविष्यति महातपाः ॥　　२१॥

एष द्वादशवार्षिक्याम् अनावृष्ट्यां द्विजोत्तमान् ।
सारस्वतो महाभागे वेदानध्यापयिष्यति ॥ २२॥

पुण्याभ्यश्च सरिद्भ्यस्त्वं मता पुण्यतमा शुभे ।
भविष्यसि महाभागे मत्प्रसादात् सरस्वति ॥ २३॥

वैशम्पायनः—

एवं सा संस्तुता तेन वरं लब्ध्वा महानदी ।
पुत्रमादाय मुदिता जगाम भरतर्षभ ॥ २४॥

एतस्मिन्नेव काले तु विरोधे देवदानवैः ।
शक्रः प्रहरणान्वेषी त्रीँल्लोकान् विचचार ह ॥ २५॥

न चोपलेभे भगवाञ् शक्रः प्रहरणं तदा ।
यद्वै तेषां भवेद्योग्यं वधाय विबुधद्विषाम् ॥ २६॥

ततोऽब्रवीत् सुराञ् शक्रो न मे शक्यास्सुरारयः ।
ऋतेऽस्थिभिर्दधीचस्य निहन्तुं देवसत्तमाः ॥ २७॥

तस्माद्यत्नादृषिश्रेष्ठो याच्यतां कार्यसिद्धये ।
दधीचास्थीनि देहीति तैर्वधिष्ये रणे रिपून् ॥ २८॥

स देवैर्याचितोऽस्थीनि यत्नादृषिवरस्तदा ।
साहाय्यं नः कुरुष्वेति चकारैवाविचारयन् ॥ २९॥

स लोकानक्षयान् प्राप्तो देवप्रियकरस्तदा ।
तस्यास्थीनि ततश्शक्रस् सम्प्रहृष्टमनास्तदा ॥ ३०॥

कारयामास दिव्यानि तदा प्रहरणान्युत ।
वज्राणि च गदाश्चैव गुरून् दण्डांश्च पुष्कलान् ॥　　३१॥

स हि तीव्रेण तपसा संवृत्तः परमर्षिणा ।
प्रजापतिसुतेनाथ भृगुणा लोकभावनः ॥　　३२॥

अतिकायस्स तेजस्वी लोकसारविनिर्मितः ।
जज्ञे शैलगुरुः प्रांशुर् महिम्ना प्रथितः प्रभुः ॥　　३३॥

नित्यमुद्विजते चास्य तेजसा पाकशासनः ॥　　३४

तेन वज्रेण भगवान् मन्त्रयुक्तेन भारत ।
विचकर्त विसृष्टेन ब्रह्मतेजोद्भवेन च ॥　　३५

दैत्यदानववीराणां जघान नवतीर्नव ॥　　३५॥

अथ काले व्यतिक्रान्ते महत्यतिभयङ्करी ।
अनावृष्टिरनुप्राप्ता राजन् द्वादशवार्षिकी ॥　　३६॥

तस्यां द्वादशवार्षिक्याम् अनावृष्ट्यां महर्षयः ।
वृत्त्यर्थं प्राद्रवन् राजन् क्षुधार्तास्सर्वतोदिशः ॥　　३७॥

दिग्भ्यस्तान् प्रद्रुतान् दृष्ट्वा मुनिस्सारस्वतस्तदा ।
गमनाय मनश्चक्रे तं प्रोवाच सरस्वती ॥　　३८॥

न गन्तव्यमितः पुत्र तवाहारमहं सदा ।
दास्यामि मत्स्यप्रवरान् उष्यतामिति भारत ॥　　३९॥

इत्युक्तस्तर्पयामास स पितृन् देवतास्तथा ।

आहारमकरोन्नित्यं प्राणान् वेदांश्च धारयन् ॥ ४०॥

अथ तस्यामतीतायाम् [1]अनावृष्ट्यां महर्षयः ।
अन्योन्यं परिपप्रच्छुः पुनस्स्वाध्यायकारणात् ॥ ४१॥

तेषां क्षुधापरीतानां नष्टा वेदा विधावताम् ।
सर्वेषामेव राजेन्द्र न कश्चित् प्रतिभाति ह ॥ ४२॥

अथ कश्चिदृषिस्तेषां सारस्वतमुपेयिवान् ।
कुर्वाणं संशितात्मानं स्वाध्यायं मुनिपुङ्गवम् ॥ ४३॥

स गत्वाऽऽचष्ट तेभ्यश्च सारस्वतमृषिं प्रभुम् ।
स्वाध्यायममरप्रख्यं कुर्वाणं विजने वने ॥ ४४॥

ततस्सर्वे समाजग्मुस् तत्र राजन् महर्षयः ।
सारस्वतं मुनिश्रेष्ठम् इदमूचुस्समागताः ॥ ४५॥

अस्मानध्यापयस्वेति तानुवाच ततो मुनिः ।
शिष्यत्वमुपगच्छध्वं विधिना च ममेत्युत ॥ ४६॥

ततोऽब्रवीदृषिगणो बालस्त्वमसि पुत्रक ।
स तानाह न मे धर्मो नश्येदिति ततो मुनीन् ॥ ४७॥

सारस्वतः—

*यो ह्यधर्मेण गृह्णीयात् प्रब्रूयाद्वा ह्यधर्मतः ।

---

1. ख—इतः दश पादा न सन्ति

* प्राचीनैरुदाहृतोऽयं पाठक्रमः—

यश्चाधर्मेण विब्रूते यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति ॥

म्रियेते तावुभौ क्षिप्रं स्यातां वा वैरिणावुभौ ॥ ४८॥
न हायनैर्न पलितैर् न वित्तैर्न च बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानस्स नो महान् ॥ ४९॥

वैशम्पायनः—

तच्छ्रुत्वा वचनं तस्य मुनयस्ते तपोधनाः ।
ततो वेदाननुप्राप्य पुनर्धर्मं प्रचक्रिरे ॥ ५०॥

षष्टिर्मुनिसहस्राणि शिष्यत्वं प्रतिपेदिरे ।
सारस्वतस्य विप्रर्षेर् वेदाध्ययनकारणात् ॥ ५१॥

मुष्टिं पृथक् पृथक् सर्वे दर्भाणां चाप्युपाहरन् ।
तस्यासनार्थं विप्रर्षेर् बालस्यापि वशे स्थिताः ॥ ५२॥

तत्रापि दत्त्वा वसु रौहिणेयो
महाबलः केशवपूर्वजन्मा ।
जगाम तीर्थं मुदितः क्रमेण
तं वृद्धकन्याश्रममेव धीरः ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ ७७ ॥ सारस्वतपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[ अस्मिन्नध्याये ५३॥ श्लोकाः ]

## ॥ सप्तचत्वारिंशोऽध्यायः ॥



वृद्धकन्याचरितकथनम् ॥

जनमेजयः—

कथं कुमारी भगवंस् तपोयुक्ता ह्यभूत् पुरा ।
किमर्थं च तपस्तेपे को वाऽस्या नियमोऽभवत् ॥ १

सुदुष्करमिदं ब्रह्मंस् त्वत्तश्श्रुतमनुत्तमम् ।
आख्याहि तत्त्वमखिलं कथं सा तपसि स्थिता ॥ २

वैशम्पायनः—

ऋषिरासीन्महावीर्यः कुणिर्गार्ग्यो महायशाः ।
तप्त्वा तु विपुलं राजंस् तपस्तु तपतां वरः ॥ ३

[1]तपसा संयुता सुभ्रूस् समुत्पन्ना महात्मनः ॥ ३॥

तां च दृष्ट्वा भृशं प्रीतः कुणिर्गार्ग्यो महायशाः ।
जगाम त्रिदिवं राजन् सन्त्यज्य स्वकलेवरम् ॥ ४॥

सुभ्रूस्साऽप्यथ कल्याणी पुण्डरीकनिभेक्षणा ।
[2]महता तपसोग्रेण कृत्वाऽऽश्रममनिन्दिता ॥ ५॥

1. ख—मनसैव सुतां सुभ्रूमुत्पाद्य विपुलेक्षणाम् ।
क-ब—तपसा स सुतां सुभ्रूं समुत्पादयताभिभूः । [पाठान्तरम्]

2. ख—अर्धपञ्चकं नास्ति

उपवासैः पूजयन्ती पितॄन् देवांश्च सा पुरा ॥ ६

तस्यास्तु तपसोग्रेण महान् कालोऽत्यगान्नृप ॥ ६॥

सा पित्रा दीयमानाऽपि पतिं नैच्छदनिन्दिता ।

आत्मनस्सदृशं सा तु भर्तारं नान्वपद्यत ॥ ७॥

ततस्सा तपसोग्रेण पीडयित्वाऽऽत्मनस्तनुम् ।

पितृदेवार्चनरता बभूव विजने वने ॥ ८॥

साऽऽत्मानं मन्यमाना तु कृतकृत्यं श्रमान्विता ।

[1]जगाम वृद्धभावं च कौमारब्रह्मचारिणी ॥ ९॥

वार्धक्येन च राजेन्द्र तपसैव च कर्शिता ॥ १०

सा नाशकद्यदा गन्तुं पदात् पदमपि स्वयम् ।

चकार गमने बुद्धिं परलोकाय वै तदा ॥ ११

मोक्तुकामां तु तां दृष्ट्वा शरीरं नारदोऽब्रवीत् ॥ ११॥

नारदः—

असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे ।

एवं हि श्रुतमस्माभिर् देवलोके महाव्रते ॥ १२॥

तपः परमकं प्राप्य न तु लोकास्त्वया जिताः ॥ १३

वैशम्पायनः—

तन्नारदवचश्श्रुत्वा साऽब्रवीदृषिसंसदि ॥ १३॥

---

1. ख—इदमर्धं नास्ति

वृद्धकन्या—

तपसोऽर्धं प्रयच्छामि पाणिग्राहस्य सत्तमाः ॥ १४

वैशम्पायनः—

इत्युक्तेऽस्यास्तु जग्राह पाणिं गालवसम्भवः ।
ऋषिः प्राक् शृङ्गवान्नाम समयं चेममब्रवीत् ॥ १५

शृङ्गवान्—

समयेन तवाद्याहं पाणिं स्प्रक्ष्यामि शोभने ।
यद्येकरात्रं वस्तव्यं त्वया सह ममेति वै ॥ १६

वैशम्पायनः—

तथेति सा प्रतिश्रुत्य तस्य पाणिं ददौ ततः ।
चक्रे च पाणिग्रहणं तदुद्वाहं च गालवः ॥ १७

सा रात्रावभवद्राजंस् तरुणी दिव्यरूपिणी ।
दिव्याभरणवस्त्रा च दिव्यस्रगनुलेपना ॥ १८

तां दृष्ट्वा गालवः प्रीतो दीपयन्तीमिवात्मना ।
उवास च क्षपामेकां प्रभाते साऽब्रवीच्च तम् ॥ १९

वृद्धकन्या—

यस्त्वया समयो ब्रह्मन् कृतो ब्रह्मर्षिसंसदि ।
तेनोषिताऽस्मि भद्रं ते स्वस्ति तेऽस्तु व्रजाम्यहम् ॥ २०

वैशम्पायनः—

सा तु ध्यात्वाऽब्रवीद्भूयो योऽस्मिंस्तीर्थे समाहितः ।
उषित्वा रजनीमेकां तर्पयित्वा दिवौकसः ॥ २१

चत्वारिंशतमष्टौ च [1]द्वौ चाष्टौ सम्यगाचरेत् ।
ब्रह्मचर्यं हि शान्तात्मा फलं तस्य लभेत सः ॥　　२२
एवमुक्त्वा ततस्साध्वी देहं त्यक्त्वा दिवं ययौ ॥　　२२॥
ऋषिरप्यभवद्दीनो रूपं तस्या विचिन्तयन् ।
समयेन तपोऽर्धं च कृच्छ्रान् प्रतिगृहीतवान् ॥　　२३॥
साधयित्वा तदाऽऽत्मानं तस्यास्सङ्गतिमन्वयात् ।
दुःखितो भरतश्रेष्ठ तस्या रूपबलात्कृतः ॥　　२४॥
एतत्ते वृद्धकन्याया व्याख्यातं चरितं महत् ।
तत्रस्थोऽपि च शुश्राव हतं शल्यं हलायुधः ॥　　२५॥
तत्रापि दत्त्वा दानानि द्विजातिभ्यः परन्तप ।
शुशोच शल्यं सङ्ग्रामे निहतं पाण्डवैस्तदा ॥　　२६॥
समन्तपञ्चकद्वारात् ततो निष्क्रम्य माधवः ।
पप्रच्छर्षिगणान् रामः कुरुक्षेत्रस्य यत् फलम् ॥　　२७॥
ते पृष्टा यदुसिंहेन कुरुक्षेत्रफलं विभो ।
समाचख्युर्महात्मानस् तस्मै सर्वं यथातथम् ॥　　२८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ ७७ ॥ सारस्वतपर्वणि अष्टादशोऽध्यायः ॥ १८॥
[ अस्मिन्नध्याये २८॥ श्लोकाः ]

---

1. क-ख—द्वौ चाब्दौ　　घ—द्वावब्दौ

## ॥ अष्टचत्वारिंशोऽध्यायः ॥



बलभद्राय महर्षिभिः कुरुक्षेत्रमहिमानुवर्णनम् ॥



ऋषयः—

प्रजापतेरुत्तरवेदिरुच्यते
सनातनं राम समन्तपञ्चकम् ।
समीजिरे यत्र दिवौकसः पुरा
परेण सत्रेण महावरप्रदाः ॥ १

पुरा हि राजर्षिवरेण धीमता
बहूनि वर्षाण्यमितेन तेजसा ।
प्रकृष्टमेतत् कुरुणा महात्मना
ततः कुरुक्षेत्रमिहोच्यते बुधैः ॥ २

रामः—

किमर्थं कुरुणा कृष्टं क्षेत्रमेतन्महात्मना ।
एतदिच्छाम्यहं श्रोतुं कथ्यमानं तपोधनाः ॥ ३

ऋषयः—

पुरा किल कुरुं राम कृषन्तं सहसोत्थितम् ।
अभ्येत्य शक्रस्त्रिदिवात् पर्यपृच्छत कारणम् ॥ ४

इन्द्रः—

किमिदं वर्तते कर्म प्रयत्नेन परेण ह ।
राजर्षे किमभिप्रेतं यदियं कृष्यते मही ॥ ५

कुरुः—

इह ये पुरुषव्याघ्रा जनिष्यन्ति शतक्रतो ।
ते गमिष्यन्ति सुकृताँल्लोकान् पापविवर्जिताः ॥ ६

ऋषयः—

अपहास्य तु तं शक्रो जगाम त्रिदिवं पुनः ।
राजर्षिरप्यनिर्विण्णः कृपत्येव वसुन्धराम् ॥ ७

आगम्यागम्य चैवेह भूयो भूयोऽपहास्य च ।
शतक्रतुरनिर्विण्णं दृष्ट्वा दृष्ट्वा जगाम ह ॥ ८
यदा तु तपसोग्रेण चकर्ष वसुधां नृपः ॥ ८॥

ततश्शक्रोऽब्रवीद्देवान् राजर्षेर्यच्चिकीर्षितम् ।
तच्छ्रुत्वाथाब्रुवन् देवास् सहस्राक्षमिदं वचः ॥ ९॥

देवाः—

वरेण च्छन्द्यतां शीघ्रं राजर्षिर्यदि शक्यते ॥ १०

यदि ह्यत्र प्रसूता वै स्वर्गं गच्छन्ति मानवाः ।
अस्माननिष्ट्वा क्रतुभिर् भागो नो न भविष्यति ॥ ११

ऋषयः—

आगम्य तु ततश्शक्रस् तदा राजर्षिमब्रवीत् ॥ ११॥

इन्द्रः—

अलं खेदेन भवतः क्रियतां वचनं मम ॥ १२

मानवा ये निराहारा देहं त्यक्ष्यन्त्यतन्द्रिताः ।
युद्धे वा निहतास्सम्यग् अपि तिर्यग्गता नृप ॥ १३
ते स्वर्गभाजो राजेन्द्र भवन्त्विह महामते ॥ १३॥

ऋषयः—

तथाऽस्त्विति ततो राजा कुरुश्शक्रमुवाच ह ॥ १४

ततस्तमभ्यनुज्ञाप्य प्रहृष्टेनान्तरात्मना ।
जगाम त्रिदिवं भूयः क्षिप्रं बलनिषूदनः ॥ १५

एवमेतद्यदुश्रेष्ठ कृष्टं राजर्षिणा पुरा ।
शक्रेण चाभ्यनुज्ञातः पुण्ये प्राणान् मुमोच ह ॥ १६

अपि चात्र स्वयं शक्रो जगौ गाथां सुरेश्वरः ।
कुरुक्षेत्रनिबद्धां वै तां शृणुष्व हलायुध ॥ १७

इन्द्रः—

पांसवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणस् ते यान्ति परमां गतिम् ॥ १८

कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
इत्येवं निश्चितो भूत्वा तेनैव स्वर्गमेष्यति ॥ १९

[1]कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।

---

1. ख-क—इदमर्धं नास्ति

तथा स्थानं च मौनं च वीरासनमुपास्महे ॥ २०

एवं प्रलपमानोऽपि चिन्तयंश्च मुहुर्मुहुः ।
दूरस्थो यदि वा तिष्ठँल्लभेन् स्वर्गं सुनिश्चितम् ॥ २१

ऋषयः—

सुरर्षयो ब्राह्मणसत्तमाश्च
तथा नृगाद्या नरदेवमुख्याः ।
इष्ट्वा महार्हैः क्रतुभिर्नृसिंहास्
संन्यस्तदेहास्सुगतिं प्रपन्नाः ॥ २२

अरुन्दुकारुन्तुकयोर्यदन्तरं
रामह्रदानां च चमन्दुकस्य ।
एतत् कुरुक्षेत्रसमन्तपञ्चकं
पितामहस्योत्तरवेदिरुच्यते ॥ २३

इदं शिवं पुण्यतमं दिवौकसां
सुसम्मतं स्वर्गगुणैस्समन्वितम् ।
अतश्च सर्वेऽत्र वसुन्धराधिपा
हता गमिष्यन्ति महात्मनां गतिम् ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ ७७ ॥ सारस्वतपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[अस्मिन्नध्याये २४ श्लोकाः]

---

## ॥ एकोनपञ्चाशोऽध्यायः ॥



मित्रावरुणाश्रमे नारदाद्भीमदुर्योधनयोर्गदायुद्धोपक्रमश्राविणा बलरामेण तद्दिदृक्षया कुरुक्षेत्रं प्रत्यागमनम् ॥

---

वैशम्पायनः—

कुरुक्षेत्रं ततो गत्वा दत्त्वा देयांश्च सात्वतः ।
आश्रमं सुमहद्दिव्यम् अगमज्जनमेजय ॥ १

मधूकाम्रवणोपेतं प्लक्षन्यग्रोधसङ्कुलम् ।
चिरबिल्वयुतं पुण्यं पनसार्जुनसंयुतम् ॥ २

तं दृष्ट्वा यादवश्रेष्ठः प्रवरं पुण्यलक्षणम् ।
पप्रच्छ तानृषीन् सर्वान् कस्यायं ह्याश्रमो वरः ॥ ३

ते च सर्वे महात्मानम् ऊचू राजन् हलायुधम् ॥ ३॥

ऋषयः—

शृणु विस्तरशो राम यस्यायं पूर्वमाश्रमः ।
अत्र विष्णुः पुरा देवस् तप्तवांस्तप उत्तमम् ॥ ४॥

अत्रास्य विधिवद्यज्ञास् सर्वे वृत्ताः पुरातनाः ॥ ५

[1]अत्रैव ब्राह्मणी वृद्धा कौमारब्रह्मचारिणी ।
योगयुक्ता दिवं याता तपोयुक्ता विशां पते ॥ ६

---

1. अ—अर्धद्वयं नास्ति

बभूव श्रीमती राजञ् शाण्डिल्यस्य महात्मनः ।
सुता धृतव्रता साध्वी नियता ब्रह्मचारिणी ॥ ७

साऽपि प्राप्य परं योगं गत्वा स्वर्गमनुत्तमम् ।
भुक्त्वाऽऽश्रमेऽश्वमेधस्य फलं फलवतश्शुभम् ॥ ८

गता स्वर्गं महाराज पूजिता च महात्मभिः ॥ ८॥

अभिगम्याश्रमं पुण्यं स दृष्ट्वा यदुनन्दनः ।
ऋषींस्तानभिवाद्याथ पार्श्वे हिमवतोऽच्युतः ॥ ९॥

सन्ध्याकर्माणि सर्वाणि निर्वर्त्यारुरुहेऽचलम् ॥ १०

नातिदूरं ततो गत्वा रामस्तालध्वजो बली ।
[1]पुण्ये तीर्थवरे स्नात्वा विस्मयं परमं गतः ॥ ११

प्रभवं स सरस्वत्याः प्लक्षप्रस्रवणं बलः ।
सम्प्राप्तः कारपचनं तीर्थप्रवरमुत्तमम् ॥ १२

हलायुधस्तु तत्रापि दत्त्वा दानं महाबलः ।
आप्लुतस्सलिले शीते तस्माच्चापि जगाम ह ॥ १३

आश्रमं परमप्रीतो मित्रस्य वरुणस्य च ॥ १३॥

[2]इन्द्राग्नी अर्यमा चैव यत्र प्राक् प्रीतिमाप्नुवन् ।
तं देशं कारपचनं [3]स तस्मादाजगाम ह ॥ १४॥

1. अ—नास्तीदमर्धम् 2. अ—नास्तीदमर्धम्
3. ख—यमुनायां जगाम ह

स्नात्वा तत्रापि धर्मात्मा परां तुष्टिमवाप्य च ।
ऋषिभिश्चैव सिद्धैश्च सहितो वै महाबलः ॥ १५॥

उपविष्टः कथाश्शुभ्राश् शुश्राव यदुनन्दनः ॥ १६

तथा तु तिष्ठतां तेषां नारदो भगवान् ऋषिः ।
आजगामाथ तं देशं यत्र रामो व्यवस्थितः ॥ १७

जटामाण्डलसंवीतः कुशचीरी महायशाः ।
हेमदण्डधरो राजन् कमण्डलुधरस्तथा ॥ १८

[1]महतीं सुखशब्दां तां गृह्य वीणां मनोरमाम् ।
नृत्ये गीते च कुशलो देवब्राह्मणपूजकः ॥ १९

प्रेरकः कलहानां च नित्यं च कलहप्रियः ।
तं देशमगमच्छ्रीमान् यत्र रामो हलायुधः ॥ २०

प्रत्युत्थाय तु तं रामः पूजयित्वा यतव्रतम् ।
देवर्षिं पर्यपृच्छत्तं यथावृत्तं कुरून् प्रति ॥ २१

तदाऽस्याकथयद्राजन् नारदस्सर्ववेदवित् ।
सर्वमेव यथातत्वम् अतीतं कुरुसङ्क्षयम् ॥ २२

ततोऽब्रवीद्रौहिणेयो नारदं दीनया गिरा ॥ २२॥

रामः—

किमवस्थं तु तत् क्षत्रं ये च तत्राभवन् नृपाः ।

1. अ-ख—काच्छपीं

श्रुतमेतन्मया पूर्वं सर्वमेव तपोधन ॥　　२३॥
विस्तरश्रवणे जातं कौतूहलमतीव मे ॥　　२४

नारदः—

पूर्वमेव हतो भीष्मो द्रोणस्सेनापतिस्तथा ।
हतो वैकर्तनः कर्णः पुत्राश्चास्य महाबलाः ॥　　२५

भूरिश्रवा रौहिणेय मद्रराजश्च वीर्यवान् ।
एते चान्ये च बहवो हतास्तत्र महाबलाः ॥　　२६

प्रियान् प्राणान् परित्यज्य प्रियार्थं कौरवस्य वै ।
राजानो राजपुत्राश्च समरेष्वनिवर्तिनः ॥　　२७

अहतास्तु महाबाहो शृणु ये तत्र माधव ॥　　२७॥

धार्तराष्ट्रे बले शेषाः कृपो भोजश्च वीर्यवान् ।
अश्वत्थामा च विक्रान्तो भग्नसैन्या दिशो गताः ॥　　२८॥

दुर्योधनो हते सैन्ये विद्रुतेषु पदातिषु ।
ह्रदं द्वैपायनं नाम विवेश भृशदुःखितः ॥　　२९॥

शयानं धार्तराष्ट्रं तु स्तम्भिते सलिले तदा ।
पाण्डवास्सह कृष्णेन वाग्भिरुग्राभिरार्दयन् ॥　　३०॥

स तुद्यमानो बलवान् वाग्भी राम समन्ततः ।
उत्थितोऽभूद्ध्रदाद्वीरः प्रगृह्य महतीं गदाम् ॥　　३१॥

स चाभ्युपागतो युद्धं भीमसेनेन साम्प्रतम् ।

भविष्यति हि तत्त्वद्य तयो राम सुदारुणम् ॥ ३२॥

यदि कौतूहलं तेऽस्ति व्रज माधव मा चिरम् ।
पश्य युद्धं महाघोरं शिष्ययोर्यदि मन्यसे ॥ ३३॥

वैशम्पायनः—

स नारदवचश्श्रुत्वा तानभ्यर्च्य द्विजर्षभान् ।
सर्वान् विसर्जयामास ये तेनानुगतास्सह ॥ ३४॥

गम्यतां द्वारकां चेति सोऽन्वशादनुयायिनः ॥ ३५

सोऽवतीर्याचलश्रेष्ठात् प्लक्षप्रस्रवणात् ततः ।
स तु प्रीतमना रामश् श्रुत्वा तीर्थवरं महत् ॥ ३६
विप्राणामग्रतश्श्लोकम् अगायदमितद्युतिः ॥ ३६॥

रामः—

सरस्वतीवाससमा कुतो रतिस्
सरस्वतीवाससमाः कुतो गुणाः ।
सरस्वतीहीनविदेशवासिनस्
सदा स्मरिष्यन्ति सरस्वतीं नदीम् ॥ ३७॥

सरस्वती सर्वनदीषु पुण्या
सरस्वती लोकसुखावहा च ।
सरस्वतीं प्राप्य नरास्सुदुष्कृतस्
सदा न शोचन्ति परत्र चेह च ॥ ३८॥

वैशम्पायनः—

ततो मुहुर्मुहुर्भक्त्या प्रेक्षमाणस्सरस्वतीम् ।
हयैर्युक्तं रथं शीघ्रम् आरुरोह परन्तपः ॥ ३९॥

स शीघ्रगामिना तेन रथेन यदुपुङ्गवः ।
दिदृक्षुरभिसम्प्राप्तश्_ शिष्ययुद्धमुपस्थितम् ॥ ४०॥

एवं तद्युद्धमभवत् तुमुलं जनमेजय ।
यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ ४१॥

धृतराष्ट्रः—

रामं सन्निहितं श्रुत्वा गदायुद्ध उपस्थिते ।
मम पुत्रः कथं भीमं प्रत्ययुध्यत सञ्जय ॥ ४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ ७७ ॥ सारस्वतपर्वणि विंशोऽध्यायः ॥ २० ॥
[अस्मिन्नध्याये ४२॥ श्लोकाः]
[सारस्वतपर्व समाप्तम्]

———

## ॥ पञ्चाशोऽध्यायः ॥

( गदायुद्धपर्वशेषः )*

गदायुद्धाय संनद्धयोर्भीमदुर्योधनयोर्वर्णनम् ॥

सञ्जयः—

रामसान्निध्यमागम्य पुत्रो दुर्योधनस्तव ।
योद्धुकामो महाबाहुस् समहृष्यत वीर्यवान् ॥ १

दृष्ट्वा लाङ्गलिनं राजा प्रत्युत्थाय च भारत ।
प्रीत्या परमया युक्तो युधिष्ठिरमथाब्रवीत् ॥ २

दुर्योधनः—

समन्तपञ्चकं पुण्यम् इतो याम विशां पते ।
प्रथितोत्तरवेदिस्सा ब्रह्मलोके प्रजापतेः ॥ ३

तस्मिन् ध्रुवे पुण्यतमे त्रैलोक्यस्य सनातने ।
सङ्ग्रामे निधनं प्राप्य ध्रुवं स्वर्गं गमिष्यति ॥ ४

सञ्जयः—

तथेत्युक्त्वा महाराज कुन्तीपुत्रो युधिष्ठिरः ।
समन्तपञ्चकं वीरः प्रायादभिमुखः प्रभुः ॥ ५

---

* गदायुद्धपर्वपूर्वभागः एकोनत्रिंशेऽध्याये वर्तते

ततो दुर्योधनो राजन् प्रगृह्य महतीं गदाम् ।
पद्भ्याममर्षी द्युतिमान् अगच्छन् पाण्डवैस्सह ॥ ६

तथा यान्तं गदाहस्तं वर्मिणं चापि दंशितम् ।
अन्तरिक्षचरा देवास् साधु साध्वित्यपूजयन् ॥ ७

वादकाश्च नरास्तत्र दृष्ट्वा ते हर्षमागताः ॥ ७॥

स पाण्डवैः परिवृतः कुरुराजस्तवात्मजः ।
मत्तस्येव गजेन्द्रस्य गतिमास्थाय सोऽव्रजत् ॥ ८॥

ततश्शङ्खनिनादैश्च भेरीणां च महास्वनैः ।
सिंहनादैश्च शूराणां दिशस्सर्वाः प्रपूरिताः ॥ ९॥

प्रतीच्यभिमुखं देशं यथोद्दिष्टं सुतेन ते ।
गत्वा च तैः परिक्षिप्तं समन्तात् सर्वतोदिशम् ॥ १०॥

दक्षिणेन सरस्वत्यास् स्वयं तत्तीर्थमुत्तमम् ।
तस्मिन् देशे त्वतिरथास् तत्र युद्धमरोचयन् ॥ ११॥

ततो भीमो महाकोटिं गदां गृह्य च धर्मधृत् ।
बिभ्रद्रूपं महाराज सदृशं हि गरुत्मतः ॥ १२॥

अवबद्धशिरस्त्राणश् शुद्धकाञ्चनवर्मधृक् ।
रराज राजन् पुत्रस्ते काञ्चनश्शैलराडिव ॥ १३॥

तद्यथा सङ्गतौ वीरौ भीमदुर्योधनावुभौ ।
संयुगे सम्प्रकाशेते संरब्धाविव कुञ्जरौ ॥ १४॥

रथमण्डलमध्यस्थौ भ्रातरौ भरतर्षभौ ।
अशोभेतां महाराज चन्द्रसूर्याविवोदितौ ॥ १५॥

तावन्योन्यं निरीक्षन्तौ क्रुद्धाविव महोरगौ ।
दहन्तौ लोचनैर्वीरौ परस्परववैषिणौ ॥ १६॥

सम्प्रहृष्टमना राजन् गदामादाय पाण्डवः ।
सृक्किणी सँल्लिहन् राजन् क्रोधताम्रेक्षणश्श्वसन् ॥ १७॥

ततो दुर्योधनो राजन् गदामादाय भारत ।
भीमो भीममभिप्रेक्ष्य गजो गजमिवाह्वयत् ॥ १८॥

अद्रिसारमयीं वीरस् तथैवादाय वेगवान् ।
आह्वयामास नृपतिं सिंहं सिंहो यथा वने ॥ १९॥

तावुद्यतगदापाणी दुर्योधनवृकोदरौ ।
संयुगे सम्प्रकाशेते गिरी सशिखराविव ॥ २०॥

तावुभावपि सङ्क्रुद्धावुभौ भीमपराक्रमौ ।
उभौ शिष्यौ गदायुद्धे रौहिणेयस्य धीमतः ॥ २१॥

उभौ सदृशकर्माणौ वरुणस्य महाबलौ ।
वासुदेवस्य रामस्य तथा वैश्रवणस्य च ॥ २२॥

[1]सदृशौ तौ महाराज मधुकैटभयोरपि ।
उभौ सदृशकर्माणौ रणे सुन्दोपसुन्दयोः ॥ २३॥

---

1. अ—नास्तीदमर्धम्

तथैव कालस्य सदृशौ मृत्योश्चैव परन्तपौ ।
अन्योन्यमभिगर्जन्तौ मत्ताविव महागजौ ॥ २४॥

वाशितासङ्गमे दृप्तौ शरदीव मदोत्कटौ ।
[1]मत्ताविव जिगीषन्तौ मातङ्गौ भरतर्षभौ ॥ २५॥

उभौ क्रोधविषं तीव्रं वमन्तावुरगाविव ।
अन्योन्यमभिसंरब्धौ प्रेक्षमाणावरिन्दमौ ॥ २६॥

उभौ भरतशार्दूलौ विक्रमेण बलेन च ।
सिंहाविव दुराधर्षौ गदायुद्धे परन्तपौ ॥ २७॥

नखदंष्ट्रायुधौ वीरौ सिंहाविव दुरुत्सहौ ।
प्रजासंहरणे क्षुब्धौ समुद्राविव दुस्तरौ ॥ २८॥

लोहिताङ्गाविव क्रुद्धौ प्रतपन्तौ महारथौ ।
रश्मिमन्तौ महात्मानौ गदाहस्तौ विशां पते ॥ २९॥

उभौ परमसंहृष्टावुभौ परमसम्मतौ ।
सदश्वाविव हेषन्तौ बृंहन्तौ कुञ्जराविव ॥ ३०॥

वृषभाविव गर्जन्तौ दुर्योधनवृकोदरौ ।
दैत्याविव बलोन्मत्तौ रेजतुस्तौ नरोत्तमौ ॥ ३१॥

ततो दुर्योधनो राजन्निदमाह युधिष्ठिरम् ।
सृञ्जयैस्सह तिष्ठन्तं तपन्तमिव भास्करम् ॥ ३२॥

1. अ—नास्तीदमर्धम्

दुर्योधनः—

इदं व्यवसितं युद्धं मम भीमस्य चोभयोः ।
उपोपविष्टाः पश्यध्वं विमर्दं नृपसत्तमाः ॥ ३३॥

सञ्जयः—

ततस्समुपविष्टं तत् सुमहद्राजमण्डलम् ।
विराजमानं ददृशे दिवीवादित्यमण्डलम् ॥ ३४॥

तेषां मध्ये महाबाहुश् श्रीमान् केशवपूर्वजः ।
उपविष्टो महाराज पूज्यमानः पुनः पुनः ॥ ३५॥

शुशुभे राजमध्यस्थो नीलवासास्सितप्रभः ।
नक्षत्रैरिव सम्पूर्णो वृतो निशि निशाकरः ॥ ३६॥

तौ तदा तु महाराज गदाहस्तौ दुरासदौ ।
अन्योन्यं वाग्भिरुग्राभिस् तक्षमाणौ व्यवस्थितौ ॥ ३७॥

अप्रियाणि तथाऽन्योन्यम् उक्त्वा तौ नरपुङ्गवौ ।
उदीक्षन्तौ स्थितौ वीरौ वृत्रशक्राविवाहवे ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
॥ ७६ ॥ गदायुद्धपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ३८॥ श्लोकाः]

## ॥ एकपञ्चाशोऽध्यायः ॥

भीमदुर्योधनयोर्वीरवादः ॥ १ ॥ भीमदुर्योधनयोर्गदायुद्धवर्णनम् ॥ २ ॥

वैशम्पायनः—

ततो वाग्युद्धमभवत् तुमुलं जनमेजय ।
यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ १

धृतराष्ट्रः—

धिगस्तु खलु मानुष्यं यस्य निष्ठेयमीदृशी ।
एकादशचमूभर्ता यत्र पुत्रो ममाभिभूः ॥ २

आज्ञाप्य सर्वान् नृपतीन् भुक्त्वा च पृथिवीमिमाम् ।
गदामादाय चैकाकी पदातिः प्रस्थितो रणम् ॥ ३

भूत्वा हि जगतो नाथस् सोऽनाथ इव मे सुतः ।
गदामादाय यो याति किमन्यद्भागधेयतः ॥ ४

अहो दुःखं महत् प्राप्तं पुत्रेण मम सञ्जय ॥ ४॥

वैशम्पायनः—

एवमुक्त्वा स दुःखार्तो विरराम जनाधिपः ॥ ५

सञ्जयः—

स मेघनिस्वनो हर्षाद् विनदन्निव गोवृषः ।
आजुहाव ततः पार्थं युद्धाय युधि वीर्यवान् ॥ ६

भीममाह्वयमाने तु कुरुराजे महात्मनि ।
प्रादुरासन् सुघोराणि रूपाणि विविधान्युत ॥ ७

ववुर्वातास्सनिर्घाताः पांसुवर्षं पपात ह ।
बभूवुश्च दिशस्सर्वास् तिमिरेण समावृताः ॥ ८

महास्वनास्सुनिर्घातास् तुमुला रोमहर्षणाः ।
पेतुः पृथिव्यां शतशस् स्फोटयन्तो नभस्तलात् ॥ ९

राहुरग्रसदादित्यम् अपर्वणि विशां पते ।
चकम्पे च महाकम्पं पृथिवी सवनद्रुमा ॥ १०

रूक्षाश्च वाताः प्रववुर् नीचैश्शर्करकर्षिणः ॥
गिरीणां शिखराण्याशु न्यपतन्त महीतले ॥ ११

मृगा बहुविधाकारास् सम्पतन्ति दिशो दश ।
दीप्ताश्शिवाश्च प्रणदन् दारुणं भयवेदिनः ॥ १२

निर्घाताश्च महाघोरा बभूवू रोमहर्षणाः ।
दीप्तायां दिशि राजेन्द्र मृगाश्चाशुभवादिनः ॥ १३

उदपानगताश्चापो व्यवर्धन्त समन्ततः ।
अशरीरा महानादाश् श्रूयन्ते स्म भयानकाः ॥ १४

एवमादीनि दृष्ट्वा स निमित्तानि वृकोदरः ।
उवाच भ्रातरं ज्येष्ठं धर्मराजं युधिष्ठिरम् ॥ १५

भीमः—

एष शक्यो रणे जेतुं मन्दात्मा च सुयोधनः ॥ १५॥

अद्य क्रोधं विमोक्ष्यामि निगूढं हृदये स्थितम् ।
सुयोधने कौरवेन्द्रे खाण्डवेऽग्निमिवार्जुनः ॥ १६॥

शल्यमद्योद्धरिष्यामि तव पाण्डव हृद्गतम् ।
निहत्य गदया पापम् इमं कुरुकुलान्तकम् ॥ १७॥

अद्य कीर्तिमयीं मालां प्रतिमोक्ष्याम्यहं त्वयि ।
हत्वेमं पापकर्माणं गदया रणमूर्धनि ॥ १८॥

अस्योरू गदया राजन् भेत्तास्मि समरेऽनया ।
नायं प्रवेष्टा नगरं पुनर्वारणसाह्वयम् ॥ १९॥

सर्पोत्सर्गस्य शयने विषदानस्य भोजने ।
प्रमाणकोट्यां पातस्य दाहस्य जतुवेश्मनि ॥ २०॥

सभायामपहासस्य सर्वस्वहरणस्य च ।
वर्षमज्ञातवासस्य वनवासस्य चानघ ॥ २१॥
अद्यान्तमेषां दुःखानां गन्ता भरतसत्तम ॥ २२

एकाह्ना विनिहत्येमं भविष्याम्यात्मनोऽनृणः ॥ २२॥

अद्यास्य धार्तराष्ट्रस्य दुर्मतेरकृतात्मनः ।
समाप्तं भरतश्रेष्ठ मातापित्रोश्च दर्शनम् ॥ २३॥

अद्यायं कुरुराजस्य शन्तनोः कुलपांसनः ।

प्राणाञ्श्रियं च राज्यं च त्यक्त्वा शेष्यति भूतले ॥ २४॥

स राजा धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं मया हतम् ।
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ २५॥

सञ्जयः—

इत्युक्त्वा राजशार्दूल गदामुद्यम्य वीर्यवान् ।
अवातिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ २६॥

तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
भीमसेनः पुनः क्रोधाद् दुर्योधनमुवाच ह ॥ २७॥

भीमः—

राज्ञस्तु धृतराष्ट्रस्य तथा त्वमपि चात्मनः ।
स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते ॥ २८॥

द्रौपदी च परिक्लिष्टा सभायां यद्रजस्वला ।
द्यूतेन वञ्चितो राजा यत्त्वया सौबलेन च ॥ २९॥

वने दुःखं च सम्प्राप्तम् अस्माभिस्त्वत्कृतं महत् ।
विराटनगरे चैव योन्यन्तरगतैरिव ॥ ३०॥

तत् सर्वं यातयाम्यद्य दिष्ट्या दृष्टोऽसि दुर्मते ॥ ३१

त्वत्कृतेऽसौ हतश्शेते शरतल्पे पितामहः ।
[1]गाङ्गेयो रथिनां श्रेष्ठो रथिना याज्ञसेनिना ॥ ३२

1. अ—नास्तीदमर्धम्

हतो द्रोणश्च कर्णश्च तथा शल्यः प्रतापवान् ।
वैराग्नेरादिकर्ता च शकुनिस्सौबलो हतः ॥　　३३

प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः ।
भ्रातरस्ते हताश्शूरास् सर्वे विक्रान्तयोधिनः ॥　　३४

एते चान्ये च निहताः बहवस्त्वत्कृते नृपाः ।
त्वामप्यद्य हनिष्यामि गदया नात्र संशयः ॥　　३५

सञ्जयः—

इत्येवमुच्चै राजानं भाषमाणं वृकोदरम् ।
उवाच वीतभी राजन् पुत्रस्ते सत्यविक्रमः ॥　　३६

दुर्योधनः—

किं कत्थनेन बहुना युध्यस्वेह वृकोदर ।
अद्य तेऽहं विनेष्यामि युद्धश्रद्धां वृकोदर ॥　　३७

इति दुर्योधनोऽक्षुद्रस् त्वया क्षुद्रबलेन वै ।
शक्यस्त्रासयितुं वाचा न चान्यः प्राकृतो यथा ॥　　३८

चिरकालेप्सितं दिष्ट्या हृदयस्थमिदं मम ।
त्वया सह गदायुद्धं त्रिदशैरुपपादितम् ॥　　३९

किं वाचा बहुनोक्तेन कत्थितेन च दुर्मते ।
वाणी सङ्कोच्यतामेषा कर्मणा मा चिरं कृथाः ॥　　४०

सञ्जयः—

तस्य तद्वचनं श्रुत्वा सर्वे एवाभ्यपूजयन् ।
राजानस्सोमकाश्चैव ये तत्रासन् समागताः ॥ ४१

स तैस्सम्पूजितस्सर्वैस् सम्प्रहृष्टतनूरुहः ।
भूयो धीरं मनश्चक्रे युद्धाय कृतनिश्चयः ॥ ४२

तं मत्तमिव मातङ्गं तलतालैर्नराधिपाः ।
भूयस्संहर्षयामासुर् दुर्योधनममर्षणम् ॥ ४३

तं महात्मा महात्मानं गदामुद्यम्य पाण्डवः ।
अभिदुद्राव वेगेन तव पुत्रं वृकोदरः ॥ ४४

बृंहन्ति कुञ्जरास्तत्र हया ह्रेषन्ति चासकृत् ।
शस्त्राणि चाप्यदीप्यन्त पाण्डवानां जयैषिणाम् ॥* ४५

तदा दुर्योधनो राजा दृष्ट्वा भीमं तथाऽऽगतम् ।
प्रत्युद्ययावदीनात्मा वेगेन महता नदन् ॥ ४६

समासेदतुरायत्तौ शृङ्गिणौ वृषभाविव ।
महानिर्घातघोषश्च सन्निपाते तयोरभूत् ॥ ४७

अभवच्च तयोर्युद्धं तुमुलं रोमहर्षणम् ।
[1]जिघृक्षतोर्यथाऽन्योन्यम् इन्द्रप्रह्लादयोरिव ॥ ४८

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख-घ—जिगीषतो

रुधिरोक्षितसर्वाङ्गौ गदाहस्तौ मनस्विनौ ।
ददृशाते महात्मानौ सुपुष्पाविव किंशुकौ ॥　　४९

तदा तस्मिन् वर्तमाने गदायुद्धे सुदारुणे ।
खद्योतसङ्घैरिव खं दर्शनीयं व्यरोचत ॥　　५०

[1]तस्मिंस्तदा वर्तमाने सङ्कुले दारुणे भृशम् ।
[2]उभावपि परिश्रान्तौ युध्यमानावरिन्दमौ ॥　　५१

तौ मुहूर्तं समाश्वास्य [3]पुनरेव परन्तपौ ।
सम्प्रहारयतां चित्रे सम्प्रगृह्य गदे शुभे ॥　　५२

तौ तु दृष्ट्वा महासत्त्वौ समाश्वस्तौ नराधिप ।
बलिनौ वारणौ यद्वद् वाशितार्थे मदोत्कटौ ॥　　५३

अपारवीर्यौ सम्प्रेक्ष्य प्रगृहीतगदौ दृढौ ।
प्रहर्षं परमं जग्मुर् देवगन्धर्वदानवाः ॥　　५४

प्रगृहीतगदौ दृष्ट्वा दुर्योधनवृकोदरौ ।
संशयस्सर्वभूतानां विजये समपद्यत ॥　　५५

समागम्य ततो भूयो भ्रातरौ बलिनां वरौ ।
अन्योन्यस्यान्तरप्रेप्सू प्रचक्रातेऽन्तरं प्रति ॥　　५६

यमदण्डोपमां गुर्वीम् इन्द्राशनिसमस्वनाम् ।

---

1. अ-ङ—नास्तीदमर्धम्　　2. क—उभावप्यपरि
3. अ—अयं पादोऽनन्तरश्च न स्तः

दद्दृशुः प्रेक्षका राजन् रौद्रीं विशसनीं गदाम् ॥ ५७

आविध्यतो गदां तस्य भीमसेनस्य शुष्मिणः ।
शब्दस्सुतुमुलो घोरो मुहूर्तं समपद्यत ॥ ५८

आविध्यन्तमभिप्रेक्ष्य धार्तराष्ट्रोऽथ पाण्डवम् ।
गदामलघुवेगां तां विस्मितस्स बभूव ह ॥ ५९

चरंश्च विविधान् मार्गान् मण्डलानि च भागशः ।
अशोभत तदा वीरो भूय एव वृकोदरः ॥ ६०

तौ परस्परमासाद्य यत्तावन्योन्यरक्षणे ।
मार्जाराविव भक्षार्थे वितस्थाते मुहुर्मुहुः ॥ ६१

अचरद्भीमसेनस्तु मार्गान् बहुविधान् रणे ।
मण्डलानि विचित्राणि स्थानानि विविधानि च ॥ ६२

गोमूत्रिकाणि चित्राणि गतप्रत्यागतानि च ।
परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ ६३

अभिद्रवणमाक्षेपम् अवस्थानमवग्रहम् ।
[1]मत्स्योद्वृत्तं सोरुवृत्तम् अवप्लुतमथाप्लुतम् ॥ ६४

उपन्यस्तमपन्यस्तं गदायुद्धविशारदौ ।
एवं तौ विचरन्तौ तु परस्परमविध्यताम् ॥ ६५

वञ्चयन्तौ पुनश्चैव चेरतुः कुरुपाण्डवौ ॥ ६५॥

1. ख—परावृत्तं सुसंवृत्तमुपप्लुतमुपद्रुतम् । [पाठान्तरम्]

विक्रीडन्तौ सुबलिनौ मण्डलानि विचेरतुः ॥ ६६

गदाहस्तौ ततस्तौ तु मण्डलावस्थितौ युधि ।
दक्षिणं मण्डलं राजन् धार्तराष्ट्रोऽभ्यवर्तत ॥ ६७

वामं तु मण्डलं तत्र भीमसेनोऽभ्यवर्तत ॥ ६७॥

तथा विचरतस्तस्य भीमस्य रणमूर्धनि ।
दुर्योधनो महाराज पार्श्वदेशेऽभ्यताडयत् ॥ ६८॥

आहतस्तु ततो भीमस् तव पुत्रेण भारत ।
आविध्यत गदां गुर्वीं प्रहारं तमचिन्तयन् ॥ ६९॥

इन्द्राशनिसमां घोरां यमदण्डमिवोद्यताम् ।
ददृशुस्ते महाराज भीमसेनस्य तां गदाम् ॥ ७०॥

आविध्यन्तं गदां दृष्ट्वा भीमसेनं तवात्मजः ।
समुद्यम्य गदां घोरां प्रत्ययुध्यत कौरवः ॥ ७१॥

गदामारुतवेगेन तव पुत्रस्य भारत ।
शब्द आसीत् सुतुमुलस् तेजश्च समजायत ॥ ७२॥

स चरन् विविधान् मार्गान् मण्डलानि च भारत ।
समशोभत तेजस्वी भूयो भीमात् सुयोधनः ॥ ७३॥

आविद्धा भीमसेनेन सुभीमा महती गदा ।
सधूमं सार्चिषं चाग्निं मुमोचोग्रं महास्वनम् ॥ ७४॥

आधूतां भीमसेनेन गदां दृष्ट्वा सुयोधनः ।

अद्रिसारमयीं गुर्वीम् आविध्यन् बह्वशोभत ॥ ७५॥

गदां मारुतवेगां तां दृष्ट्वा तस्य महात्मनः ।
भयं पाण्डूनाविवेश सर्वानेव ससात्यकान् ॥ ७६॥

तौ दर्शयन्तौ समरे युद्धक्रीडां समन्ततः ।
गदाभ्यां सहसाऽन्योन्यम् आजघ्नतुररिन्दमौ ॥ ७७॥

तौ परस्परमासाद्य दन्ताभ्यां द्विरदौ यथा ।
अशोभेतां महाराज शोणितेन परिप्लुतौ ॥ ७८॥

एवं तदभवद्युद्धं घोररूपमसंवृतम् ।
परावृत्तेऽहनि क्रूरं वृत्रवासवयोरिव ॥ ७९॥

दृष्ट्वा व्यवस्थितं भीमं तव पुत्रो महारथः ।
चरंश्चित्रतरान् मार्गान् कौन्तेयं समभिद्रवत् ॥ ८०॥

तस्य भीमो महावेगां जाम्बूनदविभूषिताम् ।
अभिक्रुद्धस्य क्रुद्धस्तु ताडयामास तां गदाम् ॥ ८१॥

सविष्फुलिङ्गो निर्ह्रादस् तयोस्तत्राभिघातजः ।
प्रादुरासीन्महाराज घृष्टयोर्वज्रयोरिव ॥ ८२॥

वेगवत्या तया तत्र भीमसेनप्रमुक्तया ।
निपतन्त्या महाराज पृथिवी समकम्पत ॥ ८३॥

तां नामृष्यत कौरव्यो गदां प्रतिहतां रणे ।
मत्तो द्विप इव क्रुद्धः प्रतिकुञ्जरदर्शनात् ॥ ८४॥

स सव्यं मण्डलं राजन्नुद्भ्राम्य विगतक्लमः ।
आजघ्ने मूर्ध्नि कौन्तेयं गदया भीमवेगया ॥ ८५॥

तया त्वभिहतो भीमस् तव पुत्रेण पाण्डवः ।
नाकम्पत महाराज तदद्भुतमिवाभवत् ॥ ८६॥

[1]आश्चर्यं चापि तद्राजन् सर्वसैन्यान्यपूजयन् ।
यद्गदाभिहतो भीमो नाकम्पत पदात् पदम् ॥ ८७॥

ततो गुरुतरां दीप्तां गदां हेमपरिष्कृताम् ।
दुर्योधनाय व्यसृजत् तदद्भुतमिवाभवत् ॥ ८८॥

तं प्रहारमसम्भ्रान्तो लाघवेन महाबलः ।
मोघं दुर्योधनश्चक्रे तत्राभूद्विस्मयो महान् ॥ ८९॥

सा तु मोघा गदा राजन् पतन्ती भीमचोदिता ।
चालयामास पृथिवीं महानिर्घातनिस्स्वना ॥ ९०॥

आस्थाय कैशिकान् मार्गान् उत्पपात पुनः पुनः ।
गदानिपातं विज्ञाय भीमसेनमवञ्चयत् ॥ ९१॥

वञ्चयित्वा ततो भीमं गदया कुरुसत्तमः ।
अताडयदसम्भ्रान्तो वक्षोदेशे महाबलः ॥ ९२॥

गदयाऽभिहतो भीमो मुह्यमानो महारणे ।
नाभिजानाति कर्तव्यं पुत्रेणाभ्याहतस्तव ॥ ९३॥

---

1. अ—अर्धचतुष्टयं नास्ति

तस्मिंस्तथा गते भीमे राजन् सोमकपाण्डवाः ।
भृशोपहतसङ्कल्पा नातिप्रमनसोऽभवन् ॥ ९४॥

स तु तेन प्रहारेण मातङ्ग इव रोषितः ।
हस्तीव हस्तिसङ्काशम् अभिदुद्राव ते सुतम् ॥ ९५॥

ततस्सरभसो भीमो गदया तनयं तव ।
अभिदुद्राव वेगेन सिंहो वनगजं यथा ॥ ९६॥

उपसृत्य तु राजानं गदामोक्षविशारदः ।
आविध्यत गदां घोरां समुद्दिश्य सुतं तव ॥ ९७॥

अताडयद्भीमसेनः पार्श्वे दुर्योधनं तदा ।
स विह्वलः प्रहारेण जानुभ्यामवनिं गतः ॥ ९८॥

तस्मिंस्तु भरतश्रेष्ठे जानुभ्यामवनीं गते ।
[1]उदतिष्ठन्महानादस् सृञ्जयानां जगत्पते ॥ ९९॥

तेषां तु निनदं श्रुत्वा सृञ्जयानां जनाधिपः ।
अमर्षाद्भरतश्रेष्ठः पुत्रस्ते समकुप्यत ॥ १००॥

उत्थाय तु महाबाहुः क्रुद्धो नाग इव श्वसन् ।
दिधक्षन्निव नेत्राभ्यां भीमसेनमवैक्षत ॥ १०१॥

ततस्स भरतश्रेष्ठो भीमसेनमभिद्रवत् ।
प्रमथिष्यन्निव शिरो भीमसेनस्य संयुगे ॥ १०२॥

1. क—अर्धद्वयं नास्ति

स महात्मा महात्मानं भीमसेनमरिन्दमम् ।
अताडयच्छङ्खदेशे स चचालाचलोपमः ॥　　१०३॥

भूयस्स शुशुभे पार्थस् ताडितो गदया भृशम् ।
उद्भिन्नरुधिरो राजन् प्रभिन्न इव कुञ्जरः ॥　　१०४॥

ततो गदां वीरहणीमयस्मयीं
प्रगृह्य वज्राशनितुल्यनिस्स्वनाम् ।
अताडयच्छत्रुममित्रकर्शनो
बलेन विक्रम्य धनञ्जयाग्रजः ॥　　१०५॥

स भीमसेनाभिहतस्तवात्मजः
पपात सङ्कम्पितदेहबन्धनः ।
सुपुष्पितो मारुतवेगताडितो
वने महासाल इवावचूर्णितः ॥　　१०६॥

ततः प्रणेदुर्जहृषुश्च पाण्डवास्
समीक्ष्य पुत्रं पतितं क्षितौ तव ।
ततस्सुतस्ते प्रतिलभ्य चेतनां
समुत्पपात द्विरदो ह्रदादिव ॥　　१०७॥

स पार्थिवो नित्यममर्षितस्तदा
महारथश्शिक्षितवत् परिभ्रमन् ।

अताडयत् पाण्डवमग्रतस्स्थितं
स विह्वलाङ्गो जगतीमुपास्पृशत् ॥ १०८॥

स सिंहनादान् विननाद पार्थिवो
निपात्य भूमौ युधि भीममोजसा ।
बिभेद चेन्द्राशनितुल्यतेजसा
गदानिपातेन शरीररक्षणम् ॥ १०९॥

ततोऽन्तरिक्षे निनदो महानभूद्
दिवौकसामप्सरसां निषेदुषाम् ।
पपात चोच्चैरमरप्रचोदितं
विचित्रपुष्पोत्करवर्षमुत्तमम् ॥ ११०॥

ततः परानाविशदुत्तमं भयं
समीक्ष्य भीमं पतितं नरर्षभम् ।
अहीयमानं च बलेन कौरवं
निशाम्य भेदं च दृढस्य वर्मणः ॥ १११॥

ततो मुहूर्तात् प्रतिलभ्य चेतनां
प्रमृज्य वक्त्रं रुधिरार्द्रमात्मनः ।
धृतिं समालम्ब्य विवृत्तलोचनो
बलेन संस्तभ्य वृकोदरस्स्थितः ॥ ११२॥

ततो यमौ यमसदृशौ पराक्रमे
　　सपार्षतश्शिनितनयश्च वीर्यवान् ।
समाह्वयन्नहमहमित्यभित्वरंस्
　　तवात्मजं समभिययुर्जयैषिणः ॥　　११३॥

निगृह्य तान् पुनरपि पाण्डवो बली
　　तवात्मजं स्वयमभिगम्य कालवत् ।
चचार च व्यपगतखेदवेपथुस्
　　सुरेश्वरो नमुचिमिवोत्तमं रणे ॥　　११४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ ७८ ॥ गदायुद्धपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ११४॥ श्लोकाः]

---

## ॥ द्विपञ्चाशोऽध्यायः ॥

भीमसेनेन दुर्योधनस्योरुभेदनम् ॥

---

सञ्जयः—

समुदीर्णं ततो दृष्ट्वा सङ्ग्रामं कुरुमुख्ययोः ।
अब्रवीदर्जुनस्तत्र वासुदेवं यशस्विनम् ॥
अनयोर्वीरयोर्युद्धे को ज्यायान् भवतो मतः ।

कस्य को वा गुणो ज्यायान् एतद्वद जनार्दन ॥ २

श्रीभगवान्—

उपदेशोऽनयोस्तुल्यो भीमस्तु बलवांस्ततः ।
कृती यत्नपरस्त्वेष धार्तराष्ट्रो वृकोदरात् ॥ ३

भीमसेनस्तु धर्मेण युध्यमानो न जेष्यति ।
अन्यायेन तु युध्यन् वै हन्यादेष सुयोधनम् ॥ ४

मायया विजिता देवैर् असुरा इति नश्श्रुतम् ।
[1]वैरोचनिस्तु शक्रेण मायया विजितस्तु वै ॥ ५

मायया चाक्षिपत् तेजो वृत्रस्य बलसूदनः ।
तस्मान्मायामयं वीर आतिष्ठतु वृकोदरः ॥ ६

प्रतिज्ञातं हि भीमेन द्यूतकाले धनञ्जय ।
ऊरू भेत्स्यामि ते युद्धे गदयेति सुयोधनम् ॥ ७

सोऽयं प्रतिज्ञां तां चापि पारयित्वाऽरिकर्शनः ।
मायाविनं च राजानं माययैव निकृन्ततु ॥ ८

यद्येष बलमास्थाय न्यायेन प्रहरिष्यति ।
विषमस्थस्ततो राजा भविष्यति युधिष्ठिरः ॥ ९

पुनरुक्तं च वक्ष्यामि पाण्डवैतन्निबोध मे ।
धर्मराजापराधेन भयं नस्समुपस्थितम् ॥ १०

---

1. व—अर्धपञ्चकं नास्ति

कृत्वा हि सुमहत् कर्म हत्वा भीष्ममुखान् रिपून् ।
जयः प्राप्तो यशश्चाग्र्यं वैरं च प्रतियाततिम् ॥ ११

तदेवं विजयः प्राप्तः पुनस्संशयितः कृतः ॥ ११॥

अबुद्धिरेषा महती धर्मराजस्य पाण्डव ।
यदेकविजये वीर पणितं कृतमीदृशम् ॥ १२॥

सुयोधनः कृती वीर एकायनगतस्तथा ।
अपि चोशनसा गीतश् श्रूयते यः पुरातनः ॥ १३॥

श्लोकस्तत्त्वार्थसहितस् तन्मे निगदतश्शृणु ॥ १४

पुनरावर्तमानानां भग्नानां विजयैषिणाम् ।
भेतव्यमरिशेषाणाम् एकायनगता हि ते ॥ १५

सुयोधनमिमं भग्नं हतसैन्यं ह्रदं गतम् ।
पराजितं वनप्रेप्सुं निराशं राज्यधारणे ॥ १६

कोऽन्विष्य संयुगे प्राज्ञः पुनर्द्वन्द्वे समाह्वयेत् ॥ १६॥

अपि वो निर्जितं राज्यं न हरेत सुयोधनः ॥ १७

यस्त्रयोदशवर्षाणि गदया कृतनिश्रमः ।
चरत्यूर्ध्वं च तिर्यक् च भीमसेनजिघांसया ॥ १८

एनं चेन्न महाबाहुर् अन्यायेन हनिष्यति ।
एष वः कौरवो राजा धार्तराष्ट्रो भविष्यति ॥ १९

सञ्जयः—

धनञ्जयस्तु श्रुत्वैवं केशवस्य महात्मनः ।
प्रेक्षतो भीमसेनस्य हस्तेनोरुमताडयत् ॥ २०

गृह्य संज्ञां ततो भीमो गदया व्यचरद्रणे ।
मण्डलानि विचित्राणि यमकानीतराणि च ॥ २१

दक्षिणं मण्डलं सव्यं गोमूत्रिकमथापि च ।
व्यचरत् पाण्डवो राजन्नरिं सम्मोहयन्निव ॥ २२

तथैव तव पुत्रोऽपि गदामार्गविशारदः ।
व्यचरल्लघु चित्रं च भीमसेनजिघांसया ॥ २३

आधुन्वन्तौ गदे घोरे चन्दनागरुरूषिते ।
वैरस्यान्तं परीप्सन्तौ रणे क्रुद्धाविवान्तकौ ॥ २४

अन्योन्यं तौ जिघांसन्तौ प्रवीरौ पुरुषर्षभौ ।
युयुधाते गरुत्मन्तौ यथा नागामिषैषिणौ ॥ २५

मण्डलानि विचित्राणि चरतोर्नृपभीमयोः ।
[1]गदासम्पातजास्तत्र जज्ञिरे पावकार्चिषः ॥ २६

समं प्रहरतोस्तत्र शूरयोर्बलिनोर्मृधे ।
क्षुब्धयोर्वायुना राजन् द्वयोरिव समुद्रयोः ॥ २७

तयोः प्रहरतोस्तुल्यं मत्तकुञ्जरयोरिव ।

---

1. ख—कोश एकस्मिन्नेवेदमर्धलयं वर्तते

महानिर्घातसंह्रादः प्रहाराणामजायत ॥　　२८

तस्मिंस्तथा वर्तमाने दारुणे सङ्कुले भृशम् ।
उभावपि परिश्रान्तौ युध्यमानावरिन्दमौ ॥　　२९

तौ मुहूर्तं समाश्वस्य पुनरेव परन्तपौ ।
अभ्यहारयतां क्रुद्धौ प्रगृह्य महतीं गदाम् ॥　　३०

तयोस्समभवद्युद्धं घोररूपमसंवृतम् ।
गदानिपातै राजेन्द्र तक्षतोर्वै परस्परम् ॥　　३१

व्यायामप्रद्रुतौ तौ तु वृषभाक्षौ तरस्विनौ ।
अन्योन्यं जघ्नतुर्वीरौ पङ्कस्थौ महिषाविव ॥　　३२

जर्झरीकृतसर्वाङ्गौ रुधिरेण समुक्षितौ ।
ददृशाते हिमवतः पुष्पिताविव किंशुकौ ॥　　३३

दुर्योधनस्तु पार्थेन विवरे सम्प्रदर्शिते ।
ईषदुत्स्मयमानस्तु सहसैवाभिवारितः ॥　　३४

तमभ्याशगतं प्राज्ञः क्षणे प्रेक्ष्य वृकोदरः ।
अवाक्षिपद्गदां तस्मै वेगेन महता बली ॥　　३५

अवक्षेपं तु तं दृष्ट्वा पुत्रस्तव विशां पते ।
अपासर्पत् ततस्थानात् सा मोघा न्यपतद्भुवि ॥　　३६

मोक्षयित्वा प्रहारं तं पुत्रस्तव ससम्भ्रमम् ।
भीमसेनं तु गदया प्राहरत् कुरुनन्दनः ॥　　३७

तस्य विस्यन्दमानेन रुधिरेणामितौजसः ।
प्रहारगुरुघाताच्च मूर्छेव समजायत ॥ ३८

तन्नाबुध्यत पुत्रस्ते पीडितं पाण्डवं रणे ।
धारयामास भीमोऽपि शरीरमतिपीडितम् ॥ ३९

अमन्यत स्थितं वीरं प्रहरिष्यन्तमाहवे ।
अतो न प्राहरत् तस्मै पुनरेव तवात्मजः ॥ ४०

ततो मुहूर्तमाश्वास्य दुर्योधनमवस्थितम् ।
वेगेनाभ्यद्रवद्राजन् गदामादाय पाण्डवः ॥ ४१

तमापतन्तं सम्प्रेक्ष्य संरब्धममितौजसम् ।
मोघमस्य प्रहारं तं चिकीर्षुर्भरतर्षभ ॥ ४२

अवस्थाने मतिं कृत्वा पुत्रस्तव विशां पते ।
इयेषोत्पतितुं राजन् [1]वञ्चयिष्यन् वृकोदरम् ॥ ४३

अबुध्यद्भीमसेनस्तु राज्ञस्तस्य चिकीर्षितम् ।
अथास्य समभिद्रुत्य समुत्पत्य च सिंहवत् ॥ ४४

धृत्या वञ्चयतो राजन् पुनरेवोत्पतिष्यतः ।
ऊरुभ्यां प्राहिणोद्वीर्याद् गदां वेगेन पाण्डवः ॥ ४५

सा वज्रनिष्पेषसमा प्रहिता भीमकर्मणा ।
ऊरू दुर्योधनस्याथ बभञ्ज प्रियदर्शनौ ॥ ४६

1. क—दलयिष्यन् घ—छलयिष्यन्

स पपात नरव्याघ्रो वसुधामनुनादयन् ।
भग्नोरुर्भीमसेनेन पुत्रस्तव विशां पते ॥ ४७

ववुर्वातास्सनिर्घाताः पांसुवर्षं पपात च ।
चचाल पृथिवी चापि सवृक्षवनपर्वता ॥ ४८

तस्मिन् निपतिते वीरे पत्यौ सर्वमहीक्षिताम् ।
महास्वना पुनर्दीप्ता सनिर्घाता भयङ्करी ॥ ४९
पपात चोल्का महती पतिते पृथिवीपतौ ॥ ४९॥

अथ शोणितवर्षं च पांसुवर्षं च भारत ।
ववर्ष मघवांस्तत्र तव पुत्रे निपातिते ॥ ५०॥

[1]यक्षाणां राक्षसानां च पिशाचानां परन्तप ।
अन्तरिक्षे महान् नादस् तत्र भारत शुश्रुवे ॥ ५१॥

तेन शब्देन घोरेण मृगाणामथ पक्षिणाम् ।
जज्ञे घोरतरश्शब्दो बहूनां सर्वतोदिशम् ॥ ५२॥

ये तत्र वाजिनश्शेषा गजाश्च मनुजैस्सह ।
मुमुचुस्ते महानादं तव पुत्रे निपातिते ॥ ५३॥

भेरीशङ्खनिनादानाम् अभवच्च स्वनो महान् ।
अन्तर्भूमिगतो राजंस् तव पुत्रे निपातिते ॥ ५४॥

ह्रदाः कूपाश्च रुधिरम् उद्वमन्नृपसत्तम ।

---

1. ख—भेरीशङ्खनिनादानामभवच्च स्वनो महान् । [ अधिकः पाठः ]

[1]नद्यश्च सुमहावेगाः प्रतिस्रोतोवहा भवन् ॥ ५५॥

पुल्लिङ्गा इव नार्यश्च स्त्रीलिङ्गाः पुरुषा भवन् ।
दुर्योधने महाराज पतिते तनये तव ॥ ५६॥

दृष्ट्वा तानद्भुतोत्पातान् पाञ्चालाः पाण्डवैस्सह ।
आविग्नमनसस्सर्वे बभूवुर्नृपसत्तम ॥ ५७॥

ययुर्देवा यथाकामं गन्धर्वाप्सरसस्तथा ।
कथयन्तोऽद्भुतं युद्धम् उभयोस्तत्र भारत ॥ ५८॥

तथैव सिद्धा राजेन्द्र [2]तथा यक्षाश्च चारणाः ।
नरसिंहौ प्रशंसन्तौ विप्रजग्मुर्यथागतम् ॥ ५९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ ७६ ॥ गदायुद्धपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ५९॥ श्लोकाः ]

---

1. ब—अर्धपञ्चकं नास्ति
2. क-ब—तथावादिक ख—तथैव दिवि चारणाः

## ॥ त्रिपञ्चाशोऽध्यायः ॥

भीमसेनेन दुर्योधनापनयानुस्मारणपूर्वकं वामपादेन तच्छिरस्ताडनम् ॥ १ ॥ युधिष्ठिरेण दुर्योधनसमाश्वासनम् ॥ २ ॥

सञ्जयः—

पातितं तं तदा दृष्ट्वा महासालमिव च्युतम् ।
प्रहृष्टमनसस्सर्वे बभूवुस्तत्र पाण्डवाः ॥ १

तं मत्तमिव मातङ्गं सिंहेन विनिपातितम् ।
ददृशुर्हृष्टरोमाणः पाण्डवास्सृञ्जयैस्सह ॥ २

ततो दुर्योधनं हत्वा भीमसेनः प्रतापवान् ।
पातितं कौरवेन्द्रं तम् उपगम्येदमब्रवीत् ॥ ३

भीमः—

गौर्गौरिति पुरा मूढ द्रौपदीमेकवाससम् ।
यत् सभायां हसन्नस्मांस् तदा वदसि दुर्मते ॥ ४
तस्यापहासस्य फलम् अद्य त्वं समवाप्नुहि ॥ ४॥

सञ्जयः—

एवमुक्त्वा स वामेन पदा मौलिमवाक्षिपत् ।
शिरश्च राजसिंहस्य पादेन समताडयत् ॥ ५॥

तथैव क्रोधसंयुक्तो भीमः परबलार्दनः ।
पुनरेवाब्रवीद्वाक्यं यत्तच्छृणु नराधिप ॥ ६॥

भीमः—

येऽस्मान् पुरा प्रनृत्यन्ति पुनर्गौरिति गौरिति ।
तान् वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥ ७॥

नास्माकं निकृतिर्द्यूतं नाक्षद्यूतं न वञ्चना ।
स्वबाहुबलमाश्रित्य प्रबाधाम वयं रिपून् ॥ ८॥

सञ्जयः—

समाप्य वैरस्य परस्य पारं
वृकोदरः प्राह ततः प्रहस्य ।
युधिष्ठिरं केशवसृञ्जयांश्च
धनञ्जयं माद्रवतीसुतौ च ॥ ९॥

भीमः—

रजस्वलां द्रौपदीमानयन् ये
ये चाप्यकुर्वन्त सदस्यवस्त्राम् ।
तान् पश्यध्वं पाण्डवैर्धार्तराष्ट्रान्
रणे हतांस्तपसा याज्ञसेन्याः ॥ १०॥

ये नः पुरा षण्डतिलानवोचन्
क्रूरात्मानो धृतराष्ट्रस्य पुत्राः ।
ते नो हतास्सगणास्सानुबन्धाः
कामं स्वर्गं नरकं वा व्रजामः ॥ ११॥

सञ्जयः—

पुनश्च राज्ञः पतितस्य भूमौ
भीमो गदां स्कन्धगतां प्रगृह्य ।
वामेन पादेन शिरः प्रमथ्य
दुर्योधनं नैकृतिकेत्यवोचत् ॥ १२॥

हृष्टेन राजन् कुरुपार्थिवस्य
क्षुद्रात्मना भीमसेनेन पादम् ।
दृष्ट्वा कृतं मूर्ध्न्यथ नाभ्यनन्दन्
धर्मात्मानस्सोमकानां प्रबर्हाः ॥ १३॥

तव पुत्रं तथा हत्वा कत्थमानं वृकोदरम् ।
नृत्यमानं च बहुशो धर्मराजोऽब्रवीदिदम् ॥ १४॥

युधिष्ठिरः—

मा शीर्षेऽस्य पदा हन्या मा धर्मस्तेऽत्यगान्महान् ।
हतज्ञातिर्हतश्चायं नैतन्न्याय्यं तवानघ ॥ १५॥

विध्वस्तोऽयं हतामात्यो हतबन्धुर्हतात्मजः ।
उत्सन्नपिण्डो भ्राता च नैतन्न्याय्यं त्वया कृतम् ॥ १६॥

धार्मिको भीमसेनोऽयम् इत्याहुस्त्वां पुरातनाः ।
स कस्माद्भीमसेन त्वं राजानमधितिष्ठसि ॥ १७॥

सञ्जयः—

दृष्ट्वा दुर्योधनं राजा कुन्तीपुत्रस्तथागतम् ।

नेत्राभ्यामश्रुपूर्णाभ्याम् इत्युक्त्वा पुनरब्रवीत् ॥ १८॥

युधिष्ठिरः—

नूनमेतद्बलवता धात्राऽऽदिष्टं महात्मना ।
यद्वयं त्वां जिघांसामस् त्वं चास्मान् कुरुनन्दन ॥ १९॥

आत्मनो ह्यपराधेन महद्व्यसनमीदृशम् ।
प्राप्तवानसि लोभाच्च मदाद्बाल्याच्च भारत ॥ २०॥

घातयित्वा वयस्यांश्च भ्रातॄनपि पितॄंस्तथा ।
पुत्रान् पौत्रांस्तथाऽऽचार्यांस् ततोऽसि निधनं गतः ॥ २१॥

तवापराधादस्माभिर् भ्रातरस्ते महारथाः ।
निहता ज्ञातयश्चान्ये दिष्टं मन्ये दुरत्ययम् ॥ २२॥

स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य विह्वलाः ।
गर्हयिष्यन्ति [1]नो नूनं विधवाश्शोककर्शिताः ॥ २३॥

सञ्जयः—

एवमुक्त्वा सुदुःखार्तो निशश्वास स पार्थिवः ।
विललाप चिरं चापि धर्मसूनुर्युधिष्ठिरः ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ ७६ ॥ गदायुद्धपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये २४॥ श्लोकाः ]

---

1. क—ते नूनं ख—ता नूनं घ—तेऽनेन

## ॥ चतुष्पञ्चाशोऽध्यायः ॥

भीमे अपनयबुद्ध्या क्रुद्धेन बलरामेण लाङ्गलमुद्यम्य तं प्रत्यभिगमनम् ॥ १ ॥ कृष्णेन तत्सान्त्वनं ततो बलस्य द्वारकागमनम् ॥ २ ॥ युधिष्ठिरस्य कृष्णेन भीमेन च संलापः ॥ ३ ॥

---

धृतराष्ट्रः—

अधर्मेण हतं दृष्ट्वा राजानं माधवोत्तमः ।
किमब्रवीत् तदा सूत बलदेवो महाबलः ॥ १

गदायुद्धविशेषज्ञो गदायुद्धस्य पारगः ।
कृतवान् रौहिणेयो यत् तन्ममाचक्ष्व सञ्जय ॥ २

सञ्जयः—

शिरस्यभिहतं दृष्ट्वा भीमसेनेन ते सुतम् ।
रामः प्रहरतां श्रेष्ठश् चुकोप बलवद्बली ॥ ३

ततो मध्ये नरेन्द्राणाम् ऊर्ध्वबाहुर्हलायुधः ।
कुर्वन्नार्तस्वरं घोरं धिग्धिगिति चाब्रवीत् ॥ ४

बलदेवः—

अहो धिग्धिगधो नाभेः प्रहृतं सत्यविक्रमे ।
नैतद्दृष्टं गदायुद्धे कृतवान् यद्वृकोदरः ॥ ५

अधो नाभ्या न हन्तव्यम् इति शास्त्रस्य निश्चयः ।
अयं तु शास्त्रमूढस्तु स्वच्छन्दात् परिवर्तते ॥ ६

सञ्जयः—

तस्य तत्तद्ब्रुवाणस्य रोषस्समभवन्महान् ।
ततो लाङ्गलमुद्यम्य भीममभ्यद्रवद्बली ॥ ७

तस्योर्ध्वबाहोस्सदृशं रूपमासीन्महात्मनः ।
बहुधातुविचित्रस्य श्वेतस्येव महागिरेः ॥ ८

भ्रातृभिस्सहितो भीमस् सार्जुनैरस्त्रकोविदैः ।
न विव्यथे महाराज दृष्ट्वा हलधरं बली ॥ ९

अथ रामं निजग्राह केशवो विनयान्वितः ।
बाहुभ्यां पीनवृत्ताभ्यां प्रयत्नाद्बलिनं बली ॥ १०

सितासितौ यदुवरौ शुशुभातेऽधिकं ततः ।
[1]सङ्गताविव राजेन्द्र कैलासाञ्जनपर्वतौ ॥ ११

नभोगतौ यथा राजंश् चन्द्रसूर्यौ दिनक्षये ॥ ११॥
उवाच चैनं संरब्धं शमयन्निव केशवः ॥ १२

श्रीभगवान्—

आत्मवृद्धिर्मित्रवृद्धिर् मित्रमित्रोदयश्च यः ।
विपरीतं द्विषत्स्वेतत् षड्विधा वृद्धिरात्मनः ॥ १३

आत्मन्यमित्रेषु च यद् विपरीतं यदा भवेत् ।
यदि विद्यान्मनोज्योतिस् तदा शान्तिकरो भवेत् ॥ १४

1. ख—इदमर्धं नास्ति

अस्माकं सहजं मित्रं पाण्डवास्सत्यविक्रमाः ।
स्वकाः पितृष्वसुः पुत्राः परैश्च निकृता भृशम् ॥		१५

प्रतिज्ञापालनं धर्मः क्षत्रियस्येति वेत्थ तत् ॥		१५॥

सुयोधनस्य गदया भङ्क्तास्म्यूरू महाहवे ।
इति पूर्वं प्रतिज्ञातं भीमेन हि सभातले ॥		१६॥

मैत्रेयेणाभिशप्तश्च पूर्वमेव महर्षिणा ।
ऊरू भंक्ष्यति ते वीरो गदयेति परन्तप ॥		१७॥

अतो दोषं न पश्यामि मा क्रुधस्त्वं प्रलम्बहन् ॥		१८

यौनैर्जातैश्च सम्बन्धैस् सम्बद्धास्स्मेह पाण्डवैः ।
तेषां वृद्ध्या हि वृद्धिर्नो मा क्रुधस्त्वं नरर्षभ ॥		१९

सञ्जयः—

वासुदेववचश्श्रुत्वा सीरभृत् प्राह धर्मवित् ॥		१९॥

रामः—

धर्मस्सुधारितस्सद्भिस् सह द्वाभ्यां नियच्छति ।
अर्थश्चाप्यतिलुब्धस्य कामश्चातिप्रसङ्गिणः ॥		२०॥

धर्मार्थावर्थकामौ च कामार्थौ चाप्यपीडयन् ।
धर्मार्थकामान् योऽभ्येति सोऽत्यन्तं सुखमेधते ॥		२१॥

तदिदं व्याकुलं सर्वं कृतं धर्मस्य पीडनात् ।
भीमसेनेन गोविन्द कामं त्वं तु यथाऽऽत्थ माम् ॥		२२॥

श्रीभगवान्—

अरोषणोऽथ धर्मात्मा सततं धर्मवत्सलः ।
भवान् प्रख्यायते लोके तस्मात् संशाम्य मा क्रुधः ॥ २३॥

प्राप्तं कलियुगं विद्धि प्रतिज्ञां पाण्डवस्य च ।
आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः ॥ २४॥

गतः पुरुषशार्दूलो हत्वा नैकृतिकं रणे ॥ २५

निकृत्या निकृतिप्रज्ञं यो हन्याद्वैरिणं रणे ।
अधर्मो विद्यते नात्र यद्भीमो हतवान् रिपुम् ॥ २६

युध्यन्तं समरे वीरं कुरुवृष्णियशस्करम् ।
अनेन कर्णस्सान्दिष्टः पृष्ठतो धनुराच्छिनत् ॥ २७

ततस्सञ्छिन्नधन्वानं विरथं पौरुषे स्थितम् ।
व्यायुधीकृत्य हतवान् सौभद्रमपलायिनम् ॥ २८

जन्मप्रभृति लुब्धश्च पापश्चैष दुरात्मवान् ।
निहतो भीमसेनेन दुर्बुद्धिः कुलपांसनः ॥ २९

प्रतिज्ञां भीमसेनस्य त्रयोदशसमार्जिताम् ।
किमर्थं नाभिजानाति युध्यमानो हि विश्रुताम् ॥ ३०

ऊर्ध्वमुत्क्रम्य वेगेन जिघांसन्तं वृकोदरः ।
बभञ्ज गदया चोरू न स्थाने न च मण्डले ॥ ३१

सञ्जयः—

धर्मच्छलमिमं श्रुत्वा केशवात् स विशां पते ।
नैव प्रीतमना रामो वचनं प्राह संसदि ॥ ३२

रामः—

हत्वाऽधर्मेण राजानं धर्मात्मानं सुयोधनम् ।
जिह्मयोधीति लोकेऽस्मिन् ख्यातिं यास्यति पाण्डवः ॥ ३३

दुर्योधनोऽपि धर्मज्ञो लोकान् यास्यति शाश्वतान् ।
ऋजुयोधी हतो राजा धार्तराष्ट्रस्सुदुर्मदः ॥ ३४

युद्धदीक्षां प्रविश्याजौ रणयज्ञं वितत्य च ।
हुत्वाऽऽत्मानममित्राग्नौ प्राप्तश्चावभृथं यशः ॥ ३५

स्वर्गं गन्ता महाराजस् ससुहृज्ज्ञातिबान्धवः ॥ ३५॥

सञ्जयः—

इत्युक्त्वा रथमास्थाय रौहिणेयः प्रतापवान् ।
[1]श्वेताभ्रशिखरप्रख्यः प्रययौ द्वारकां प्रति ॥ ३६॥

पाञ्चालाश्च सवार्ष्णेयाः पाण्डवाश्च विशां पते ।
रामे द्वारवतीं याते नातिप्रमनसोऽभवन् ॥ ३७॥

ततो युधिष्ठिरं दीनं चिन्तापरमधोमुखम् ।
शोकोपहतसन्तप्तं वासुदेवोऽब्रवीदिदम् ॥ ३८॥

1. ख—अर्धद्वयं नास्ति

श्रीभगवान्—

धर्मराज किमर्थं त्वम् अधर्ममनुपश्यसि ॥ ३९

हतबन्धोर्यदेतस्य पतितस्य विचेतसः ।

सुयोधनस्य भीमेन मृद्यमानं पदा शिरः ॥ ४०

उपप्रेक्षसि कस्मात् त्वं धर्मज्ञस्त्वं नराधिप ॥ ४०॥

युधिष्ठिरः—

न ममैतत् प्रियं कृष्ण यद्राजानं वृकोदरः ।

पदा मूर्ध्न्यस्पृशत् क्रोधान्न च हृष्ये कुलक्षये ॥ ४१॥

निकृत्या निकृता नित्यं धृतराष्ट्रसुतैर्वयम् ।

बहूनि परुषाण्युक्त्वा वनं प्रस्थापिता वयम् ॥ ४२॥

भीमसेनस्य तद्दुःखम् अतीव हृदि वर्तते ।

इति सञ्चिन्त्य वार्ष्णेय मयैतत् समुपेक्षितम् ॥ ४३॥

तस्माद्धत्वाऽकृतप्रज्ञं लुब्धं कामवशानुगम् ।

लभतां पाण्डवः कामं धर्मोऽधर्मोऽपि वा कृतः ॥ ४४॥

सञ्जयः—

इत्युक्तवति कौन्तेये धर्मराजे युधिष्ठिरे ।

वासुदेवो महाबाहुर् युधिष्ठिरमभाषत ॥ ४५॥

काममस्त्वेवमिति वै कृच्छ्रात् कुरुकुलोद्वहम् ॥ ४६

इत्युक्त्वा वासुदेवोऽपि भीमसेनप्रियेप्सया ।

अन्वमोदत तत् सर्वं यद्भीमेन कृतं रणे ॥ ४७

अर्जुनोऽपि महाबाहुर् अप्रीतेनान्तरात्मना ।
नोवाच वचनं किञ्चित् भ्रातरं साध्वसाधु वा ॥ ४८

भीमसेनोऽपि हत्वाऽऽजौ तव पुत्रममर्षणः ।
अभिवाद्य ततो राजन् सम्प्रहृष्टः कृताञ्जलिः ॥ ४९

[1]प्रोवाच सुमहातेजा धर्मपुत्रं युधिष्ठिरम् ।
हर्षादुत्फुल्लनयनो जितकाशी विशां पते ॥ ५०

भीमः—

तवाद्य पृथिवी राजन् क्षेमा निहतकण्टका ।
तां प्रशाधि नरव्याघ्र स्वधर्ममनुपालयन् ॥ ५१

यस्तु कर्ताऽस्य वैरस्य निकृत्या निकृतिप्रियः ।
सोऽयं विनिहतश्शेते पृथिव्यां पृथिवीपते ॥ ५२

दुश्शासनप्रभृतयस् सर्वे ते चोग्रवादिनः ।
राधेयश्शकुनिश्चैव निहतास्तव शत्रवः ॥ ५३

सेयं रत्नसमाकीर्णा मही सवनपर्वता ।
उपावृत्ता महाराज त्वामद्य निहतद्विषम् ॥ ५४

युधिष्ठिरः—

गतो वैरस्य निलयं हतो दुर्योधनस्त्वया ।
कृष्णस्य मतमाज्ञाय विजितेयं वसुन्धरा ॥ ५५

---

1. अ—अर्धद्वयं नास्ति

दिष्ट्या गतस्त्वमानृण्यं मातुः कोपस्य चोभयोः ।
दिष्ट्या जयसि दुर्धर्ष दिष्ट्या शत्रुर्निपातितः ॥ ५६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि चतुष्पञ्चाशोऽध्यायः ॥ ५४ ॥
॥ ७६ ॥ गदायुद्धपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये ५६ श्लोकाः ]

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

पाञ्चालादिभिर्भीमस्तुतिः ॥ १ ॥ कृष्णदुर्योधनयोः परस्परगर्हणम् ॥ २ ॥ दुर्योधनेनात्मस्तुतौ तन्मूर्ध्नि गन्धर्वैः पुष्पवर्षणम् ॥ ३ ॥ भीष्मादिमरणेन दुःखितानां पाण्डवानां कृष्णेन समाश्वासनम् ॥ ४ ॥

[1]सञ्जयः—

हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
सिंहेनेव महाराज मत्तं वनगजं वने ॥ १

प्रहृष्टमनसस्सर्वे कृष्णेन सह पाण्डवाः ।
पाञ्चालास्सृञ्जयाश्चैव निहते कुरुनन्दने ॥ २

आविध्यन्नुत्तरीयाणि सिंहनादांश्च चक्रिरे ॥ २॥

धृतराष्ट्रः—
1. ख—हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
पाण्डवास्सृञ्जयाश्चैव किमकुर्वत सञ्जय ॥ [अधिकः पाठः]

नैतान् हर्षसमायुक्तान् इयं सेहे वसुंधरा ॥ ३

धनूंष्येके व्याक्षिपन्ति ज्याश्चाप्यन्ये तथाऽक्षिपन् ।
दध्मुश्चान्ये महाशङ्खान् अन्ये जघ्नुश्च दुन्दुभीन् ॥ ४

चिक्रीडुश्च तथैवान्ये जहसुश्च तवाहिताः ।
अब्रुवंश्चासकृद्वीरं भीमसेनमिदं वचः ॥ ५

पाञ्चालसृञ्जयाः—

दुष्करं भवता कर्म रणेऽद्य सुमहत् कृतम् ।
कौरवेयं रणे हत्वा गदया कृतनिश्रमम् ॥ ६

इन्द्रेणेव हि वृत्रस्य वधं परमसंयुगे ।
त्वया कृतममन्यन्त शत्रोर्वधमिमं जनाः ॥ ७

चरन्तं विविधान् मार्गान् मण्डलानि च सर्वशः ।
दुर्योधनमिमं हन्यात् कोऽन्यश्शूरं वृकोदरात् ॥ ८

वैरस्य च गतः पारं त्वमिहान्यैस्सुदुर्गमम् ।
अशक्यमेतदन्येन सम्पादयितुमीदृशम् ॥ ९

कुञ्जरेणेव मत्तेन वीरसङ्ग्राममूर्धनि ।
दुर्योधनशिरो दिष्ट्या पादेन मृदितं त्वया ॥ १०

सिंहेन महिषस्येव कृत्वा सङ्गरमद्भुतम् ।
दुश्शासनस्य रुधिरं पीतं दिष्ट्या त्वयाऽनघ ॥ ११

ये विप्रकुर्वन् राजानं धर्मात्मानं युधिष्ठिरम् ।

मूर्ध्नि तेषां कृतः पादो दिष्ट्या ते स्वेन कर्मणा ॥ १२

अमित्राणामधिष्ठानाद् वधाद्दुर्योधनस्य च ।
भीम दिष्ट्या पृथिव्यां ते प्रथितं सुमहद्यशः ॥ १३

एवं नूनं हते वृत्रे शक्रं नन्दन्ति वन्दिनः ।
यथा त्वां निहतामित्रं स्वयं नन्दाम भारत ॥ १४

दुर्योधनवधे यानि रोमाणि हृषितानि नः ।
अद्यापि न विहृष्यन्ति तानि तद्विद्धि भारत ॥ १५

सञ्जयः—

इत्यब्रुवन् भीमसेनं वादिकास्तत्र सङ्गताः ॥ १५॥
तान् हृष्टान् पुरुषव्याघ्रान् पाञ्चालान् पाण्डवैस्सह ।
ब्रुवतस्सदृशं तत्तत् प्रोवाच मधुसूदनः ॥ १६॥

श्रीभगवान्—

नान्यायान्निहतश्शत्रुर् इति वक्तुं जनाधिपाः ।
असकृद्वाग्भिरुग्राभिर् निहतो ह्येष मन्दधीः ॥ १७॥

तदैवैष हतः क्षुद्रो यदैव निरपत्रपः ।
लुब्धः पापसहायश्च सुहृदां शासनातिगः ॥ १८॥

बहुशो विदुरद्रोणकृपगाङ्गेयसञ्जयैः ।
पाण्डुभ्यः प्रोच्यमानोऽपि पित्र्यमंशं न दत्तवान् ॥ १९॥

नैष योग्योऽत्र मित्रं वा शत्रुर्वा पुरुषाधमः ।

[1]किमनेनातितुन्नेन वाग्भिः काष्ठसधर्मणा ॥　　२०॥

रथेष्वारोहत क्षिप्रं गच्छाम वसुधाधिपाः ।
दिष्ट्या हतोऽयं पापात्मा सामात्यज्ञातिबान्धवः ॥　　२१॥

सञ्जयः—

इति श्रुत्वाऽऽत्मनि क्षेपं कृष्णाद्दुर्योधनो नृपः ।
अमर्षवशमापन्न उदतिष्ठद्विशां पते ॥　　२२॥

स्फिग्देशेनोपविष्टस्सन् दोर्भ्यां विष्टभ्य मेदिनीम् ।
दृष्टिं भ्रूसङ्कटां कृत्वा वासुदेवे न्यपातयत् ॥　　२३॥

अर्धोन्नतशरीरस्य रूपमासीन्नृपस्य तत् ।
क्रुद्धस्याशीविषस्येव च्छिन्न[2]पक्षस्य भोगिनः ॥　　२४॥

प्राणान्तकरिणीं घोरां वेदनामविचिन्तयन् ।
दुर्योधनो वासुदेवं वाग्भिरुग्राभिरार्दयत् ॥　　२५॥

दुर्योधनः—

कंसदासस्य दायाद न ते लज्जाऽस्त्यनेन वै ।
अधर्मेण गदायुद्धे यदहं विनिपातितः ॥　　२६॥

ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्या प्रयच्छसि ।
किं न विज्ञातमेतन्मे यदर्जुनमवोचथाः ॥　　२७॥

पातयित्वा महीपालान् ऋजुयुद्धान् सहस्रशः ।

---

1. क—इदमर्धं नास्ति　　2. ख-घ—पुच्छस्य

[1]जिह्मैरुपायैर्निपुणैर् न ते लज्जा न ते घृणा ॥ २८॥

अहन्यहनि शूराणां कुर्वाणः कदनं महत् ।
शिखण्डिनं पुरस्कृत्य घातितस्ते पितामहः ॥ २९॥

अश्वत्थाम्नस्सनामानं हत्वा नागं सुदुर्मते ।
आचार्यस्याजितश्शस्त्रं किं तन्न विदितं मम ॥ ३०॥

स चानेन नृशंसेन धृष्टद्युम्नेन वीर्यवान् ।
हन्यमानस्त्वया दृष्टो न चैनं समवारयः ॥ ३१॥

वधार्थं पाण्डुपुत्रस्य याचितां शक्तिमेव च ।
घटोत्कचे व्यंसयेथाः कस्त्वत्तः पापकृत्तमः ॥ ३२॥

छिन्नबाहुः प्रायगतस् तथा भूरिश्रवा रणे ।
त्वया निसृष्टेन हतश् शैनेयेन दुरात्मना ॥ ३३॥

कुर्वाणश्चोत्तमं कर्म कर्णः पार्थजिघांसया ।
व्यसनेनाश्वसेनस्य [2]पन्नगेन्द्रसुतस्य वै ॥ ३४॥

पुनश्च पतिते चक्रे व्यसनार्तः पराजितः ॥ ३५
पातितश्च रणे कर्णश् चक्रव्यग्रोऽग्रणीर्नृणाम् ॥ ३५॥

यदि मां चैव कर्णं च भीष्मद्रोणौ च संयुगे ।
[3]न्यायेन प्रतियुध्येथा न वस्स्याद्विजयो ध्रुवः ॥ ३६॥

---

1. ख—इदमर्धं नास्ति 2. क—परावृत्य च्युतस्य वै
3. क-ख-घ—ऋजुना

त्वया पुनरनार्येण जिह्ममार्गेण पार्थिवाः ।
ये धर्ममनुतिष्ठन्तो वयं चान्ये निपातिताः ॥ ३७॥

[1]त्वया मायाविना कृष्ण मायामर्कप्रमोषिणीम् ।
कृत्वा हतस्सिन्धुपतिः किं तन्न विदितं मम ॥ ३८॥

श्रीभगवान्—

हतस्त्वमसि गान्धारे सभ्रातृसुतबान्धवः ।
सगणस्ससुहृच्चैव पापमार्गमनुष्ठितः ॥ ३९॥

तवैव दुष्कृतैर्वीरौ भीष्मद्रोणौ निपातितौ ।
कर्णश्च निहतस्सङ्ख्ये तव शीलानुवर्तकः ॥ ४०॥

याच्यमानो मया मूढः पित्र्यमंशं न दित्ससि ।
पाण्डवेभ्यस्स्वराज्यार्धं लोभाच्छकुनिनिश्चयात् ॥ ४१॥

विषं ते भीमसेनाय दत्तं सर्वे च पाण्डवाः ।
प्रदीपिता जतुगृहे मात्रा सह सुदुर्मते ॥ ४२॥

सभायां याज्ञसेनी च द्यूते क्लिष्टा रजस्वला ।
तदैव तावद्दुष्टात्मा वध्यस्त्वं निरपत्रपः ॥ ४३॥

अनक्षज्ञं च धर्मज्ञं सौबलेनाक्षदेविना ।
निकृत्या वै पराजैषीस् तस्मादसि रणे हतः ॥ ४४॥

जयद्रथेन पापेन यत् कृष्णा क्लेशिता वने ।

---

1. अ—अर्धद्वयं नास्ति

यातेषु मृगयामेषु तृणबिन्दोस्तथाऽऽश्रमे ॥ ४५॥

अभिमन्युश्च यद्बाल एको बहुभिराहवे ।
त्वद्दोषैर्निहतः पाप तस्मादसि रणे हतः ॥ ४६॥

कुर्वाणं कर्म समरे पाण्डवानर्थकाङ्क्षिणम् ।
यच्छिखण्ड्यवधीद्भीष्मं मित्रार्थे [1]न व्यतिक्रमः ॥ ४७॥

स्वधर्मं पृष्ठतः कृत्वा आचार्यस्त्वत्प्रियेप्सया ।
पार्षतेन हतस्सङ्ख्ये वर्तमानोऽसतां पथि ॥ ४८॥

प्रतिज्ञामात्मनस्सत्यां चिकीर्षन् समरे रिपुम् ।
हतवान् सात्वतो विद्वान् सौमदत्तिं महारथम् ॥ ४९॥

अर्जुनस्समरे राजन् युध्यमानः कदाचन ।
निन्दितं पुरुषव्याघ्रः करोति न कथञ्चन ॥ ५०॥

लब्ध्वाऽपि बहुशश्छिद्रं वीरवृत्तमनुस्मरन् ।
न जघान रणे कर्णं मैवं वोचस्सुदुर्मते ॥ ५१॥

देवानां मतमाज्ञाय तेषां प्रियहितेप्सया ।
नार्जुनस्य महानागं मया व्यंसितमस्त्रजम् ॥ ५२॥

र्वं च भीष्मश्च कर्णश्च द्रोणो द्रौणिस्तथा कृपः ।
वेराटनगरे तस्य आनृशंस्याच्च जीविताः ॥ ५३॥

ग्नर पार्थस्य विक्रान्तं गन्धर्वेषु कृतं तदा ।

---

[1] क—को व्यतिक्रमः

अधर्मः कोऽत्र गान्धारे पाण्डवैर्येन् कृतं त्वयि ॥　५४॥

स्वबाहुबलमास्थाय स्वधर्मेण परन्तपाः ।
जितवन्तो रणे वीराः पापोऽसि निधनं गतः ॥　५५॥

दुर्योधनः—

अधीतं सुहुतं दत्तं भूः प्रभुक्ताससागरा ।
मूर्ध्नि स्थितममित्राणां को नु स्वन्ततरो मया ॥　५६॥

सर्वेषां क्षत्रबन्धूनां स्वधर्ममनुपश्यताम् ।
तदिदं निधनं प्राप्तं को नु स्वन्ततरो मया ॥　५७॥

[1]राजार्हा मानुषा भोगाः प्राप्ताश्चासुलभा नृपैः ।
ऐश्वर्यं चोत्तमं प्राप्तं को नु स्वन्ततरो मया ॥　५८॥

ससुहृत् सानुबन्धश्च स्वर्गं यातोऽहमच्युत ।
यूयं गर्हितसङ्कल्पाश् शोचन्तो वर्तयिष्यथ ॥　५९॥

[2]न मे विषादो भीमेन पादेन शिर आहतम् ।
काका वा कङ्कगृध्रा वा निधास्यन्ति पदं क्षणात् ॥　६०॥

सञ्जयः—

अस्य वाक्यस्य निधने कुरुराजस्य भारत ।
अपतत् सुमहद्वर्षं पुष्पाणां दिव्यगन्धिनाम् ॥　६१॥
अवाद्यन्त च तूर्याणि जगुश्चाप्सरसां गणाः ॥　६२

1. क—अयं श्लोको नास्ति　　2. ख—अर्धद्वयं नास्ति

[1]जगुश्चाप्सरसो राज्ञो यशस्सम्बद्धमेव च ।
सिद्धाश्च मुमुचुर्नादं साधु साध्विति भारत ॥ ६३

ववौ च सुरभिर्वातः पुण्यगन्धश्शुचिर्मृदुः ।
व्यराजतामलं चैव नभो वैडूर्यसन्निभम् ॥ ६४

इत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः ।
दुर्योधनस्य पूजां च कृतां व्रीडामुपागमन् ॥ ६५

हतांश्चाधर्मतश्श्रुत्वा शोकार्ताश्शुशुचुर्हि ते ।
भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च ॥ ६६

तांस्तु चिन्तापरान् दृष्ट्वा पाण्डवान् दीनचेतसः ।
[2]प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिस्वनः ॥ ६७

श्रीभगवान्—

नैष शक्योऽतिशीघ्रास्त्रस् ते च सर्वे महारथाः ।
ऋजुयुद्धेन विक्रान्ता हन्तुं युष्माभिराहवे ॥ ६८

उपायान्निहता ह्येते मया तस्मान्नराधिपाः ।
अन्यथा पाण्डवेयानां नाभविष्यज्जयः क्वचित् ॥ ६९

ते हि सर्वे महेष्वासाश् चत्वारोऽतिरथा भुवि ।
[3]न शक्या धर्मतो हन्तुं लोकपालैरपि स्वयम् ॥ ७०

---

1. क-ख-घ—इदमर्धं नास्ति 2. क—अर्धचतुष्टयं नास्ति
3. क—अर्धद्वयं नास्ति

तथैवायं गदापाणिर् धार्तराष्ट्रो गतक्लमः ।
न शक्यो धर्मतो हन्तुं कालेनापि हि दण्डिना ॥ ७१

न च वो हृदि कर्तव्यं यदयं निहतो नृपः ।
मिथ्यावध्यास्छलोपायैर् बहवश्शत्रवोऽधिकाः ॥ ७२

पूर्वं ह्यनुगतो मार्गो देवैरसुरघातिभिः ।
सद्भिश्चानुगतः पन्थास् सर्वैरनुगमिष्यते ॥ ७३

एवं विधात्रा विहितो वधो ह्येष महात्मना ।
दैवं पुरुषकारेण न शक्यमतिवर्तितुम् ॥ ७४

भूतं भव्यं भविष्यच्च निमेषाद्यो हनिष्यति ।
कृतान्तमन्यथा कर्तुं नेच्छेत् सोऽयं धनञ्जय ॥ ७५

कृतकृत्यास्स सायाह्ने निवासं रोचयामहे ।
साश्वनागरथास्सर्वे विश्राम्यन्तु नराधिपाः ॥ ७६

सञ्जयः—

वासुदेववचश्श्रुत्वा तदानीं पाण्डवैस्सह ।
पाञ्चाला भृशसंहृष्टा विनेदुस्सिंहसङ्घवत् ॥ ७७

ततः प्राध्मापयच्छङ्खं पाञ्चजन्यं जनार्दनः ।
देवदत्तं प्रहृष्टात्मा शङ्खप्रवरमर्जुनः ॥ ७८

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ ७९

नकुलस्सहदेवश्च सुघोषमणिपुष्पकौ ।
धृष्टद्युम्नस्तथा जैत्रं सात्यकिर्नन्दिवर्धनम् ॥ ८०

तेषां नादेन महता शङ्खानां भरतर्षभ ।
आपुपूरे नभस्सर्वं पृथिवी च चचाल ह ॥ ८१

ततश्शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
पाण्डुसैन्येष्ववाद्यन्त स शब्दस्तुमुलोऽभवत् ॥ ८२

अस्तुवन् पाण्डवानन्ये गीर्भिश्च स्तुतिमङ्गलैः ।
हृष्टा दुर्योधनं दृष्ट्वा निहतं पुरुषर्षभाः ॥ ८३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ ७६ ॥ गदायुद्धपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये ८३ श्लोकाः ]

---

## ॥ षट्पञ्चाशोऽध्यायः ॥



पाञ्चालादिषु स्वस्वशिबिराण्युपगतेषु पाण्डवैर्दुर्योधनशिबिरमेत्य स्वस्वरथेभ्योऽवतरणम् ॥ १ ॥ कृष्णे रथात् प्रथमं पार्थमवतार्य पश्चात् स्वयमप्यवतीर्णे अग्निना तद्रथस्य भस्मीकरणम् ॥ २ ॥ कृष्णेनार्जुनं प्रति रथदाहस्य कारणकथनम् ॥ ३ ॥ कृष्णचोदनया पाण्डवैरोघवतीतीरे रात्रौ निवसनम् ॥ ४ ॥ कृष्णेन युधिष्ठिरचोदनया गान्धार्याश्वासनाय हास्तिनपुरगमनम् ॥ ५ ॥

---

सञ्जयः—

ततस्ते प्रययुस्सर्वे निवेशाय महीक्षितः ।
शङ्खान् प्रध्मापयन्तो वै हृष्टाः परिघबाहवः ॥ १

पाण्डवान् गच्छतश्चापि शिबिरं नो विशां पते ।
महेष्वासोऽन्वगात् पश्चात् सात्यकिस्सत्यविक्रमः ॥ २

धृष्टद्युम्नश्शिखण्डी च सृञ्जयाश्चापि सर्वशः ।
सर्वे चान्ये महेष्वासा जग्मुस्स्वशिबिराण्युत ॥ ३

ततस्ते प्राविशन् पार्था हतत्विट्कं हतेश्वरम् ।
दुर्योधनस्य शिबिरं रङ्गवन्निस्सृते जने ॥ ४

गतोत्सवं पुरमिव हृतनागमिव ह्रदम् ।
स्त्रीवर्षवरभूयिष्ठं वृद्धामात्यैरधिष्ठितम् ॥ ५

तत्रैतान् पर्युपातिष्ठन् दुर्योधनपुरस्सराः ।

कृताञ्जलिपुटा राजन् काषायमलिनाम्बराः ॥ ६

शिबिरं समनुप्राप्य कुरुराजस्य पाण्डवाः ।
अवतेरुर्महाराज रथेभ्यो रथसत्तमाः ॥ ७

ततो गाण्डीवधन्वानम् अभ्यभाषत केशवः ।
स्थितः प्रियहिते नित्यम् अतीव पुरुषर्षभः ॥ ८

श्रीभगवान्—

अवरोपय गाण्डीवम् अक्षय्यौ च महेषुधी ।
ततोऽहमवरोक्ष्यामि पश्चाद्भरतसत्तम ॥ ९

स्वयं चैवावरोह त्वम् एतच्छ्रेयस्तवानघ ॥ ९॥

सञ्जयः—

अवारोहत् तदा वीरः पाण्डुपुत्रो धनञ्जयः ॥ १०

अथ पश्चात्ततः कृष्णो रश्मीनुत्सृज्य वाजिनाम् ।
अवारोहत मेधावी रथाद्गाण्डीवधन्वनः ॥ ११

अथावतीर्णे भूतानाम् ईश्वरे पुरुषोत्तमे ।
कपिरप्याश्वपाक्रामत् सह देवैर्ध्वजालयैः ॥ १२

स दग्धो द्रोणकर्णाभ्यां दिव्यैरस्त्रैर्महारथः ।
अथ दीप्तोऽग्निनाऽप्याशु प्रजज्वाल महाद्युतिः ॥ १३

सोपासङ्गस्सतूणीरस्स् साश्वस्सयुगबन्धनः ।
भस्मीभूतोऽभवद्भूमौ रथो गाण्डीवधन्वनः ॥ १४

तं दृष्ट्वा भस्मसाद्भूतं तदा पाण्डुसुताः प्रभो ।
अभवन् विस्मिता राजन्नर्जुनश्चेदमब्रवीत् ॥ १५

कृताञ्जलिस्सप्रणयं प्रणिपत्याभिवाद्य च ॥ १५॥

अर्जुनः—

गोविन्द कस्माद्भगवन् रथो दग्धोऽयमग्निना ॥ १६

किमेतन्महदाश्चर्यं भगवन् यदुनन्दन ।
तन्मे ब्रूहि महाबाहो श्रोतव्यं यदि चेन्मया ॥ १७

श्रीभगवान्—

द्रोणकर्णास्त्रनिर्दग्धः पूर्वमेवायमर्जुन ।
मदास्थितत्वात् समरे न विशीर्णः परन्तप ॥ १८

इदानीं तु विशीर्णोऽयं दग्धो ब्रह्मास्त्रतेजसा ।
मया विमुक्तः कौन्तेय त्वय्यद्य कृतकर्मणि ॥ १९

सञ्जयः—

ईषदुत्स्मयमानस्तु भगवान् केशवोऽरिहा ।
परिष्वज्य तु राजानं युधिष्ठिरमभाषत ॥ २०

श्रीभगवान्—

दिष्ट्या जयसि कौन्तेय दिष्ट्या ते शत्रवो हताः ॥ २०॥

दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः ।
त्वं चापि कुशली राजन् माद्रीपुत्रौ च पाण्डवौ ॥ २१॥

मुक्ता वीरक्षयादस्मात् सङ्ग्रामान्निहतद्विषः ॥ २२

क्षिप्रमुत्तरकालानि कुरु कर्माणि भारत ॥ २२॥

उपयातमुपप्लाव्यं सह गाण्डीवधन्वना ।

आनीय मधुपर्कं मां यत् पुरा त्वमवोचथाः ॥ २३॥

एष भ्राता सखा चैव तव कृष्ण धनञ्जयः ।

रक्षितव्यो महाबाहो सर्वास्वापत्स्विति प्रभो ॥ २४॥

तव चैवं ब्रुवाणस्य तथेत्येवाहमब्रुवम् ॥ २५

स सव्यसाची गुप्तस्ते विजयी च नरेश्वर ।

भ्रातृभिस्सह राजेन्द्र शूरस्सत्यपराक्रमः ॥ २६

मुक्तो वीरक्षयादस्मात् सङ्ग्रामाद्रोमहर्षणात् ॥ २६॥

सञ्जयः—

एवमुक्तस्तु कृष्णेन धर्मपुत्रो युधिष्ठिरः ।

हृष्टरोमा महाबाहुः प्रत्युवाच जनार्दनम् ॥ २७॥

युधिष्ठिरः—

प्रयुक्तं द्रोणकर्णाभ्यां ब्रह्मास्त्रमरिसूदन ।

कस्त्वदन्यस्सहेत् साक्षाद् अपि वज्री पुरन्दरः ॥ २८॥

भवतस्तु प्रसादाच्च सङ्ग्रामे बहवो जिताः ।

महारणगतः पार्थो यच्च नासीत् पराङ्मुखः ॥ २९॥

तथा तव महाबाहो पर्यायैर्बहुभिर्मया ।

कर्मणामनुसंधानात् तेजसश्च गतिश्श्रुता ॥　　३०॥

उपप्लाव्ये महर्षिर्मां कृष्णद्वैपायनोऽब्रवीत् ।
यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥　　३१॥

सञ्जयः—

एवमुक्तस्ततः कृष्णः प्रत्युवाच युधिष्ठिरम् ॥　　३२

श्रीभगवान्—

अक्षौहिण्यो दशाष्टौ च तव तेषां च भारत ।
न तुल्याश्चार्जुनस्येह बलेन कुरुनन्दन ॥　　३३

स एष सर्वाण्यस्त्राणि दिव्यानि प्राप्य शङ्करात् ।
मत्समो वा विशिष्टो वा रणे त्वमिति पाण्डव ॥　　३४

अनुज्ञातः पाण्डुसुतः पुनः प्रत्यागमन्महीम् ॥　　३४॥

भूतं भव्यं भविष्यच्च अनुजानासि चेत् प्रभो ।
निमेषार्धान्नरव्याघ्रो नयेदिति मतिर्मम ॥　　३५॥

द्रोणं भीष्मं कृपं कर्णं द्रोणपुत्रं जयद्रथम् ।
निहन्तुं शक्नुयात् क्रुद्धो निमेषार्धाद्धनञ्जयः ॥　　३६॥

सदेवासुरगन्धर्वान् सयक्षोरगराक्षसान् ।
त्रीन् वा लोकान् विजेतुं हि शक्तः किमिह मानुषान् ॥ ३७॥

विधिना महितश्चासौ मया सञ्चोदितोऽपि सन् ।
न चकार मतिं हन्तुं कृतान्तो बलवत्तरः ॥　　३८॥

[1]अत्र गीता मया सुष्ठु गिरस्सत्या महीपते ।
दर्शितं मयि सर्वं च तेनासौ जितवान् रिपून् ॥ ३९॥

अर्जुनोऽपि महाबाहुर् मया तुल्यो महीपते ।
स महेश्वरलब्धास्त्रः किं न कुर्याद्विभुः प्रभो ॥ ४०॥

सञ्जयः—

इत्येवमुक्ते ते वीराश् शिबिरं तव भारत ।
प्रविश्य प्रत्यपद्यन्त कोशरत्नर्धिसञ्चयान् ॥ ४१॥

रजतं जातरूपं च मणीनथ च मौक्तिकान् ।
भूषणान्यथ मुख्यानि कम्बलान्यजिनानि च ॥ ४२॥

गजानश्वान् रथांश्चैव महान्ति शयनानि च ।
दासीदासमसंख्येयं राज्योपकरणानि च ॥ ४३॥

ते प्राप्य धनमक्षय्यं त्वदीयं भरतर्षभ ।
उदक्रोशन् महेष्वासा नरेन्द्र विजितारयः ॥ ४४॥

ते तु वीरास्समाश्वस्य वाहनान्यवमुच्य च ।
अतिष्ठन्त मुहुस्सर्वे पाण्डवा [2]विगतज्वराः ॥ ४५॥

अथाब्रवीन्महाराज वासुदेवो महायशाः ॥ ४६

श्रीभगवान्—

अस्माभिर्मङ्गलार्थाय वस्तव्यं नगराद्बहिः ॥ ४६॥

---

1. ख—अर्धचतुष्टयं नास्ति 2. घ—इतः अर्धत्रयं नास्ति

सञ्जयः—

तथेत्युक्त्वा तु ते सर्वे पाण्डवास्सात्यकिस्तथा ।
वासुदेवेन सहिता मङ्गलार्थं ययुर्बहिः ॥ ४७॥

ते समासाद्य सरितं पुण्यामोघवतीं तदा ।
न्यवसन्नथ तां रात्रिं पाण्डवा जितशत्रवः ॥ ४८॥

[1]युधिष्ठिरस्ततो राजा प्राप्तकालमचिन्तयत् ॥ ४९

वैशम्पायनः—

ततस्सम्प्रेषयामासुर् यादवं गजसाह्वयम् ।
ततः प्रायाज्जवेनाशु वासुदेवः प्रतापवान् ॥ ५०

दारुकं रथमास्थाय यत्र राजाऽम्बिकासुतः ।
तमूचुस्सम्प्रयास्यन्तं सैन्यसुग्रीववाहनम् ॥ ५१

पाण्डवाः—

प्रत्याश्वासय गान्धारीं हतपुत्रां यशस्विनीम् ॥ ५१॥

वैशम्पायनः—

स प्रायात् पाण्डवैरुक्तस् तत्पुरं सात्वतां वरः ।
समाश्वासयितुं क्षिप्रं गान्धारीं निहतप्रजाम् ॥ ५२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ ७६ ॥ गदायुद्धपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये ५२॥ श्लोकाः ]

---

1. क-ख-घ—इदमर्धं नास्ति

## ॥ सप्तपञ्चाशोऽध्यायः ॥



जनमेजयेन गान्धार्याश्वासनकारणप्रश्ने वैशम्पायनेन तत्कथनम् ॥१॥ कृष्णेन गान्धारीधृतराष्ट्रौ समाश्वास्य पुनः पाण्डवसमीपागमनम् ॥ २ ॥

---

जनमेजयः—

किमर्थं राजशार्दूलो धर्मपुत्रो युधिष्ठिरः ।
गान्धार्यै प्रेषयामास वासुदेवं परन्तपम् ॥ १

यदा पूर्वं गतः कृष्णश् शमार्थं कौरवान् प्रति ।
न च तँल्लब्धवान् कामं ततो युद्धमभूदिदम् ॥ २

निहतेषु तु योधेषु हते दुर्योधने तदा ।
पृथिव्यां पाण्डवेयस्य निस्सपत्ने कृते युधि ॥ ३

विद्रुते शिबिरे शून्ये प्राप्ते यशसि चोत्तमे ।
किं नु तत् कारणं ब्रह्मन् [1]येन कृष्णो गतः पुरम् ॥ ४

न च तत्कारणं ब्रह्मन्नल्पं वै प्रतिभाति मे ।
यत्रागमदमेयात्मा स्वयमेव जनार्दनः ॥ ५

त्वमेवैतन्ममाचक्ष्व सर्वमेतद् द्विजोत्तम ।
यच्चान्यत् कारणं ब्रह्मन् कार्यस्यास्य विनिर्णये ॥ ६

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

वैशम्पायनः—

त्वद्युक्तोऽयमनुप्रश्नो यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि यथावद्भरतर्षभ ॥ ७

हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
व्युत्क्रम्य समयं राजन् धार्तराष्ट्रं महाबलम् ॥ ८

अन्यायेन हतं दृष्ट्वा गदायुद्धेन भारत ।
युधिष्ठिरं महाराज महद्भयमथाविशत् ॥ ९

सोऽचिन्तयन्महाभागां गान्धारीं तपसाऽन्विताम् ।
घोरेण चक्षुषा शक्तां त्रैलोक्यस्य विनाशने ॥ १०

तस्य चिन्तयमानस्य बुद्धिस्समभवत् तदा ।
गान्धार्याः क्रोधदीप्तायाः पूर्वं प्रशमनं भवेत् ॥ ११

सा हि पुत्रवधं श्रुत्वा कृतमस्माभिरीदृशम् ।
मानसेनाग्निना क्रुद्धा भस्मसान्नः करिष्यति ॥ १२

[1]कथं दुःखमिदं तीव्रं गान्धारी सा सहिष्यति ।
श्रुत्वा विनिहतं पुत्रं छलेनाजिह्मयोधिनम् ॥ १३

वधं विचिन्त्य बहुधा भयशोकसमन्वितः ।
वासुदेवमिदं वाक्यं धर्मराजोऽभ्यभाषत ॥ १४

युधिष्ठिरः—

तव प्रसादाद्गोविन्द राज्यं निहतकण्टकम् ।

1. घ—इदमर्धं नास्ति

अप्राप्यं मनसाऽपीह प्राप्तमस्माभिरच्युत ॥ १५
प्रत्यक्षं ते महाबाहो सङ्ग्रामे रोमहर्षणे ।
विमर्दस्सुमहान् प्राप्तस् त्वया यादवनन्दन ॥ १६
त्वया देवासुरे युद्धे वधार्थममरद्विषाम् ।
यथा साह्यं पुरा दत्तं हताश्च सुरशत्रवः ॥ १७
साह्यं तथा महाबाहो दत्तमस्माकमच्युत ।
सारथ्येन च वार्ष्णेय भवता यद्धृताः वयम् ॥ १८
यदि न त्वं भवेन्नाथः फल्गुनस्य महारणे ।
कथं शक्यं रणे जेतुं भवेदेतद्बलार्णवम् ॥ १९
गदाप्रहारा विपुलाः परिघैश्चापि ताडनम् ।
शक्तिभिर्भिण्डिपालैश्च तोमरैस्सपरश्वथैः ॥ २०
वाचश्च परुषाः प्राप्तास् त्वया ह्यस्मज्जयैषिणा ॥ २०॥
ताश्च ते सफलास्सर्वा हते दुर्योधनेऽच्युत ।
गान्धार्या हि महाबाहो क्रोधं शमय माधव ॥ २१॥
सा हि नित्यं महाभागा तपसोग्रेण कर्शिता ।
पुत्रपौत्रवधं प्राप्ता ध्रुवं नः प्रदहिष्यति ॥ २२॥
तस्याः प्रसादनं वीर प्राप्तकालमिदं मम ॥ २३
कश्च तां क्रोधसन्दीप्तां पुत्रव्यसनकर्शिताम् ।
वीक्षितुं पुरुषश्शक्तस् त्वामृते पुरुषोत्तम ॥ २४

ततस्ते गमनं प्राप्तं तन्मे माधव रोचते ।
गान्धार्याः क्रोधदीप्तायाः प्रशमार्थमरिन्दम ॥ २५

त्वं हि कर्ता विकर्ता च लोकानां प्रभवाप्ययः ॥ २५॥

हेतुकारणसंयुक्तैर् वचनैः कालचोदितैः ।
क्षिप्रमेव महाभागां गान्धारीं शमयिष्यसि ॥ २६॥

पितामहश्च भगवांस् तत्र कृष्णो भविष्यति ॥ २७

सर्वथा ते महाबाहो गान्धार्या रोषनाशनम् ।
कर्तव्यं सात्वतश्रेष्ठ पाण्डवानां हितैषिणा ॥ २८

वैशम्पायनः—

धर्मराजस्य वचनं श्रुत्वा यदुकुलोद्वहः ।
आमन्त्र्य दारुकं प्राह रथस्सज्जो विधीयताम् ॥ २९

केशवस्य वचश्श्रुत्वा त्वरमाणोऽथ दारुकः ।
न्यवेदयद्रथं सज्जं केशवाय महात्मने ॥ ३०

तं रथं यादवश्रेष्ठस् [1]समारुह्य यदूत्तमः ।
जगाम हास्तिनपुरं त्वरितः केशवो विभुः ॥ ३१

ततः प्रायान्महाभागः केशवो वेगवद्द्रुतम् ।
नागसाह्वयमासाद्य प्रविवेश च वीर्यवान् ॥ ३२

प्रविश्य नगरं वीरो रथघोषेण नादयन् ।

---

1. क-ख—इतः दश पादा न सन्ति

विदितो धृतराष्ट्रस्य सोऽवतीर्य रथोत्तमात् ॥ ३३
अभ्यगच्छदमेयात्मा धृतराष्ट्रनिवेशनम् ॥ ३३॥
पूर्वं चाभिगतं तत्र सोऽपश्यदृषिसत्तमम् ॥ ३४
पादौ प्रपीड्य कृष्णस्य राज्ञश्चापि जनार्दनः ।
अभ्यवादयदव्यग्रो गान्धारीं चापि केशवः ॥ ३५

ततस्तु यादवश्रेष्ठो धृतराष्ट्रमधोक्षजः ।
पाणिमालम्ब्य राज्ञस्स सस्वनं प्ररुरोद ह ॥ ३६

स मुहूर्तमिवोत्सृज्य बाष्पं शोकसमुद्भवम् ।
प्रक्षाल्य वारिणा नेत्रे आचम्य च यथाविधि ॥ ३७
उवाच प्रश्रितं वाक्यं धृतराष्ट्रमरिन्दम ॥ ३७॥

श्रीभगवान्—

न तेऽस्त्यविदितं किञ्चिद् भूतं भव्यं च भारत ।
[1]कालस्य च यथावृत्तं तत्ते सुविदितं प्रभो ॥ ३८॥
यदिदं पाण्डवैस्सर्वैस् तव चित्तानु[2]वर्तिभिः ।
कथं कुलक्षयो न स्यात् तथा क्षत्रस्य भारत ॥ ३९॥
भ्रातृभिस्समयं कृत्वा क्षान्तवान् धर्मवत्सलः ॥ ४०
द्यूतेऽ[3]धर्मजितैश्शक्तैर् वनवासोऽभ्युपागतः ॥ ४०॥

1. क—अर्धद्वयं नास्ति 2. ख-घ—रोधिभिः
3. क-घ—छद्म

अज्ञातवेषचर्या च नानावेषसमाश्रितैः ।
अन्ये च बहवः क्लेशा अशक्तैरिव नित्यदा ॥　　४१॥

मया च स्वयमागम्य युद्धकाल उपस्थिते ।
सर्वलोकस्य सान्निध्ये ग्रामांस्त्वं पञ्च याचितः ॥　　४२॥

त्वया कालोपसृष्टेन लोभतो नापवर्जिताः ।
तवापराधान्नृपते क्षत्रं सर्वं क्षयं गतम् ॥　　४३॥

भीष्मेण सोमदत्तेन बाह्लीकेन कृपेण च ।
द्रोणेन सहपुत्रेण विदुरेण च धीमता ॥　　४४॥

याचितस्त्वं शमं नित्यं न च तत् कृतवानसि ॥　　४५

कालोपहतचित्तो हि सर्वो मुह्यति भारत ।
तथा मूढो भवान् पूर्वम् अस्मिन्नर्थे समुद्यते ॥　　४६

किमन्यत् कालयोगाद्धि दिष्टमेतत् पुरातनम् ।
मा च द्वेषं महाराज पाण्डवेषु निवेशय ॥　　४७

स्वल्पोऽप्यतिक्रमो नास्ति पाण्डवानां महात्मनाम् ।
[1]धर्मतो न्यायतश्चैव स्नेहतश्च परन्तप ॥　　४८

एतत् सर्वं तु विज्ञाय ह्यात्मदोषकृतं फलम् ।
तन्मन्युं पाण्डुपुत्रेषु न भवान् कर्तुमर्हति ॥　　४९

कुलं वंशश्च पिण्डश्च यच्च पुत्रकृतं फलम् ।

---

1. ख—अर्धषट्कं नास्ति

गान्धार्यास्तव चैवाद्य पाण्डवेषु प्रतिष्ठितम् ॥ ५०

एतत् सर्वमनुध्याय आत्मनश्च व्यतिक्रमम् ।
शिवेन पाण्डवान् ध्याहि नमस्ते पुरुषर्षभ ॥ ५१

जानासि त्वं महाबाहो धर्मराजस्य या त्वयि ।
भक्तिर्भरतशार्दूल स्नेहश्चापि स्वभावतः ॥ ५२

एतच्च कदनं कृत्वा शत्रूणामपकारिणाम् ।
दह्यते स्म दिवारात्रं न च शर्माधिगच्छति ॥ ५३

त्वां चैव नरशार्दूल गान्धारीं च यशस्विनीम् ।
स शोचन् भरतश्रेष्ठ न शान्तिमधिगच्छति ॥ ५४

ह्रिया परमया युक्तो भवन्तं नोपसर्पति ।
पुत्रशोकाभिसन्तप्तं बुद्ध्वा व्याकुलितेन्द्रियम् ॥ ५५

वैशम्पायनः—

एवमुक्त्वा महाबाहुर् धृतराष्ट्रं यदूत्तमः ।
उवाच परमं वाक्यं गान्धारीं शोककर्शिताम् ॥ ५६

श्रीभगवान्—

सौबलेयि निबोधस्व यत् त्वां वक्ष्यामि सुव्रते ।
त्वत्समा नास्ति लोकेऽस्मिन् काचित् सीमन्तिनी शुभे ॥ ५७

जानासि च यथा राज्ञि सभायां मम सन्निधौ ।
धर्मार्थसहितं वाक्यम् उभयोः पक्षयोर्हितम् ॥ ५८

उक्तवत्यसि कल्याणि न च ते तनयैश्श्रुतम् ॥ ५८॥

दुर्योधनस्त्वया चोक्तो जयार्थी परुषं वचः ।
शृणु मूढ वचो मे त्वं यतो धर्मस्ततो जयः ॥ ५९॥

तदिदं समनुप्राप्तं तव वाक्यं नृपात्मजे ॥ ६०

एवं विदित्वा गान्धारि मा स्म शोके मनः कृथाः ।
पाण्डवानां विनाशे च मा ते बुद्धिः कदाचन ॥ ६१

शक्ता चासि महाभागे पृथिवीं सचराचराम् ।
चक्षुषा क्रोधदीप्तेन निर्दग्धुं तपसो बलात् ॥ ६२

वैशम्पायनः—

वासुदेववचश्श्रुत्वा गान्धारी वाक्यमब्रवीत् ॥ ६२॥

गान्धारी—

एवमेतन्महाभाग यथा वदसि केशव ।
आधिभिर्दह्यमानाया मतिस्सञ्चलिता मम ॥ ६३॥

सा मे व्यवस्थिता श्रुत्वा तव वाक्यं जनार्दन ॥ ६४

राज्ञस्त्वन्धस्य वृद्धस्य हतपुत्रस्य माधव ।
त्वं गतिस्सह तैस्सर्वैः पाण्डवैर्वदतां वर ॥ ६५

वैशम्पायनः—

एवमुक्त्वा तु वचनं मुखं प्रच्छाद्य वाससा ।
पुत्रशोकाभिसन्तप्ता गान्धारी प्ररुरोद ह ॥ ६६

तत एनां महाबाहुः केशवश्शोककर्शिताम् ।
हेतुकारणसंयुक्तैर् वाक्यैराश्वासयत् प्रभुः ॥ ६७

समाश्वास्य स गान्धारीं धृतराष्ट्रं च माधवः ।
द्रौणेस्सङ्कल्पितं भावम् अन्वबुध्यत भारत ॥ ६८

ततस्त्वरित उत्थाय पादौ मूर्ध्ना प्रणम्य च ।
द्वैपायनस्य राजेन्द्र ततः कौरवमब्रवीत् ॥ ६९

श्रीभगवान्—

आपृच्छे त्वां कुरुश्रेष्ठ मा च शोके मनः कृथाः ।
द्रौणेः पापोऽस्त्यभिप्रायस् ततोऽस्मि सहसोत्थितः ॥ ७०
पाण्डवानां वधे रात्रौ बुद्धिस्तेन निदर्शिता ॥ ७०॥

वैशम्पायनः—

एतच्छ्रुत्वा तु वचनं गान्धार्या सहितोऽब्रवीत् ।
धृतराष्ट्रो महाराज केशवं केशिसूदनम् ॥ ७१॥

धृतराष्ट्रः—

शीघ्रं गच्छ महाबाहो पाण्डवान् परिपालय ।
भूयस्त्वया समेष्यामि क्षिप्रमेव जनार्दन ॥ ७२॥

वैशम्पायनः—

प्रायात् ततस्तु त्वरितो दारुकेण सहाच्युतः ॥ ७३

वासुदेवे गते राजन् धृतराष्ट्रं जनेश्वरम् ।

आश्वासयदमेयात्मा व्यासो लोकनमस्कृतः ॥ ७४

वासुदेवोऽपि धर्मात्मा कृतकृत्यो जगाम ह ।
शिबिरं हास्तिनपुराद् दिदृक्षुः पाण्डवान् नृप ॥ ७५

आगम्य शिबिरं रात्रौ सोऽभ्यगच्छत पाण्डवान् ।
तच्च तेभ्यस्समाख्याय सहितस्तैस्समाविशत् ॥ ७६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ ७६ ॥ गदायुद्धपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये ७६ श्लोकाः]

---

## ॥ अष्टपञ्चाशोऽध्यायः ॥

सञ्जयेन धृतराष्ट्रं प्रति दुर्योधनविलापप्रकारकथनम् ॥ १ ॥ वादिकैरश्वत्थाम्नि दुर्योधनपातननिवेदनम् ॥ २ ॥

---

धृतराष्ट्रः—

अधिष्ठितः पदा मूर्ध्नि भग्नसक्थिर्महीं गतः ।
शौण्डिर्यमानी पुत्रो मे कान्यभाषत सञ्जय ॥ १

अत्यर्थं कोपनो राजा कृतवैरश्च पाण्डुषु ।
व्यसनं परमं प्राप्तः किमाह परमाहवे ॥ २

सञ्जयः—

शृणु राजन् यथावृत्तं प्रवक्ष्यामि परन्तप ।

राज्ञा यदुक्तं मग्नेन तस्मिन् व्यसनसागरे ॥ ३

भिन्नसक्थो नृपो राजन् पांसुना परिकुण्ठितः ।
संयम्य मूर्धजांस्तत्र वीक्ष्य चैव दिशो दश ॥ ४

क्रोधं नियम्य यत्नेन निश्श्वसन्नुरगो यथा ।
संरम्भाश्रुपरीताभ्यां नेत्राभ्यामभिवीक्ष्य माम् ॥ ५

बाहू धरण्यां निष्पीड्य मुहुर्मत्त इव द्विपः ।
प्रकीर्णान् मूर्धजान् धून्वन् दन्तैर्दन्तानुपस्पृशन् ॥ ६

गर्हयन् पाण्डवश्रेष्ठं विनिश्श्वस्येदमब्रवीत् ॥ ६॥

दुर्योधनः—

भीष्मे शान्तनवे नाथे द्रोणे चाचार्यसत्तमे ।
गौतमे शकुनौ चापि कर्णे चास्त्रभृतां वरे ॥ ७॥

अश्वत्थाम्नि तथा शूरे शल्ये च कृतवर्मणि ।
अन्येष्वपि च शूरेषु न्यस्तभारो महात्मसु ॥ ८॥

इमामवस्थां प्राप्तोऽस्मि कालो हि दुरतिक्रमः ॥ ९

एकादशचमूभर्ता सोऽहमेतां दशां गतः ।
कालं प्राप्य महाबाहो न कश्चिदतिवर्तते ॥ १०

आख्यातव्यं मदीयानां ये तु जीवन्ति सङ्गरे ।
यथाऽहं भीमसेनेन व्युत्क्रम्य समयं हतः ॥ ११

बहूनि सुनृशंसानि कृतानि खलु पाण्डवैः ।

भूरिश्रवसि कर्णे च द्रोणे भीष्मे च श्रीमति ॥ १२

इदं चाकीर्तिदं कर्म नृशंसं पाण्डवैः कृतम् ।
वाच्यतां येन ते सत्सु गमिष्यन्तीति मे मतिः ॥ १३

का प्रीतिस्सत्त्वयुक्तस्य कृत्वोपधिकृतं जयम् ।
को वा समयभेत्तारं बुधस्सम्मन्तुमर्हति ॥ १४

अधर्मेण जयं लब्ध्वा को नु हृष्येत पण्डितः ।
यथा संहृष्यते पापः पाण्डुपुत्रो वृकोदरः ॥ १५

किं नु चित्रमतस्त्वन्यत् भग्नसक्थस्य वै मम ।
क्रुद्धेन भीमसेनेन पदा यन्मृदितं शिरः ॥ १६

प्रतपन्तं श्रिया जुष्टं वर्तमानं च बन्धुषु ।
निगृह्णीयाद्रिपुं यो हि स वै सञ्जय पूरुषः ॥ १७

अभिज्ञौ क्षत्रधर्मस्य मम माता पिता च यौ ।
तौ हि सञ्जय दुःखार्तौ विज्ञाप्यौ वचनान्मम ॥ १८

इष्टं भृत्या भृतास्सम्यग् भूः प्रशास्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां जीवतामेव सञ्जय ॥ १९

दत्ता देया यथाशक्ति मित्राणां च प्रियं कृतम् ।
अमित्रा बाधितास्सर्वे को नु स्वन्ततरो मया ॥ २०

[1]अधीतं विहृतं दत्तं प्राप्तमायुर्निरामयम् ।

---

1. ख—कोश एवायं श्लोको वर्तते

स्वधर्मेण जिता लोकाः को नु स्वन्ततरो मया ॥ २१

[1]नृपमुख्येषु मानश्च मया प्राप्तस्सुदुर्लभः ।
आजानेयैस्तथा नेयं को नु स्वन्ततरो मया ॥ २२

[2]यातानि परराष्ट्राणि नृपा भुक्ताश्च दासवत् ।
प्रियेभ्यश्च कृतं साधु को नु स्वन्ततरो मया ॥ २३

[3]मानिता बान्धवास्सर्वे मान्यस्सम्पूजितो जनः ।
त्रितयं सेवितं सर्वं को नु स्वन्ततरो मया ॥ २४

[4]दिष्ट्या नाहं जितस्सङ्ख्ये परान् प्रेष्यवदाश्रितः ।
दिष्ट्या मे विपुला लक्ष्मीर् मृते त्वन्यं गता मयि ॥ २५

यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुतिष्ठताम् ।
निधनं तन्मया प्राप्तं को नु स्वन्ततरो मया ॥ २६

दिष्ट्या नाहं परावृत्तो वैरात् प्राकृतवज्जितः ।
दिष्ट्या न विमतिं कञ्चिद् भजित्वाऽहं पराजितः ॥ २७

सुप्तं वाऽपि प्रमत्तं वा यथा हन्याद्विषेण वा ।
एवं व्युत्क्रान्तधर्मेण व्युत्क्रम्य समयं हतः ॥ २८

अश्वत्थामा महाबाहुः कृतवर्मा च सात्वतः ।
कृपश्शारद्वतश्चापि वक्तव्या वचनान्मम ॥ २९

---

1. क—कोश एवायं श्लोको वर्तते 2. क-ख—अयं श्लोको नास्ति
3. ख—कोश एवायं श्लोको वर्तते 4. ख—अर्धचतुष्टयं नास्ति

अधर्मेण प्रवृत्तानां पाण्डवानामनेकशः ।
[1]विश्वासं समयघ्नानां न यूयं गन्तुमर्हथ ॥　　३०

सञ्जयः—
वादिकांश्चाब्रवीत् सर्वान् पुत्रस्ते सत्यविक्रमः ॥　　३०॥

दुर्योधनः—
अधर्माद्भीमसेनेन निहतोऽहं यथा रणे ।
सोऽहं द्रोणं स्वर्गगतं शल्यकर्णावुभौ तथा ॥　　३१॥
वृषसेनं महावीर्यं शकुनिं चापि सौबलम् ॥　　३२
जलसन्धं महात्मानं भगदत्तं च पार्थिवम् ।
सोमदत्तं महेष्वासं सैन्धवं च जयद्रथम् ॥　　३३
दुश्शासनपुरोगांश्च भ्रातॄनात्मसमान् मम ।
दौश्शासनिं च विक्रान्तं लक्ष्मणं चात्मजावुभौ ॥　　३४
एतांश्चान्यांश्च सुबहून् अस्मदीयान् सहस्रशः ।
पृष्ठतोऽनुगमिष्यामि सार्थहीन इवाऽध्वगः ॥　　३५
नूनं भ्रातॄन् हताञ् श्रुत्वा भर्तारं च स्वसा मम ।
रोरूयमाणा दुःखार्ता दुश्शला सा भविष्यति ॥　　३६
स्नुषाभिः प्रस्नुषाभिश्च वृद्धो राजा पिता मम ।
गान्धारीसहितः क्रोशन् कां गतिं प्रतिपत्स्यते ॥　　३७
नूनं लक्ष्मणमाताऽपि हतपुत्रा हतेश्वरा ।

1. अ—विश्वाससमयघ्नानां नानयं क्षन्तु

विनाशं यास्यति क्षिप्रं कल्याणी पृथुलोचना ॥ ३८

[1]यदि जीवति चार्वाकः परिव्राड्वा विशारदः ।
करिष्यति महाभागो ध्रुवं सोऽपचितिं मम ॥ ३९

समन्तपञ्चके पुण्ये त्रिषु लोकेषु विश्रुते ।
अहं निधनमापद्य लोकान् प्राप्स्यामि शाश्वतान् ॥ ४०

सञ्जयः—

ततो जनसहस्राणि बाष्पपूर्णानि मारिष ।
प्रलापं नृपतेश्श्रुत्वा विद्रवन्ति दिशो दश ॥ ४१

ससागरवना घोरा पृथिवी सचराचरा ।
चचालाथ सनिर्ह्रादा दिशश्चैवाविला भवन् ॥ ४२

ते द्रोणपुत्रमासाद्य यथावृत्तं न्यवेदयन् ।
व्यवहारं गदायुद्धे पार्थिवस्य च पातनम् ॥ ४३

तदाख्याय ततस्सर्वे द्रोणपुत्रस्य मारिष ।
वादिका दुःखसन्तप्ताश् शोकोपहतचेतसः ॥ ४४
ध्यात्वा च सुचिरं कालं जग्मुश्चार्ता यथागतम् ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ ७६ ॥ गदायुद्धपर्वणि दशमोऽध्यायः ॥ १० ॥
[ अस्मिन्नध्याये ४४॥ श्लोकाः ]

---

1. क—इदमर्धं नास्ति

## ॥ एकोनषष्टितमोऽध्यायः ॥



द्रौणिकृपकृतवर्मभिर्दुर्योधनस्य भूपतनदर्शनेन शोचनम् ॥ १ ॥ द्रौणिदुर्योधनयोः संलापः ॥ २ ॥ द्रौणिना राज्ञो पाण्डववधप्रतिज्ञानम् ॥ ३ ॥ दुर्योधनवचनात् कृपेण द्रौणेः सैनापत्येऽभिषेचनम् ॥ ४ ॥

---

सञ्जयः—

वादिकानां समीपात् तु श्रुत्वा दुर्योधनं हतम् ।
हतशिष्टास्ततो राजन् कौरवाणां महारथाः ॥ १

विनिर्भिन्नाश्शितैर्बाणैश् शक्तितोमरकर्पणैः ।
अश्वत्थामा कृपश्चैव कृतवर्मा च भारतः ॥ २

त्वरिता जवनैरश्वैर् आयोधनमुपाद्रवन् ॥ २॥

तत्रापश्यन् महात्मानं धार्तराष्ट्रं निपातितम् ।
प्रभग्नं वायुवेगेन महासालं यथा वने ॥ ३॥

भूमौ विवेष्टमानं तं रुधिरेण समुक्षितम् ।
महागजमिवारण्ये व्याधेन निधनं गतम् ॥ ४॥

विवर्तमानं बहुशो रुधिरौघपरिप्लुतम् ।
यदृच्छयेव पतितं चन्द्रमादित्यगोचरात् ॥ ५॥

युगान्तमारुतेनेव शोषितं मकरालयम् ।

पूर्णचन्द्रनिभं वीरं तुषारावृतमण्डलम् ॥ ६॥

रेणुध्वस्तं दीर्घभुजं मातङ्गसमविक्रमम् ।
वृतं भूतगणैर्घोरैः क्रव्यादैश्च समन्ततः ॥ ७॥

यथा धनं लिप्समानैर् भृत्यैर्नृपतिसत्तमम् ।
भ्रुकुटीकृतवक्त्रान्तं क्रोधादुद्वृत्तलोचनम् ॥ ८॥

सामर्षं तं नरव्याघ्रं [1]भौमं निपतितं तथा ।
तं दृष्ट्वाऽथ महेष्वासं भूतले पतितं नृपम् ॥ ९॥

मोहमभ्यागमन् सर्वे कृपप्रभृतयो नृप ॥ १०

अवतीर्य रथेभ्यस्तु प्राद्रवन् राजसन्निधौ ।
दुर्योधनं च सम्प्राप्य सर्वे भूमावुपाविशन् ॥ ११

ततो द्रौणिर्महाराज बाष्पपूर्णेक्षणश्श्वसन् ।
उवाच भरतश्रेष्ठं सर्वलोकेश्वरेश्वरम् ॥ १२

अश्वत्थामा—

नूनं न विद्यते पुण्यं मनुष्ये किञ्चिदेव तु ।
यत्र त्वं पुरुषव्याघ्र शेषे पांसुषु रूषितः ॥ १३

भूत्वा च नृपतिः पूर्वं समाज्ञाप्य च मेदिनीम् ।
कथमेकोऽद्य राजेन्द्र वने तिष्ठसि निर्जने ॥ १४

1. ख-घ—व्याघ्रं निपतितं यथा

दुश्शासनं न पश्यामि नापि कर्णं महारथम् ।
नापि तान् सुहृदस्सर्वान् किमिदं भरतर्षभ ॥ १५

दुःखं नूनं कृतान्तस्य गतिं ज्ञातुं कथञ्चन ।
लोकनाथो भवानद्य शेते पांसुषु रूषितः ॥ १६

अयं मूर्धाभिषिक्तानाम् अग्रे याति परन्तपः ।
सतृणं ग्रसते पांसुं पश्य कालस्य पर्ययम् ॥ १७

क्व ते तदमलं छत्रं व्यजनं क्व च पार्थिव ।
सा च ते महती सेना क्व गता पार्थिवोत्तम ॥ १८

दुर्विज्ञेया गतिर्नूनं कार्याणां कारणान्तरे ।
यो वै लोकगुरुर्नाथो भवानेतां दशां गतः ॥ १९

अध्रुवा सर्वमर्त्येषु ध्रुवैव श्रीर्विचिन्त्यते ।
[1]भवतो व्यसनं दृष्ट्वा शक्रविस्पर्धिनो भृशम् ॥ २०

सञ्जयः—

तस्य तद्वचनं श्रुत्वा दुःखितस्य विशेषतः ।
उवाच राजन् पुत्रस्ते प्राप्तकालमिदं वचः ॥ २१

विमृज्य नेत्रे पाणिभ्यां शोकजं वारि चोत्सृजन् ।
स कृपप्रभृतीन् वीरान् अब्रवीन्मनुजाधिपः ॥ २२

1. क—नास्तीदमर्धम्

दुर्योधनः—

ईदृशो मर्त्यधर्मोऽयं धात्रा निर्दिष्ट उच्यते ।
विनाशस्सर्वभूतानां कालपर्यायकारितः ॥ २३

सोऽयं मामनुसम्प्राप्तः प्रत्यक्षो भवतां हि सः ।
पृथिवीं पालयित्वाऽहम् एतां निष्ठामुपागतः ॥ २४

दिष्ट्याऽहं त्वपरावृत्तो युद्धे कस्यांचिदापदि ।
दिष्ट्याऽहं निहतः पापैश् छलेनैव विशेषतः ॥ २५

उत्साहश्च कृतो नित्यं मया दिष्ट्या [1]युयुत्सया ।
दिष्ट्या चास्मि हतो युद्धे क्षीणस्वजनबान्धवः ॥ २६

दिष्ट्या च वोऽहं पश्यामि मुक्तानस्माज्जनक्षयात् ।
स्वस्तिमन्तश्च कल्याश्च तन्मे प्रियमनुत्तमम् ॥ २७

मा भवन्तोऽनुतप्यन्तां सौहृदान्निधनेन मे ।
यदि वेदाः प्रमाणं वो जिता लोका मयाऽक्षयाः ॥ २८

जानमानः प्रभावं च कृष्णस्यामिततेजसः ।
तेन न च्यावितश्चाहं क्षत्रधर्मात् स्वनुष्ठितात् ॥ २९

समयोऽयमनुप्राप्तो नास्मि शोच्यः कथञ्चन ।
कृतं भवद्भिस्सदृशम् अनुकूलमिहात्मनः ॥ ३०

2. ख-घ—युयुत्सता

यदिदं विजये शक्त्या दैवं तु बलवत्तरम् ॥ ३०॥

सञ्जयः—

एतावदुक्त्वा वचनं बाष्पव्याकुललोचनः ।
तूष्णीं बभूव राजेन्द्रो रुजया भृशविह्वलः ॥ ३१॥

तथा दृष्ट्वा तु राजानं बाष्पशोकसमन्वितम् ।
द्रौणिः क्रोधेन जज्वाल यथाऽग्निर्जगतः क्षये ॥ ३२॥

स तु क्रोधसमाविष्टः पाणिं पाणौ निपीड्य च ।
बाष्पविह्वलया वाचा राजानमिदमब्रवीत् ॥ ३३॥

अश्वत्थामा—

पिता मे निहतः क्षुद्रैस् सुनृशंसेन कर्मणा ।
न तथा तेन तप्यामि यथा राजंस्त्वयाऽद्य वै ॥ ३४॥

शृणु राजन् वचो मेऽद्य सत्येन वदतः प्रभो ।
इष्टापूर्तेन दानेन धर्मेण सुकृतेन च ॥ ३५॥

अद्याहं सर्वपाञ्चालान् वासुदेवस्य पश्यतः ।
अद्य रात्रौ महाराज निहनिष्यामि पाण्डवान् ॥ ३६॥

अनुज्ञां तु महाराज भवान् मे दातुमर्हति ॥ ३७

सञ्जयः—

तच्छ्रुत्वा वचनं द्रौणेर् धृतराष्ट्र तवात्मजः ।
मनसः प्रीतिजननं कृपं वचनमब्रवीत् ॥ ३८

दुर्योधनः—

आचार्य शीघ्रं कलशं जलपूर्णमिहानय ॥ ३८।

सञ्जयः—

स तद्वचनमाज्ञाय राज्ञो ब्राह्मणसत्तमः ।
कलशं पूर्णमादाय राजान्तिकमुपागमत् ॥ ३९॥

तमब्रवीन्महाराज पुत्रस्तव विशां पते ॥ ४०

दुर्योधनः—

ममाज्ञया द्विजश्रेष्ठ द्रोणपुत्रोऽभिषिच्यताम् ।
सैनापत्येन भद्रं ते मम चेदिच्छसि प्रियम् ॥ ४१

राज्ञो नियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः ।
वर्तता क्षत्रधर्मेण एवं धर्मविदो विदुः ॥ ४२

सञ्जयः—

राज्ञस्तु वचनं श्रुत्वा कृपश्शारद्वतस्ततः ।
द्रौणिं राजनियोगेन सैनापत्येऽभ्यषेचयत् ॥ ४३

सोऽभिषिक्तो महाराज परिष्वज्य नृपोत्तमम् ।
ययौ सिंहनादेन दिशस्सर्वा विनादयन् ॥ ४४

दुर्योधनोऽपि राजेन्द्र शोणितौघपरिप्लुतः ।
तां निशां प्रतिसम्पेदे सर्वभूतभयावहाम् ॥ ४५

अपक्रम्य तु ते तूर्णं तस्मादायोधनान्नृप ।
शोकसन्तप्तमनसश्चिन्तामापेदिरे भृशम् ॥* ४६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
*॥ ७६ ॥ गदायुद्धपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[ अस्मिन्नध्याये ४६ श्लोकाः ]
[ ७६ गदायुद्धपर्व समाप्तम् ]
* ७७ सारस्वतपर्व ३८७ पुटे समाप्तम्
॥ शल्यपर्व समाप्तम् ॥

---

॥ अस्मिन् शल्यपर्वणि ३५५७ श्लोकाः ॥

---

* ख-कोशे—ततस्ते सहितास्सर्वे प्रयाता दक्षिणामुखाः ।
उपास्तमयवेलायां शिबिराभ्याशमागताः ॥
सेनानिवेशमभितो नातिदूरमवस्थिताः ।
निकृत्ता निशितैश्शस्त्रैस् समन्तात् क्षतविक्षताः ॥
दीर्घमुष्णं च निश्वस्य पाण्डवानन्वचिन्तयन् ॥
श्रुत्वा च निनदं घोरं पाण्डवानां जयैषिणाम् ।
अनुसारभयाद्भीताः प्राङ्मुखाः प्राद्रवन् पुनः ॥
ते मुहूर्तं ततो गत्वा श्रान्तपत्राः पिपासिताः ।
विमुच्य वाहांस्त्वरिता भीतास्समनुबोधनात् ॥
गहनं देशमागम्य प्रच्छन्ना न्यविशन्त ते ॥
नादृश्यन्त महेष्वासाः क्रोधामर्ष वशं गताः ।
राज्ञो वधेन संतप्ता मुहूर्तं समवस्थिताः ॥
अन्येषु कोशेषु इमे श्लोकाः—　　[ अधिकः पाठः ]
सौप्तिकपर्वणि प्रथमाध्यायादौ वर्तन्ते
ख-कोशे तु अत्र वर्तन्ते तत्र न सन्ति एतेषां श्लोकानां शल्यपर्वान्त-
पाठ एव साधुरिति प्रतिभाति

अतःपरं सौप्तिकपर्व भविष्यति तस्यायमाद्यः श्लोकः ॥



सञ्जयः—

ततस्ते सहितास्सर्वे प्रयाता दक्षिणामुखाः ।
उपास्तमयवेलायां शिबिराभ्याशमागताः ॥ १



॥ श्रीः ॥

# ॥ महाभारतम् ॥

## ॥ सौप्तिकपर्व ॥

( सौप्तिकपर्व )

### ॥ प्रथमोऽध्यायः ॥

सञ्जयधृतराष्ट्रयोः संलापः ॥ १ ॥ द्रौणिकृपकृतवर्मभिर्वनमभ्यमेत्य न्यग्रोधस्याधस्तादुपवेशनम् ॥ २ ॥ तत्र रात्रौ घूककृतबहुकाकवधदर्शिना द्रौणिना तद्वत् स्वेनापि पाण्डववधनिर्धारणम् ॥ ३ ॥ ततः कृपकृतवर्माणौ समुद्बोध्य स्वकर्तव्यकथनप्रार्थना ॥ ४ ॥

---

सञ्जयः—

[1]ततस्ते सहितास्सर्वे प्रयाता दक्षिणामुखाः ।
उपास्तमयवेलायां शिबिराभ्याशमागताः ॥ १

विमुच्य वाहांस्त्वरिता भीतास्समनुबोधनात् ।
गहनं देशमागम्य प्रच्छन्ना न्यविशन्त ते ॥ २

सेनानिवेशमभितो नातिदूरमवस्थिताः ।
निकृत्ता निशितैश्शस्त्रैस् समन्तात् क्षतविक्षताः ॥ ३

---

1. ख—द्वादशार्धानि न सन्ति इयं श्लोकानुपूर्वी शल्यपर्वान्ते वर्तेत यदि तदा साध्वीति प्रतिभाति

दीर्घमुष्णं च निश्श्वस्य पाण्डवानन्वचिन्तयन् ॥ ३॥

श्रुत्वा च निनदं घोरं पाण्डवानां जयैषिणाम् ।
अनुसारभयाद्भीताः प्राङ्मुखाः प्राद्रवन् भयात् ॥ ४॥

ते मुहूर्तं ततो गत्वा श्रान्तगात्राः पिपासिताः ।
नादृश्यन्त महेष्वासाः क्रोधामर्षवशंगताः ॥ ५॥

राज्ञो वधेन सन्तप्ता मुहूर्तं समवस्थिताः ॥ ६

धृतराष्ट्रः—

अश्रद्धेयमिदं कर्म कृतं भीमेन सञ्जय ।
यत्र नागायुतप्राणः पुत्रो मम निपातितः ॥ ७

अवध्यस्सर्वभूतानां वज्रसंहननो युवा ।
पाण्डवैस्समरे पुत्रो निहतो मम सञ्जय ॥ ८

न दिष्टमप्यतिक्रान्तुं शक्यं गावल्गणे नरैः ।
यत् समेत्य रणे पार्थैः पुत्रो मम निपातितः ॥ ९

अद्रिसारमयं नूनं हृदयं मम सञ्जय ।
हतं पुत्रशतं श्रुत्वा यन्न दीर्णं सहस्रधा ॥ १०

कथं नु वृद्धमिथुनं हतपुत्रं भविष्यति ।
न ह्यहं पाण्डवेयस्य विषये वस्तुमुत्सहे ॥ ११

कथं राज्ञः पिता भूत्वा स्वयं राजा च सञ्जय ।

[1]प्रेष्यभूतः प्रवर्तेयं पाण्डवेयस्य शासनात् ॥ १२

प्रभुज्य पृथिवीं सर्वां स्थित्वा मूर्धनि सञ्जय ।
कथमद्य भविष्यामि प्रेष्यभूतो दुरन्तकृत् ॥ १३

कथं भीमस्य वाक्यानि श्रोतुं शक्ष्यामि सञ्जय ।
येन पुत्रशतं मह्यम् एकेन निहतं युधि ॥ १४

[2]कृतं सत्यं वचस्तस्य विदुरस्य महात्मनः ।
अकुर्वता वचस्तस्य मम पुत्रेण सञ्जय ॥ १५

अधर्मेण हते तात पुत्रे दुर्योधने मम ।
कृतवर्मा कृपो द्रौणिः किमकुर्वत सञ्जय ॥ १६

सञ्जयः—

गत्वा तु तावका राजन् नातिदूरं मनस्विनः ।
अपश्यन्त वनं घोरं नानाद्रुमलतायुतम् ॥ १७

ते मुहूर्तं तु विश्रम्य लब्धतोयैर्हयोत्तमैः ।
सूर्यास्तमयवेलायां कौरवेयस्य शासनात् ॥ १८

नानामृगगणाकीर्णं नानापक्षिसमाकुलम् ।
नानाद्रुमलताच्छन्नं नानाव्यालनिषेवितम् ॥ १९

नानातोयसमाकीर्णैस् तटाकैरुपशोभितम् ।
पद्मिनीशतसञ्छन्नं नीलोत्पलसमाकुलम् ॥ २०

---

1. ख—इदमर्धद्वयं नास्ति　　2. अ-क—कृतकृत्यं

प्रविश्य तद्वनं घोरं वीक्षमाणास्समन्ततः ।
शाखासहस्रसञ्छन्नं न्यग्रोधं ददृशुस्ततः ॥ २१

उपेत्य च महाराज न्यग्रोधं ते महारथाः ।
ददृशुर्द्विपदां श्रेष्ठाश् श्रेष्ठं तं वै वनस्पतिम् ॥ २२

तेऽवतीर्य रथोपस्थाद् विप्रमुच्य तु वाजिनः ।
उपस्पृश्य यथान्यायं सन्ध्यामन्वासत प्रभो ॥ २३

ततोऽस्तं पर्वतश्रेष्ठम् अनुप्राप्ते दिवाकरे ।
सर्वस्य जगतो धात्री शर्वरी प्रत्यपद्यत ॥ २४

ग्रहनक्षत्रताराभिः प्रकीर्णाभिरलङ्कृतम् ।
नभोंशुकमिवाभाति प्रेक्षणीयं समन्ततः ॥ २५

ईषच्चापि प्रवल्गन्ते सत्वा ये रात्रिचारिणः ।
दिवाचराश्च ये सत्त्वास् ते निद्रावशमागताः ॥ २६

रात्रिञ्चराणां सत्त्वानां निनादोऽभूत् सुदारुणः ।
क्रव्यादाश्च प्रमुदिता प्राप्ता घोरा च शर्वरी ॥ २७

तस्मिन् रात्रिमुखे घोरे दुःखशोकसमन्विताः ।
कृतवर्मा कृपो द्रौणिर् उपोपविविशुस्समम् ॥ २८

उपोपविष्टाश्शोचन्तो न्यग्रोधस्य समीपतः ।
तमेवार्थमतिक्रान्तं कुरुपाण्डवयोः क्षयम् ॥ २९

निद्रया च परीताङ्गा निषेदुर्धरणीतले ॥ २९॥
श्रमेण सुदृढं युक्ता विक्षता विविधैश्शरैः ॥ ३०

ततो निद्रावशं प्राप्तौ कृपभोजौ महाबलौ ।
सुखोचितावदुःखार्हौ निषण्णौ धरणीतले ॥ ३१

तौ तु सुप्तौ महाराज [1]तस्मिन् देशे महारथौ ।
[2]महार्हशयनोपेतौ भूमावेव ह्यनाथवत् ॥ ३२

क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत ।
नैव स्म स जगामाथ निद्रां सर्प इव श्वसन् ॥ ३३

नालभत् स तु निद्रां वै दह्यमानोऽतिमन्युना ।
वीक्षाञ्चक्रे महाबाहुस् तद्वनं घोरदर्शनम् ॥ ३४

वीक्षमाणो वनोद्देशं नानासत्वैर्निषेवितम् ।
अपश्यत महाबाहुर् न्यग्रोधं वायसान्वितम् ॥ ३५

तत्र काकसहस्राणि तां निशां पर्यणामयन् ।
सुखं स्वपन्तः कौरव्य पृथक्पृथगपाश्रयाः ॥ ३६

सुप्तेषु तेषु काकेषु विस्रब्धेषु समन्ततः ।
अपश्यत् सहसा यान्तम् उलूकं घोरदर्शनम् ॥ ३७

महास्वनं महाकायं हर्यक्षं बभ्रुपिङ्गलम् ।
सुतीक्ष्णघोणानखरं सुपर्णमिव वेगितम् ॥ ३८

---

1. ख—श्रमशोकसमन्वितौ 2. ख—इदमर्धं नास्ति

सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः ।
न्यग्रोधस्य ततश्शाखां पातयामास भारत ॥ ३९

सन्निपत्य तु शाखायां न्यग्रोधस्य विहङ्गमः ।
सुप्ताञ्जघान सुबहून् वायसान् वायसान्तकः ॥ ४०

केषांचिदच्छिनत् पक्षान् शिरांसि निचकर्त ह ।
चरणांश्चैव केषांचिद् बभञ्ज चरणायुधः ॥ ४१

क्षणेनाघ्नत् स बलवान् येऽस्य दृष्टिपथे स्थिताः ॥ ४१॥

तेषां शरीरावयवैश् शरीरैश्च विशां पते ।
न्यग्रोधमण्डलं सर्वं सञ्छन्नं सर्वतोऽभवत् ॥ ४२॥

तांस्तु हत्वा ततः काकान् कौशिको मुदितोऽभवत् ।
प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदनः ॥ ४३॥

तद्दृष्ट्वा तादृशं कर्म कौशिकेन कृतं निशि ।
तद्भावकृतसङ्कल्पो द्रौणिरेको व्यचिन्तयत् ॥ ४४॥

द्रौणिः—

उपदेशः कृतोऽनेन पक्षिणा मम संयुगे ।
शत्रूणां क्षपणे युक्तः प्राप्तकालश्च मे मतः ॥ ४५॥

नाद्य शक्या मया हन्तुं पाण्डवा जितकाशिनः ।
बलवन्तः कृतोत्साहा लब्धलक्षाः प्रहारिणः ॥ ४६॥

राज्ञस्सकाशे तेषां च प्रतिज्ञातो वधो मया ॥ ४७

पतङ्गाग्निसमां वृत्तिम् आस्थायात्मविनाशिनीम् ।

न्यायतो युध्यमानस्य प्राणत्यागो न संशयः ॥ ४८

छद्मना तु भवेत् सिद्धिश् शत्रूणां च क्षयो महान् ॥ ४८॥

तत्र संशयितादर्थाद् यस्तु निस्संशयो भवेत् ।

तं जना बहुमन्यन्ते येऽर्थशास्त्रविशारदाः ॥ ४९॥

यच्चाप्यति भवेत् कार्यं गर्हितं लोकनिन्दितम् ।

कर्तव्यं तन्मनुष्येण क्षत्रधर्मेण वर्तता ॥ ५०॥

निन्दितानि च कर्माणि कुत्सितानि पदे पदे ।

सोपधानि कृतान्येव पाण्डवैरकृतात्मभिः ॥ ५१॥

अस्मिन्नर्थे पुरा गीताश् श्रूयन्ते धर्मवित्तमैः ।

श्लोका न्यायमवेक्षद्भिस् तत्त्वार्थास्तत्त्वदर्शिभिः ॥ ५२॥

परिश्रान्ते विकीर्णे च भुञ्जाने वाऽपि शत्रुभिः ।

प्रस्थाने च प्रवेशे च प्रहर्तव्यं रिपोर्बलम् ॥ ५३॥

निद्रार्थमर्धरात्रे च तथा नष्टप्रणायकम् ।

भिन्नयोधबलं यच्च द्वैधीभूतं तु यद्भवेत् ॥ ५४॥

सञ्जयः—

इत्येवं निश्चयं कृत्वा सुप्तानां निशि मारणे ।

पाण्डूनां सह पाञ्चालैर् द्रोणपुत्रः प्रतापवान् ॥ ५५॥

स क्रूरां मतिमास्थाय विनिश्चित्य पुनः पुनः ।

सुप्तौ प्राबोधयत्तौ तु मातुलं भोजमेव च ॥ ५६॥

[1]तौ प्रबुद्धौ महात्मानौ कृपभोजौ महाबलौ ।
नोत्तरं प्रतिपद्येतां तत्र युक्तं ह्रिया वृतौ ॥ ५७॥
मुहूर्तमिव स ध्यात्वा तावुभौ वाक्यमब्रवीत् ॥ ५८

अश्वत्थामा—

हतो दुर्योधनो राजा एकवीरो महाबलः ।
यस्यार्थे वैरमासक्तम् अस्माभिः पाण्डवैस्सह ॥ ५९

एकाकी बहुभिः क्षुद्रैर् आहवे शुद्धविक्रमः ।
पातितो भीमसेनेन एकादशचमूपतिः ॥ ६०

वृकोदरेण क्षुद्रेण सुनृशंसमिदं कृतम् ।
मूर्धाभिषिक्तस्य शिरः पादेन परिमर्दितम् ॥ ६१
नर्दन्ति स्म च पाञ्चालाः क्ष्वेलन्ति च हसन्ति च ।
दध्मुश्शङ्खांश्च शतशो हृष्टा घ्नन्ति च दुन्दुभीन् ॥ ६२

वादित्रघोषस्तुमुलो विमिश्रश्शङ्खनिस्स्वनैः ।
अनिलेनेरितो घोरो दिशः पूरयतीव हि ॥ ६३

अश्वानां हेषमाणानां गजानां चैव बृंहताम् ।
सिंहनादश्च शूराणां श्रूयते सुमहानयम् ॥ ६४
दिशं प्रतीचीमाश्रित्य हृष्टानां गर्जतां भृशम् ॥ ६४॥
रथनेमिस्वनाश्चैव श्रूयन्ते रोमहर्षणाः ॥ ६५
पाण्डवैर्धार्तराष्ट्राणां यदिदं दुष्कृतं कृतम् ।

1. ख-ब—इदमर्धं नास्ति

वयमेव त्रयश्शिष्टा यस्मिन् महति वैशसे ॥　　६६

केचिन्नागशतप्राणाः केचित् सर्वास्त्रकोविदाः ।
निहताः पाण्डवैरस्मान् मन्ये कालस्य पर्ययम् ॥　　६७

एवमेतेन भाव्यं हि नूनं कार्येण तत्त्वतः ।
यथा यस्येदृशी निष्ठा कृते यत्नेऽपि दुष्करे ॥　　६८

भवतोस्तु यदि प्रज्ञा न मोहादपचीयते ।
व्यसनेऽस्मिन् महत्यर्थे श्रेयो यन्नस्तदुच्यताम् ॥　　६९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥
॥ ७८ ॥ सौप्तिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ६९ श्लोकाः]

---

## ॥ द्वितीयोऽध्यायः ॥

कृपेण द्रौणिं प्रति कर्तव्योपदेशः ॥

---

कृपः—

श्रुतं ते वचनं सर्वं हेतुयुक्तं मया विभो ।
ममापि तु वचः किञ्चिच् छृणुष्व च महाभुज ॥　　१

आरम्भा मानुषास्सर्वे निबद्धाः कर्मणोर्द्वयोः ।
दैवे पुरुषकारे च परं ताभ्यां न विद्यते ॥　　२

न हि दैवेन सिध्यन्ति कार्याण्येकेन सत्तम ।
न चापि कर्मणैकेन द्वाभ्यां सिध्यन्ति योगतः ॥ ३

आभ्यामुभाभ्यां सर्वार्था निबद्धा ह्यधमोत्तमाः ।
व्यावर्तमाना दृश्यन्ते निवृत्ताश्चैव सर्वशः ॥ ४

पर्जन्यः पर्वते वर्षन् किं नु साधयते फलम् ।
उत्थानं चापि दैवस्य अनुत्थानं च दैवतम् ॥ ५

व्यर्थं भवति सर्वत्र पूर्वं नस्तत्र निश्चयः ।
कृष्टे क्षेत्रे चाप्यवर्षन् किं नु साधयते फलम् ॥ ६

सुकृष्टे च यथा क्षेत्रे सम्यग्दैवे च वर्षति ।
बीजं महागुणं भूयात् तथा सिद्धिश्च मानुषी ॥ ७

[1]तयोर्दैवं हि निश्चित्य स्ववशेनैव वर्तते ।
प्राज्ञाः पुरुषकारेण वर्तन्ते दैवमास्थिताः ॥ ८

ताभ्यां सर्वेऽपि कार्यार्था मनुष्याणां नरर्षभ ।
विचेष्टन्तः प्रदृश्यन्ते निवृत्ताश्च तथैव तु ॥ ९

[2]कृतः पुरुषकारो हि सो हि दैवेन सिध्यति ।

---

1. ख—अर्धद्वयं नास्ति

2. ख—कृष्टे क्षेत्रे चाभिवर्षन् किन्तु साधयते फलम् ।
पर्जन्यः पर्वतेऽवर्षात् किन्तु साधयते फलम् ।
उत्थानं चैव देवस्य अनुत्थानं च दैवतम् ।
व्यर्थं भवति सर्वत्र सच ? कस्तत्र निश्चयः ॥ [अधिकः पाठः]

तथाऽस्य कर्मणः कर्तुर् अभिनिर्वर्तते फलम् ॥ १०

उत्थानं हि मनुष्याणां दक्षाणां दैववर्जितम् ।
अफलं दृश्यते लोके सम्यगभ्युपपादितम् ॥ ११

अत्रालसा मनुष्याणां ये भवन्त्यमनस्विनः ।
उत्थानं ते हि गर्हन्ते प्राज्ञानां तन्न रोचते ॥ १२

प्रायशो हि कृतं कर्म विफलं दृश्यते भुवि ।
अकृत्वा च पुनर्दुःखं कर्म पश्येन्महाफलम् ॥ १३

चेष्टामकुर्वँल्लभते यदि किञ्चिद्यदृच्छया ।
[1]यावत्तु लभते कृत्वा दुर्दशौं तावुभावपि ॥ १४

शक्नोति जीवितुं दक्षो नालसस्सुखमेधते ।
दृश्यन्ते जीवलोकेऽस्मिन् दक्षाः प्रायो हितैषिणः ॥ १५

यदि दक्षस्समारभ्य कर्मणो नाश्नुते फलम् ।
नास्य वाच्यं भवेत् किञ्चित् स्पर्शं चास्याधिगच्छति ॥ १६

अकृत्वा कर्म यो लोके फलं विन्दति कर्हिचित् ।
[2]स वै विवक्षतां याति द्वेष्यो भवति प्रायशः ॥ १७

एवमेतदनादृत्य वर्तते यस्त्वतोऽन्यथा ।
स कुर्यादात्मनोऽनर्थान् एष बुद्धिमतां नयः ॥ १८

हीनः पुरुषकारेण तथा दैवेन वा पुनः ।

---

1. ख-घ—यावन्न लभते　　2. ख-घ—स तु वक्तव्यतां

कारणाभ्यामथोभाभ्याम् उत्थानमफलं भवेत् ॥ १९

हीनं पुरुषकारेण कर्म त्विह न सिध्यति ॥ १९॥

दैवतेभ्यो नमस्कृत्य यस्त्वर्थान् सम्यगीहते ।
दक्षो दाक्षिण्यसम्पन्नो [1]न स मोघैर्विहन्यते ॥ २०॥

सम्यगीहा पुनरियं यो वृद्धानुपसेवते ।
आपृच्छति च यच्छ्रेयः करोति च हितं वचः ॥ २१॥

उत्थायोत्थाय हि सदा प्रष्टव्या वृद्धसम्मताः ।
यस्य योगे परं मूलं तन्मूला सिद्धिरिष्यते ॥ २२॥

वृद्धानां वचनं श्रुत्वा यो ह्युत्थानं प्रयोजयेत् ।
उत्थानस्य फलं सम्यक् तदा स लभतेऽचिरात् ॥ २३॥

रागात् क्रोधाद्भयाल्लोभाद् योऽर्थानीहेत मानवः ।
अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः ॥ २४॥

सोऽयं दुर्योधनेनार्थो लुब्धेनादीर्घदर्शिना ।
असमर्थस्समारब्धो मूढत्वादविचिन्तितः ॥ २५॥

हीनबुद्धिरनादृत्य सम्मन्त्र्यासाधुभिस्सह ।
वार्यमाणोऽकरोद्वैरं पाण्डवैर्गुणवत्तरैः ॥ २६॥

पूर्वमप्यतिदुश्शीलो न दैन्यं कर्तुमर्हति ।
तावत्यर्थे विपन्ने हि मित्राणां न कृतं वचः ॥ २७॥

---

1. घ—नासमोऽयं विहन्यते ख—न समोऽयं विह

अनुवर्तामहे यत् तु [1]भजन्तः पापपूरुषम् ।
अस्मानप्यनयस्तस्मात् प्राप्तोऽयं दारुणो महान् ॥ २८॥

अनेन तु ममाद्यापि व्यसनेनोपपादिता ।
बुद्धिश्चिन्तयतः किञ्चित् स्वं श्रेयो नावबुध्यते ॥ २९॥

मुह्यता तु मनुष्येण प्रष्टव्यास्सुहृदो बुधाः ।
तत्रास्य बुद्धिविनयस् तत्र श्रेयश्च पश्यति ॥ ३०॥

ततोऽस्य मूलं कार्याणां बुद्ध्वा निश्चित्य वै बुधाः ।
ते संसृष्टा यथा ब्रूयुस् तत् कर्तव्यं तथा भवेत् ॥ ३१॥

ते वयं धृतराष्ट्रं च गान्धारीं च यशस्विनीम् ।
उपपृच्छामहे गत्वा विदुरं च महामतिम् ॥ ३२॥

ते पृष्टास्तु वदेयुर्यच् छ्रेयस्करमनन्तरम् ।
तदस्माभिः पुनः कार्यम् इति मे नैष्ठिकी मतिः ॥ ३३॥

अनारम्भात्तु कार्याणां नार्थस्सम्पद्यते क्वचित् ॥ ३४

कृतः पुरुषकारस्तु येषु नित्यं न सिध्यति ।
दैवेनोपहतास्ते तु नात्र कार्या विचारणा ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
॥ ७८ ॥ सौप्तिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ३५ श्लोकाः ]

---

1. ख—व्रजन्तं　व—धर्तुं व्रजन्तं

## ॥ तृतीयोऽध्यायः ॥

द्रौणिना कृपवचनमनादृत्य कृपकृतवर्मणोः पुरतः निशि प्रसुप्तपाण्डुपाञ्चालहननप्रतिज्ञानम् ॥

---

सञ्जयः—

कृपस्य वचनं श्रुत्वा धर्मार्थसहितं हितम् ।
अश्वत्थामा महाराज दुःखशोकसमन्वितः ॥ १

दह्यमानश्च शोकेन प्रदीप्तेनाग्निना यथा ।
क्रूरं मनस्तथा कृत्वा तावुभौ प्रत्यभाषत ॥ २

द्रौणिः—

पुरुषे पुरुषे बुद्धिस् सा सा भवति शोभना ।
तुष्यन्ति च पृथक् सर्वे प्रज्ञया तु स्वया स्वया ॥ ३

सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम् ।
सर्वस्यात्मा बहुमतस् सर्वोऽऽत्मानं प्रशंसति ॥ ४

सर्वस्य तु स्वका प्रज्ञा साधुवादे प्रतिष्ठिता ।
परबुद्धिं च निन्दन्ति स्वां प्रशंसन्ति चासकृत् ॥ ५

कारणान्तरयोगेन येषां संवदते मतिः ।
तेऽन्योन्येन च तुष्यन्ति बहुमन्यन्ति चासकृत् ॥ ६

तस्यैव तु मनुष्यस्य सा सा बुद्धिस्तथा तथा ।
कालयोगविपर्यासं प्राप्यान्योन्यं विपद्यते ॥ ७

अनित्यत्वात्तु चित्तानां मनुष्याणां विशेषतः ।
चित्तवैकल्यमासाद्य सा सा मतिरजायत ॥ ८

यथा हि वैद्यः कुशलो व्याधिं ज्ञात्वा यथाविधि ।
भेषजं कुरुते योगात् प्रशमार्थमिहाभिभो ॥ ९

एवं कार्यस्य योगार्थं बुद्धिं कुर्वन्ति मानवाः ।
[1]प्रज्ञया च स्वया युक्त्या तां च गृह्णन्ति वै बुधाः ॥ १०

अन्यया यौवने बाल्ये बुद्ध्या भवति मोहितः ।
मध्येऽन्यया जरायां तु सोऽन्यां रोचयते मतिम् ॥ ११

व्यसनं वा महाघोरं समृद्धिं वाऽपि तादृशीम् ।
अवाप्य पुरुषो भोज कुरुते बुद्धिवैकृतम् ॥ १२

एकस्मिन्नेव पुरुषे सा सा बुद्धिस्तथा तथा ।
भवत्यनित्या प्रज्ञा हि सा तस्यैव न रोचते ॥ १३

निश्चित्य तु तथा प्राज्ञस् स्वां मतिं साधु पश्यति ।
तस्यां प्रकुरुते भावं सा चास्योद्योगकारिका ॥ १४

सर्वात्मा पुरुषो भोज साधुरित्येव निश्चितः ।
कर्तुमारभते प्रीतिं मरणादिषु कर्मसु ॥ १५

सर्वो हि युक्तिं विज्ञाय प्रज्ञां वाऽपि स्वकां नरः ।
चेष्टते विविधां चेष्टां हितमित्येव चिन्तयन् ॥ १६

1. ख—इदमर्धं नास्ति

उपजाता व्यसनजा येयमद्य मतिर्मम ।
युवयोस्तां प्रवक्ष्यामि सर्वेषां शोकनाशिनीम् ॥ १७

प्रजापतिः प्रजास्सृष्ट्वा कर्म तासां विधाय च ।
वर्णे वर्णे समाधत्त एकैकं गुणवत्तरम् ॥ १८

ब्राह्मणे दममव्यग्रं क्षत्रिये तेज उत्तमम् ।
दाक्ष्यं वैश्ये च शूद्रे च सर्ववर्णानुकूलताम् ॥ १९

अदान्तो ब्राह्मणोऽसाधुर् निस्तेजाः क्षत्रियो मृतः ।
अदक्षो निन्द्यते वैश्यश् शूद्रश्च प्रतिकूलवान् ॥ २०

सोऽस्मि जातः कुले श्रेष्ठे ब्राह्मणैरभिपूजिते ।
मन्दभाग्यतयऽस्मीमं क्षत्रधर्ममनुष्ठितः ॥ २१

क्षत्रधर्मं विदित्वाऽहं यदि ब्राह्मणसंश्रितम् ।
प्रकरिष्ये महत् कर्म न मे तत् साधुसम्मतम् ॥ २२

धारयित्वा धनुर्दिव्यं दिव्यान्यस्त्राणि चाहवे ।
पितरं निहतं दृष्ट्वा किं नु वक्ष्यामि संसदि ॥ २३

सोऽहमद्य यथाकामं क्षत्रधर्ममवाप्य च ।
यास्यामि पदवीं राज्ञः पितुश्चैव महाद्युतेः ॥ २४

अद्य स्वप्स्यन्ति पाञ्चाला विश्वस्ता जितकाशिनः ।
विमुक्तयुग्यकवचा हर्षेण च समन्विताः ॥ २५

वयं जिता मताश्चैषां श्रान्ता व्यायामनेन च ॥ २५॥

तेषां निशि प्रसुप्तानां स्वस्थाने शिबिरे स्वके ।
अवस्कन्दं करिष्यामि शिबिरस्यातिदुष्करम् ॥ २६॥

तानवस्कन्द्य शिबिरे प्रेतभूतानचेतसः ।
सूदयिष्यामि विक्रम्य मघवानिव दानवान् ॥ २७॥

पाञ्चालानद्य तान् सर्वान् धृष्टद्युम्नपुरोगमान् ।
सूदयिष्यामि विक्रम्य कक्षं दीप्तमिवानलः ॥ २८॥

विनिहत्य च पाञ्चालाञ् शान्तिं लब्धास्मि सत्तम ॥ २९

पाञ्चालेषु चरिष्यामि सूदयन्नद्य संयुगे ।
पिनाकपाणिस्सङ्क्रुद्धस् स्वयं रुद्रः पशूनिव ॥ ३०

[1]अद्याहं सर्वपाञ्चालान् निकृत्या च निहत्य च ।
[2]अर्दयिष्यामि सङ्क्रुद्धो रणे पाण्डुसुतांस्तथा ॥ ३१

सूदयिष्यामि संहृष्टः पशूनिव पिनाकधृक् ॥ ३१॥

[3]अद्याहं सर्वपाञ्चालैः कृत्वा भूमिं शरीरिणीम् ।
प्रहृत्यैकेन शस्त्रेण भविष्याम्यनृणः पितुः ॥ ३२॥

दुर्योधनस्य कर्णस्य भीष्मसैन्धवयोरपि ।
गमिष्यामि निशावेलां पदवीमद्य दुर्गमाम् ॥ ३३॥

---

1. अ-क-ख—पाञ्चालेषु चरिष्यामि सुदयन्नद्य संयुगे ।
[अधिकः पाठः]

2. ख—इदमर्धं नास्ति 3. अ-क—नास्तीदमर्धम्

अद्य पाञ्चालराजस्य धृष्टद्युम्नस्य वै निशि ।
विरात्रे प्रमथिष्यामि पशोरिव शिरो बलात् ॥ ३४॥

अद्य पाञ्चालपाण्डूनां शयितानां सुखं निशि ।
खड्गेन निशिताग्रेण प्रमथिष्यामि गौतम ॥ ३५॥

अद्य पाञ्चालसेनां तां निहत्य निशि सौप्तिके ।
कृतकृत्यस्सुखी चैव भविष्यामि महामते ॥ ३६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
॥ ७८ ॥ सौप्तिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ३६॥ श्लोकाः ]

---

## ॥ *चतुर्थोऽध्यायः ॥

---

द्रौणिकृपयोः संवादः ॥

---

कृपः—

दिष्ट्या ते प्रतिकर्तव्ये बुद्धिर्जातेयमच्युत ।
न त्वां वारयितुं शक्तो वज्रपाणिरपि स्वयम् ॥ १

अनुयास्यावहे त्वां हि प्रभाते सहितावुभौ ।
अद्य रात्रौ विश्रमस्व विमुक्तकवचध्वजः ॥ २

---

* ख—कोशे अयमध्यायो नास्ति

अहं त्वामनुयास्यामि कृतवर्मा च सात्वतः ।
परानभिमुखं यान्तं रथमास्थाय दंशितौ ॥　　३

आवाभ्यां सहितश्शत्रूञ् श्वो निहन्ता समागमे ।
विक्रम्य रथिनां श्रेष्ठ पाञ्चालान् सपदानुगान् ॥　　४

शक्तस्त्वमसि विक्रम्य विश्रमस्व निशामिमाम् ।
चिरं ते जागरितं तात स्वप तावन्निशामिमाम् ॥　　५

विश्रान्तश्च सनिद्रश्च स्वस्थचित्तश्च मानद ।
समेत्य समरे शत्रून् वधिष्यसि न संशयः ॥　　६

न हत्वा रथिनां श्रेष्ठं प्रगृहीतवरायुधम् ।
जेतुमुत्सहते कश्चिद् दिवि देवेषु पावकिः ॥　　७

कृपेण सहितं यान्तं युक्तं वै कृतवर्मणा ।
को द्रौणिं युधि संरब्धं योधयेदपि देवराट् ॥　　८

ते वयं परिविश्रान्तास् सनिद्रा विगतज्वराः ।
प्रभातायां रजन्यां तु निहनिष्याम शात्रवान् ॥　　९

तव ह्यस्त्राणि दिव्यानि मम चैव न संशयः ।
सात्वतोऽपि महेष्वासो नित्यं युद्धेषु कोविदः ॥　　१०

ते वयं सहितास्तात सर्वाञ् शत्रून् समागतान् ।
प्रसह्य समरे हत्वा प्रीतिं यास्याम पुष्कलाम् ॥　　११

विश्रमस्व त्वमप्यद्य स्वप चेमां निशां सुखम् ॥ ११॥
अहं च कृतवर्मा च प्रभाते त्वां नरोत्तम ।
अनुयास्याव सहितौ धन्विनौ परतापिनौ ॥ १२॥
रथिनं तरसा यान्तं रथावास्थाय दंशितौ ॥ १३
स गत्वा शिबिरं तेषां नाम विश्राव्य चाहवे ।
ततः कर्तासि शत्रूणां युध्यतां कदनं महत् ॥ १४
कृत्वा च कदनं तेषां प्रभाते विमलेऽहनि ।
विहरस्व यथा शक्रस् सूदयित्वा महारथान् ॥ १५
त्वं हि शक्तो रणे जेतुं पाञ्चालानां वरूथिनीम् ।
दैत्यसेनामिव क्रुद्धस् सर्वदानवसूदनः ॥ १६
मया त्वां सहितं सङ्ख्ये गुप्तं च कृतवर्मणा ।
न सहेत विभुस्साक्षाद् वज्रपाणिरपि स्वयम् ॥ १७
न चाहं समरे तात कृतवर्मा तथैव च ।
अनिर्जित्य रणे पाण्डून् अपयास्याम कर्हिचित् ॥ १८
हत्वा च समरे क्षुद्रान् पाञ्चालान् सह पाण्डवैः
निवर्तिष्यामहे सर्वे हता वा स्वर्गगा वयम् ॥ १९
सर्वोपायसहायास्ते प्रभाते वयमाहवे ।
सत्यमेतन्महाबाहो प्रब्रवीमि तवानघ ॥ २०

सञ्जयः—

एवमुक्तस्ततो द्रौणिर् मातुलेन हितं वचः ।

अब्रवीन्मातुलं राजन् क्रोधादुद्वृत्य लोचने ॥ २१

द्रौणिः—

आतुरस्य कुतो निद्रा नरस्यामर्षितस्य वा ।
अर्थांश्चिन्तयतश्चापि कामयानस्य वा पुनः ॥ २२

तदिदं समनुप्राप्तं पश्य मेऽद्य चतुष्टयम् ।
यस्य भागश्चतुर्थो वै स्वप्नमह्नाय नाशयेत् ॥ २३

किं नाम दुःखं लोकेऽस्मिन् पितुर्वधमनुस्मरन् ।
हृदयं निहृतं यन्मे रात्र्यहानि न शाम्यति ॥ २४

यथा च निहृतः पापैः पिता मम विशेषतः ।
प्रत्यक्षमपि ते सर्वं तन्मे मर्माणि कृन्तति ॥ २५

कथं हि मादृशो लोके मुहूर्तमपि जीवति ।
द्रोणहन्तेति यद्वाचः पाञ्चालानां शृणोम्यहम् ॥ २६

धृष्टद्युम्नमहत्वाऽऽजौ नाहं जीवितुमुत्सहे ।
स मे पितुर्वधाद्वध्यः पाञ्चाला ये च सङ्गताः ॥ २७

विलापो भग्नसक्थस्य यस्तु राज्ञो मया श्रुतः ।
स पुनर्हृदयं कस्य क्रूरस्यापि न निर्दहेत् ॥ २८

कस्य नाकरुणस्यापि नेत्राभ्यामास्रमास्रवेत् ।
नृपतेर्भिन्नसक्थस्य श्रुत्वा तादृग्वचः पुनः ॥ २९

अयं च मित्रपक्षो मे मयि जीवति निर्जितः ।
शोकं मे वर्धयत्येष वारिवेग इवार्णवम् ॥ ३०

अनेकाग्रस्य मे तस्य कुतो निद्रा कुतस्सुखम् ॥ ३०॥

वासुदेवार्जुनाभ्यां हि तानहं परिरक्षितान् ।
अविषह्यतमान् मन्ये महेन्द्रेणापि मातुल ॥ ३१॥

न चास्मि शक्यस्संयन्तुम् अस्मात् कार्यात् कथञ्चन ।
तं न पश्यामि लोके मां योऽस्मात् कार्याद्विचालयेत् ॥ ३२॥

इति मे निश्चिता बुद्धिर् एषा साधुमता च मे ॥ ३३

वादिकैः कथ्यमानस्तु मित्राणां मे पराभवः ।
पाण्डवानां च विजयो हृदयं दहतीव मे ॥ ३४

अहं तु कदनं कृत्वा शत्रूणामद्य सौप्तिके ।
ततो विश्रमिता चैव स्वप्ता च विगतज्वरः ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
॥ ७८ ॥ सौप्तिकपर्वणि चपुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ३५ श्लोकाः]

---

## ॥ पञ्चमोऽध्यायः ॥



कृपेण प्रसुप्तमारणस्याधार्मिकत्वकथनेन प्रतिषेधनेऽपि पितृवधामर्षिणा द्रौणिना जिघांसया रिपुशिबिरद्वारगमनम् ॥ १ ॥ कृपकृतवर्मभ्यामपि सौहार्दात्तदनुगमनम् ॥ २ ॥

---

कृपः—

अशुश्रूषुस्सुदुर्मेधाः पुरुषोऽनियतेन्द्रियः ।
नालं वेदयितुं कृत्स्नौ धर्मार्थाविति मे मतिः ॥ १

[1]चिरं ह्यपि जडश्शूरः पण्डितं पर्युपास्य हि ।
न स धर्मं विजानाति दर्वी सूपरसानिव ॥ २

तथैव तावन्मेधावी विनयं यो न शिक्षति ।
न कथञ्चन जानाति सोऽपि धर्मार्थनिश्चयम् ॥ ३

मुहूर्तमपि तं प्राज्ञः पण्डितं पर्युपास्य हि ।
क्षिप्रं धर्मं विजानाति जिह्वा सूपरसानिव ॥ ४

शुश्रूषुस्त्वेव मेधावी पुरुषो नियतेन्द्रियः ।
जानीयादागमान् सर्वान् ग्राह्यं च न विरोधयेत् ॥ ५

अनयस्त्वतिमानी च दुरात्मा पापपूरुषः ।
धृष्टमुत्सृज्य कल्याणं करोति बहुपातकम् ॥ ६

---

1. ख-घ—अर्धचतुष्टयं नास्ति

नाथयन्तस्तु सुहृदः प्रतिषेधन्ति पातकात् ।
निवर्तते च लक्ष्मीवान् नालक्ष्मीवान् निवर्तते ॥ ७

[1]यथा ह्युच्चावचैस्सर्गैः क्षिप्तचित्तो नियम्यते ।
तथैव सुहृदां शक्यस् त्वशक्यस्त्ववसीदति ॥ ८

तथैव सुहृदोऽप्राज्ञान् कुर्वाणान् कर्म पापकम् ।
प्राज्ञास्सम्प्रतिषेधन्ते यथाशक्ति पुनः पुनः ॥ ९

स कल्याणं मनः कृत्वा नियम्यात्मानमात्मना ।
कुरु मे वचनं तात येन पश्चान्न तप्स्यसे ॥ १०

न वधः पूज्यते लोके सुप्तानामिह धर्मतः ।
तथैव न्यस्तशस्त्राणां विमुक्तरथवाजिनाम् ॥ ११

ये च ब्रूयुस्तवास्मीति ये च स्युश्शरणागताः ।
विमुक्तमूर्धजा ये च ये चापि हतवाहनाः ॥ १२

अद्य स्वप्स्यन्ति पाञ्चाला विमुक्तकवचाः प्रभो ।
विश्वस्ता रजनीं सर्वे प्रेता इव विचेतसः ॥ १३

यस्तेषां तदवस्थानां द्रुह्यते पुरुषोऽनृजुः ।
व्यक्तं स नरके मज्जेद् अगाधे विपुलेऽप्लवे ॥ १४

सर्वास्त्रविदुषां लोके श्रेष्ठस्त्वमसि विश्रुतः ।

---

1. ख—इदमर्धं नास्ति

न च ते जातु लोकेऽस्मिन् सुसूक्ष्ममपि किल्बिषम् ॥ १५

त्वं पुनस्सूर्यसङ्काशश् श्वोभूत उदिते रवौ ।
प्रकाशे सर्वभूतानां विजेता युधि शात्रवान् ॥ १६

असम्भावितरूपं हि त्वयि कर्म विगर्हितम् ।
शुक्ले रक्तमिव न्यस्तं भवेदिति मतिर्मम ॥ १७

अश्वत्थामा—

एवमेतद्यथाऽऽत्थ त्वम् अनुशाससि मातुल ।
तैश्च पूर्वमयं सेतुस् समन्ताद्विह्वलः कृतः ॥ १८

प्रत्यक्षं भूमिपालानां भवतां चापि सन्निधौ ।
[1]न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ १९

कर्णश्च पतिते चक्र उत्थास्यन् रथिनां वरः ।
उत्तमे व्यसने मग्नो हतो गाण्डीवधन्वना ॥ २०

तथा शान्तनवो भीष्मो न्यस्तशस्त्रो निरायुधः ।
शिखण्डिनं पुरस्कृत्य हतो गाण्डीवधन्वना ॥ २१

भूरिश्रवा महेष्वासस् तथा प्रायगतो रणे ।
क्रोशतां भूमिपालानां युयुधानेन पातितः ॥ २२

दुर्योधनश्च भीमेन समेत्य गदया मृधे ।

---

1. अ-क—सप्तार्धानि न सन्ति

[1]पश्यतां भूमिपालानाम् अधर्मेण निपातितः ॥ २३

एकाकी बहुभिस्तत्र परिवार्य महारथैः ।
अधर्मेण नरव्याघ्रो भीमसेनेन पातितः ॥ २४

विलापो भग्नसक्थस्य यो मे राज्ञः परिश्रुतः ।
वार्दिकानां कथयतां स मे मर्माणि कृन्तति ॥ २५

एवं चाधार्मिकाः पापाः पाञ्चाला भिन्नसेतवः ।
तानेवं भिन्नमर्यादान् किं भवान् न विगर्हति ॥ २६

पितृहन्तॄनहं हत्वा पाञ्चालान् निशि सौप्तिके ।
कामं कीटः पतङ्गो वा जन्म प्राप्य भवामि वै ॥ २७

त्वरे चाहमनेनाद्य यदिदं मे चिकीर्षितम् ।
तस्य मे त्वरमाणस्य कुतो निद्रा कुतस्सुखम् ॥ २८

न स जातः पुमाँल्लोके कश्चिन्न च भविष्यति ।
यो मे व्यावर्तयेदेतां वधे तेषां कृतां मतिम् ॥ २९

सञ्जयः—

एवमुक्त्वा महाराज द्रोणपुत्रः प्रतापवान् ।
एकान्ते योजयित्वाऽश्वान् प्रायादभिमुखः परान् ॥ ३०

तमब्रूतां महाभागौ भोजशारद्वतावुभौ ॥ ३०॥

1. घ—इदमर्धं नास्ति

कृपकृतवर्माणौ—

किमयं स्यन्दनो युक्तः किं च कार्यं चिकीर्षितम् ॥ ३१

एकसार्थं प्रयातास्स्म त्वया सह नरर्षभ ।
समदुःखसुखाश्चैव तस्माच्छासितुमर्हसि ॥ ३२

सञ्जयः—

अश्वत्थामा तु सङ्क्रुद्धः पितुर्वधमनुस्मरन् ।
ताभ्यां तथ्यं तथाऽऽचख्यौ यदस्यात्मचिकीर्षितम् ॥ ३३

द्रौणिः—

हत्वा शतसहस्राणि योधानां निशितैश्शरैः ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ३४

तं तथैव हनिष्यामि न्यस्तवर्माणमाहवे ।
पुत्रं पाञ्चालराजस्य पापं पापेन कर्मणा ॥ ३५

कथं विनिहतः पापः पाञ्चाल्यः पशुवन्मया ।
शस्त्राग्निविजितााँल्लोकान् प्राप्नुयादिति मे मतिः ॥ ३६

क्षिप्रं सन्नद्धकवचौ सखङ्गौ सहकार्मुकौ ।
मामास्थाय प्रतीक्षेतां रथस्थौ च परन्तपौ ॥ ३७

सञ्जयः—

इत्युक्त्वा रथमास्थाय प्रायादभिमुखः परान् ।
तमन्वगात् कृपो राजन् कृतवर्मा च सात्वतः ॥ ३८

ते प्रयाता व्यरोचन्त परानभिमुखास्त्रयः ।

हूयमाना यथा यज्ञे समिद्धा हव्यवाहनाः ॥ ३९

ययुश्च शिबिरं तेषां सम्प्रसुप्तजनं विभो ।
द्वारदेशं समासाद्य द्रौणिस्तस्थौ रथोत्तमे ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
॥ ७८ ॥ सौप्तिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये ४० श्लोकाः ]

## ॥ षष्ठोऽध्यायः ॥



अश्वत्थाम्नः शिबिरद्वारस्थमहाभूतदर्शनम् ॥ १ ॥ भूतजिगीषया द्रौणिविसृष्टानामस्त्रशस्त्राणां भूतेन ग्रसनम् ॥ २ ॥ ततश्चिन्तातान्तस्य द्रौणेर्महादेवोपासनाध्यवसायः ॥ ३ ॥

धृतराष्ट्रः—

द्वारदेशे ततो द्रौणिम् अवस्थितमवेक्ष्य तौ ।
अकुर्वातां भोजकृपौ किं सञ्जय वदस्व मे ॥ १

सञ्जयः—

कृतवर्माणमामन्त्र्य कृपं च स महारथः ।
द्रौणिर्मन्युपरीतात्मा शिबिरद्वारमासदत् ॥ २

तत्र भूतं महाकायं चन्द्रार्कसमवर्चसम् ।
सोऽपश्यद्द्वारमावृत्य तिष्ठन्तं रोमहर्षणम् ॥ ३

वसानं चर्म वैयाघ्रं वसारुधिरविस्रवम् ।

कृष्णाजिनोत्तरासङ्गं नागयज्ञोपवीतिनम् ॥ ४

बाहुभिस्स्वायतैर्भीमैर् नानाप्रहरणोद्यतैः ।
बद्धाङ्गदमहासर्पं ज्वालामालाकुलाननम् ॥ ५

दंष्ट्राकरालवदनं व्यादितास्यं भयावहम् ।
नयनानां सहस्रैश्च विविधैरभिभूषितम् ॥ ६

नैव तस्य वपुश्शक्यं प्रवक्तुं वेष एव वा ।
सर्वथा तु तदालोक्य स्फुटेयुरपि पर्वताः ॥ ७

तस्यास्यान्नासिकायाश्च श्रवणाभ्यां च भारत ।
तेभ्यश्चाक्षिसहस्रेभ्यः प्रादुरासन् महार्चिषः ॥ ८

तथा तेजोमरीचिभ्यश् शङ्खचक्रगदायुधाः ।
प्रादुरासन् हृषीकेशाश् शतशोऽथ सहस्रशः ॥ ९

तदत्यद्भुतमालोक्य सर्वभूतभयङ्करम् ।
द्रौणिरव्यथितो दिव्यैर् अस्त्रशस्त्रैरवाकिरत् ॥ १०

द्रौणिमुक्ताञ् छितान् बाणान् तद्भूतं महदग्रसत् ।
उदधेरिव वार्योघान् पावको बडबामुखः ॥ ११

[1]अग्रसत् तांस्तथाभूतान् द्रौणिना प्रहिताञ् शरान् ॥ ११॥
अश्वत्थामा च सम्प्रेक्ष्य ताञ् शरौघान् निरर्थकान् ।
रथशक्तिं मुमोचास्मै दीप्तामग्निशिखोपमाम् ॥ १२॥

1. ख-घ—नास्तीदमर्धम्

सा तदाहत्य दीप्ताग्रा रथशक्तिरदीर्यत ।
युगान्ते सूर्यमाहत्य महोल्केव दिवश्च्युता ॥ १३॥

अथ हेमत्सरुं दिव्यं खड्गमाकाशवर्चसम् ।
कोशात् समुद्बवर्हाशु बिलाद्दीप्तमिवोरगम् ॥ १४॥

स तं खड्गवरं धीमान् भूताय प्राहिणोत् तदा ।
स तदासाद्य वै भूतं विलयं तूलवद्ययौ ॥ १५॥

ततस्स कुपितो द्रौणिर् इन्द्रकेतुनिभां गदाम् ।
ज्वलन्तीं प्राहिणोत् तस्मै भूतं तामपि चाग्रसत् ॥ १६॥

ततस्सर्वायुधाभावे वीक्षमाणस्ततस्ततः ।
अपश्यत् कृतमाकाशम् अनाकाशं जनार्दनैः ॥ १७॥

तदद्भुतमिदं दृष्ट्वा द्रोणपुत्रो निरायुधः ।
अचिन्तयत् सुसन्त्रस्तः कृपभोजवचस्स्मरन् ॥ १८॥

द्रौणिः—

ब्रुवतामप्रियं पथ्यं सुहृदां न शृणोति यः ।
स शोचत्यापदं प्राप्य यथाऽहमवमत्य तौ ॥ १९॥

शास्त्रदृष्टमविज्ञाय समतीत्य जिघांसति ।
स पथः प्रच्युतो धर्म्याद् विपथे प्रतिहन्यते ॥ २०॥

गोब्राह्मणनृपस्त्रीषु सख्युर्भ्रातुर्गुरोस्तथा ।
वृद्धबालजडान्धेषु सुप्तभीतोत्थितेषु च ॥ २१॥

मत्तोन्मत्तप्रमत्तेषु [1]न च शस्त्रं प्रयोजयेत् ॥ २२

इत्येवं गुरुभिः पूर्वम् उपदिष्टं नृणां सदा ॥ २२॥

सोऽहमुत्क्रम्य पन्थानं शास्त्रदृष्टं सनातनम् ।
अमार्गेणैवमारब्धो घोरां तरितुमापदम् ॥ २३॥

तां चापदं घोरतरां प्रवदन्ति मनीषिणः ।
यदुद्यम्य महत् कृत्यं भयादिह निवर्तते ॥ २४॥

अशक्यं चैव कः कर्तुं शक्तश्शक्तिबलादिह ।
न हि दैवाद्गरीयो वै मानुष्यं किञ्चिदिष्यते ॥ २५॥

मानुष्यं कुर्वतः कर्म यदि दैवान्न सिध्यति ।
स पथः प्रच्युतो धर्म्याद् विपथे प्रतिहन्यते ॥ २६॥

प्रतिघातं ह्यविज्ञानं प्रवदन्ति मनीषिणः ॥ २७
यदारभ्य क्रियां काञ्चिद् [2]भयादिह निवर्तते ।

तदिदं दुष्प्रणीतेन भयं मां समुपस्थितम् ॥ २८

न हि द्रोणसुतस्सङ्ख्ये निवर्तेत कथञ्चन ।
इदं च सुमहद्भूतं दैवदण्डमिवोद्यतम् ॥ २९

न चैतदभिजानामि चिन्तयन्नपि सर्वथा ॥ २९॥

---

1. ख-ध—न शस्त्राण्यपचारयेत्
2. ध—इतोऽर्धपञ्चकं नास्ति

ध्रुवं येयमधर्मेण प्रहिता कलुषा मतिः ।
तस्याः फलमिदं घोरं प्रतिघाताय दृश्यते ॥ ३०॥

तदिदं दैवविहितं मम सङ्ख्ये निवर्तनम् ।
नान्यत्र दैवादुद्यन्तुम् इह शक्यं कथञ्चन ॥ ३१॥

सोऽहमद्य महादेवं प्रपद्ये शरणं प्रभुम् ।
दैवदण्डमिमं घोरं स हि मे नाशयिष्यति ॥ ३२॥

कपर्दिनं प्रपद्येऽहं देवदेवमुमापतिम् ।
कपालमालिनं रुद्रं भगनेत्रहरं हरम् ॥ ३३॥

स हि देवोऽत्यगाद्देवांस् तपसा नियमेन च ।
तस्माच्छरणमभ्येष्ये गिरिशं शूलपाणिनम् ॥ ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
॥ ७८ ॥ सौप्तिकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये ३४॥ श्लोकाः ]

## ॥ सप्तमोऽध्यायः ॥

द्रौणिना शिवस्तुतिः ॥ १ ॥ द्रौणेः पुरतः काञ्चनवेद्यामग्न्युद्भवः ॥२॥ द्रौणेस्समीपे नानाविधभीषणभूतगणानामागमनम् ॥ ३ ॥ शिवेन आत्मनो हविष्ट्वकल्पनपूर्वकमग्नौ प्रविष्टाय द्रौणये खड्गदानपूर्वकं तच्छरीरप्रवेशः ॥ ४ ॥ पुनरश्वत्थाम्नश्शिबिरगमनम् ॥ ५ ॥

---

सञ्जयः—

एवं सञ्चिन्तयित्वा तु द्रोणपुत्रो विशां पते ।
अवतीर्य रथोपस्थाद् दध्यौ सम्प्रयतस्स्थितः ॥ १

द्रौणिः—

उग्रं स्थाणुं शिवं रुद्रं शर्वमीशानमीश्वरम् ।
गिरिशं वरदं देवं भवं भावनमव्ययम् ॥ २

शितिकण्ठमजं रुद्रं कृशं क्रतुहरं हरम् ।
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ ३

श्मशाननिलयं दृप्तं महागणपतिं विभुम् ।
[1]खट्वाङ्गधारिणं मुण्डं जटिलं ब्रह्मचारिणम् ॥ ४

मनसा ह्यनुचिन्त्यैनं दुष्करेणाल्पतेजसा ।
अद्य भूतोपहारेण यक्ष्येऽहं त्रिपुरान्तकम् ॥ ५

स्तुतं स्तुत्यं स्तूयमानम् अमोघं चर्मवाससम् ।

---

1. ख—अर्धसप्तकं नास्ति

विलोहितं नीलकण्ठं सुसूक्ष्मं दुर्निवारणम् ॥ ६
शुक्रं विश्वसृजं ब्रह्म ब्रह्मचारिणमेव च ।
प्रतपन्तं तपो नित्यम् अनन्तं तपतां पतिम् ॥ ७
बहुरूपं गणाध्यक्षं त्र्यक्षं पारिषदप्रियम् ।
धना[1]ध्यक्षप्रियसखं गौरीहृदयवल्लभम् ॥ ८
कुमारपितरं पिङ्गं गोवृषोत्तमवाहनम् ।
कृत्तिवाससमत्युग्रम् उमाभूषणतत्परम् ॥ ९
परं परेभ्यः परमं परं यस्मान्न विद्यते ।
इष्वस्त्रोत्तमभर्तारं दिगन्तं देशरक्षणम् ॥ १०
हिरण्यदण्डकवचं चारुमौलिविभूषणम् ।
प्रपद्ये शरणं देवं परमेण समाधिना ॥ ११
इमां चेदापदं घोरां तराम्यद्य सुदुस्तराम् ।
सर्वभूतोपहारेण यक्ष्येऽहं शुचिना शुचिम् ॥ १२

सञ्जयः—

इति तस्य व्यवसितं ज्ञात्वा [2]त्यक्त्वाऽऽत्मकर्मणः ।
पुरस्तात् काञ्चनी वेदी प्रादुरासीन्महात्मनः ॥ १३
तस्यां वेद्यां तदा राजंश् चित्रभानुरजायत ।
[3]प्रदिशो विदिशः खं च ज्वालाभिरभिपूरयन् ॥ १४

---

1. क-ख-च—ध्यक्षस्य तु सखं
2. क-ख-च—त्यागात्मकर्मणा
3. च—एतदादि सप्तदशार्धानि न सन्ति मेषवक्त्रा इत्यादि वर्तते

दीप्तास्यनयनाश्चासन् [1]नैकपादशिरोधराः ।
द्विपशैलप्रतीकाशाः प्रादुरासन् महारथाः ॥ १५

श्ववराहोष्ट्ररूपाश्च हयगोमायुगोमुखाः ।
ऋक्षमार्जारवदना द्विपव्याघ्रमुखास्तथा ॥ १६

काकवक्त्राः प्लवमुखाश् शुकवक्त्रास्तथैव च ।
महागजसवक्त्राश्च हंसवक्त्रास्सितप्रभाः ॥ १७

दार्वाघाटमुखाश्चापि चापवक्त्रास्तथैव च ।
कूर्मनक्रमुखाश्चैव शिंशुमारमुखास्तथा ॥ १८

महामकरवक्त्राश्च तिमिवक्त्राश्च भारत ।
हरिवक्त्राः क्रौञ्चमुखाः कपोताहिमुखास्तथा ॥ १९

पारावतमुखाश्चैव कङ्कवक्त्रास्तथैव च ।
फणिवक्त्रास्सहस्राक्षास् तथैव च शतोदराः ॥ २०

निर्मांसाः काकवक्त्राश्च श्येनवक्त्राश्च भारत ।
तथैवाशिरसो राजन्नृक्षवक्त्राश्च भीषणाः ॥ २१

प्रदीप्तजिह्वानेत्रास्या ज्वालावक्त्रास्तथैव च ।
[2]ज्वालाकेशाश्च राजेन्द्र ज्वालाश्रयचतुर्भुजाः ॥ २२

मेषवक्त्रास्तथाऽन्ये च तथाच्छागमुखा नृप ।

1. क—इतस्त्रयोदशार्धानि न सन्ति
2. क-ख—इदमर्धं नास्ति

शङ्खाभाश्शङ्खवर्णाश्च शङ्खवक्रास्तथैव च ॥ २३

शङ्खमालापरिकराश् शङ्खध्वनिसमस्वनाः ।
जटाधराः पञ्चशिखास् तथा मुण्डाः कृशोदराः ॥ २४

[1]चतुर्दंष्ट्राश्चतुर्जिह्वाश् शङ्कुकर्णाः किरीटिनः ।
मौञ्जीधरश्च राजेन्द्र तथा कुञ्चितमूर्धजाः ॥ २५

उष्णीषिणो मकुटिनश् चारुवक्रास्स्वलङ्कृताः ।
पद्मोत्पलापीडधरास् तथा कुमुदधारिणः ॥ २६

माहात्म्येन च संयुक्ताश् शतशोऽथ सहस्रशः ।
शतघ्नीचक्रहस्ताश्च तथा मुसलपाणयः ॥ २७

भुसुण्ठीपाशहस्ताश्च गदाहस्ताश्च भारत ।
पृष्ठेषु बद्धेषुधयश् चित्रचापा रणोत्कटाः ॥ २८

सध्वजास्सपताकाश्च सघण्टास्सपरश्वधाः ।
महापाशोद्यतकरास् तथा लगुडपाणयः ॥ २९

[2]स्थूणाहस्ताः खड्गहस्तास् सर्पोच्छ्रितकिरीटिनः ।
महासर्पाङ्गदधराश् चित्राभरणधारिणः ॥ ३०

रजोध्वस्ताः पङ्कदिग्धास् सर्वे चित्राम्बरस्रजः ।
नीलाङ्गाः कमलाङ्गाश्च मुण्डवक्रास्तथैव च ॥ ३१

---

1. अ—नास्तीदमर्धम्
2. अ—नास्तीदमर्धम

भेरीशङ्खमृदङ्गांस्ते झर्झरानकगोमुखान् ।
अवादयन् पारिषदास् संहृष्टाः कनकप्रभाः ॥ ३२

गायमानास्तथैवान्ये संहृष्टाः पुरुषर्षभाः ।
लङ्घयन्तः प्लवन्तश्च वल्गन्तश्च महा[1]रथाः ॥ ३३

धावन्तो जवनाश्चण्डाः पवनोद्धूतमूर्धजाः ।
मत्ता इव महानागा विनदन्तो मुहुर्मुहुः ॥ ३४

सुभीमा घोररूपाश्च शूलपट्टिसपाणयः ।
विरागचित्रवसनाश् चित्रमाल्यानुलेपनाः ॥ ३५

रत्नचित्राङ्गदधरास् समुद्यतकरास्तथा ।
हन्तारो द्विषतां शूराः प्रसह्यासह्यविक्रमाः ॥ ३६

पातारोऽसृग्वसौघानां मांसान्त्रकृतभोजनाः ।
चूडालाः कर्णिकाराश्च प्रकृशा मन्थरोदराः ॥ ३७

अतिह्रस्वातिदीर्घाश्च प्रलम्बाश्चातिभैरवाः ।
[2]विकटाः काललम्बोष्ठा बृहच्छेपाण्डपिण्डकाः ॥ ३८

महार्हनानामकुटा मुण्डाश्च जटिलाः परे ।
सार्केन्दुग्रहनक्षत्रां द्यां कुर्वंस्ते महीतले ॥ ३९

उत्सहेरंश्च ये हन्तुं भूतग्रामं चतुर्विधम् ।
ये च वीतभया नित्यं हरस्य भ्रुकुटीसहाः ॥ ४०

---

1. क-ख-घ—बलाः 2. क-घ—इतः पद्याधीनि न सन्ति

कामकारकरास्सिद्धास् त्रैलोक्यस्येश्वरेश्वराः ।
नित्यानन्दाः प्रमुदिता वागीशा वीतमत्सराः ॥ ४१

प्राप्याष्टगुणमैश्वर्यं ये न यान्ति च विस्मयम् ।
येषां विस्मयते नित्यं कर्मभिर्भगवान् भवः ॥ ४२

[1]मनोवाक्कर्मभिर्युक्तैर् नित्यमाराधितश्च यैः ।
मनोवाक्कर्मभिर्भक्तान् पाति पुत्रानिवौरसान् ॥ ४३

पिबन्तोऽसृग्वसाश्चान्ये क्रुद्धा ब्रह्मद्विषां सदा ।
चतुर्विधात्मकं सोमं ये पिबन्ति च नित्यदा ॥ ४४

श्रुतेन ब्रह्मचर्येण तपसा च दमेन च ।
ये समाराध्य शूलाङ्कं भवसायुज्यमागताः ॥ ४५

यैरात्मभूतैर्भगवान् पार्वत्या च महेश्वरः ।
सह भूतगणैर्भुङ्क्ते भूतभव्यभवत्प्रभुः ॥ ४६

नानाविचित्रहसितैः क्ष्वेलितोत्कृष्टगर्जितैः ।
संनादयन्तस्ते विश्वम् अश्वत्थामानमभ्ययुः ॥ ४७

संस्तुवन्तो महादेवं हाकुर्वाणास्सुवर्चसः ।
विवर्धयिषवो द्रौणेर् महिमानं महात्मनः ॥ ४८

जिज्ञासमानास्तत्तेजस् सौप्तिकं च दिदृक्षवः ।
भीमोग्रपरिघालातशूलपट्टसपाणयः ॥ ४९

1. अ-ब—नास्तीदमर्धम्

घोररूपास्समाजग्मुर् भूतसङ्घा[1]स्सहस्रशः ॥ ४९॥

जनयेयुर्भयं ये हि त्रैलोक्यस्यापि दर्शनात् ।
न तु तान् प्रेक्षमाणोऽपि व्यथामुपजगाम ह ॥ ५०॥

अथ द्रौणिर्धनुष्पाणिर् बद्धगोधाङ्गुलित्रवान् ।
स्वयमेवात्मनाऽऽत्मानम् उपहारमुपाहरत् ॥ ५१॥

धनूंषि समिधस्तत्र पवित्राणि सिताश्शराः ।
हविरात्मवतश्चात्मा तस्मिन् भारत कर्मणि ॥ ५२॥

ततस्सोमेन मन्त्रेण द्रोणपुत्रः प्रतापवान् ।
उपहारं महामन्युर् अथात्मानमुपाहरत् ॥ ५३॥

तं रुद्रं रौद्रकर्माणं रौद्रैः कर्मभिरच्युतम् ।
अभिष्टूय महात्मानम् इत्युवाच [2]कृताञ्जलिः ॥ ५४॥

द्रौणिः—

इममात्मानमद्याहं जातमाङ्गिरसे कुले ।
अग्नौ जुहोमि भगवन् प्रतिगृह्णीष्व मे बलिम् ॥ ५५॥

तव भक्त्या महादेव परमेण समाधिना ।
अस्यामापदि विश्वात्मन्नुपाकुर्मि महाव्रतः ॥ ५६॥

त्वयि सर्वाणि भूतानि सर्वभूतेषु चासि वै ।

---

1. क-ख—स्समन्ततः
2. ख—महाव्रतः    मध्ये अर्धचतुष्टयं नास्ति

गुणानां तु प्रधानानाम् एकत्वं त्वयि तिष्ठति ॥ ५७॥

[1]समभूताशय विभो हविर्भूतमवस्थितम् ।
प्रतिगृह्णाण मां देव यदि शक्याः परे मया ॥ ५८॥

सञ्जयः—

इत्युक्त्वा द्रौणिरास्थाय तां वेदीं दीप्तपावकाम् ।
सन्त्यज्यात्मानमारुह्य कृष्णवर्त्मन्युपाविशत् ॥ ५९॥

तमूर्ध्वबाहुं निश्चेष्टं दृष्ट्वा हविरुपस्थितम् ।
अब्रवीद्भगवान् साक्षान्महादेवो हसन्निव ॥ ६०॥

महेश्वरः—

सत्यशौचार्जवत्यागैस् तपसा नियमेन च ।
क्षान्त्या भक्त्या च धृत्या च कर्मणा मनसा गिरा ॥ ६१॥

यथावदहमाराध्यः कृष्णेनाक्लिष्टकर्मणा ॥ ६२
तस्मादिष्टतमः कृष्णाद् अन्यो मम न विद्यते ॥ ६२॥

कुर्वता तस्य सम्मानं त्वां च जिज्ञासता मया ।
पाञ्चालास्सर्वदा गुप्ता मायाश्च बहुशः कृताः ॥ ६३॥

ततस्तस्यैव मानार्थं पाञ्चाला रक्षिता मया ।
अभिभूतास्तु कालेन नैषामद्यास्ति जीवितम् ॥ ६४॥

सञ्जयः—

एवमुक्त्वा महेष्वासं भगवानात्मनस्तनुम् ।

---

1. क—अर्धषट्कं नास्ति

आविवेश ददौ चास्मै विमलं खड्गमुत्तमम् ॥ ६५॥
अथाविष्टो भगवता भूयो जज्वाल तेजसा ।
वेगवांश्चाभवद्युद्धे देवसृष्टेन तेजसा ॥ ६६॥

तं दृष्ट्वा सर्वभूतानि राक्षसाश्च समाद्रवन् ॥ ६७

अभितश्शिबिरं यान्तं द्रोणपुत्रं महारथम् ।
देवदेवं हरं स्थाणुं यान्तं साक्षाद्दिवेश्वरम् ॥ ६८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
॥ ७८ ॥ सौप्तिकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये ६८ श्लोकाः]

---

## ॥ अष्टमोऽध्यायः ॥



शिबिरद्वारे कृपकृतवर्माणौ संस्थाप्यान्तः प्रविष्टेन द्रौणिना धृष्टद्युम्नादिपाञ्चालानां द्रौपदेयादीनां च वधः ॥ १ ॥ भयाद्बहिर्निष्क्रान्तानां कृपकृतवर्मभ्यां वधः ॥ २ ॥

---

धृतराष्ट्रः—

तथा प्रयाते शिबिरं द्रोणपुत्रे महारथे ।
कच्चित् कृपश्च भोजश्च भयार्तौ न व्यवर्तताम् ॥ १

कच्चिन्न वारितौ क्षुद्रैः रक्षिभिर्नोपलक्षितौ ।
असह्यमिति मन्वानौ न निवृत्तौ महारथौ ॥ २

प्रमथ्य शिबिरं कच्चिद्धत्वा सोमकपाण्डवान् ।
कृता प्रतिज्ञा सफला कच्चित् सञ्जय सा निशि ॥ ३

दुर्योधनस्य पदवीं कच्चित् परमकां रणे ।
गत्वा तिष्ठत्यसौ द्रौणिः कृत्वा कर्म सुदुष्करम् ॥ ४

धृष्टद्युम्नशिखण्डिभ्यां द्रौपद्याश्च सुतैः किल ।
सञ्छन्ना मेदिनी सुप्तैर् निहतैः पाण्डुसैनिकैः ॥ ५

पाञ्चालैर्वा विनिहतैश् शयानै रुधिरोक्षितैः ।
कच्चिन्महीतलं छन्नं तन्ममाचक्ष्व सञ्जय ॥ ६

सञ्जयः—

तस्मिन् प्रयाते शिबिरं द्रोणपुत्रे महात्मनि ।
कृपश्च कृतवर्मा च द्रौणिमेवाभ्यवर्तताम् ॥ ७

अश्वत्थामा तु तौ दृष्ट्वा यत्नवन्तौ महारथौ ।
प्रहृष्टश्शनकै राजन्निदं वचनमब्रवीत् ॥ ८

अश्वत्थामा—

यत्तौ भवन्तौ पर्याप्तौ सर्वशस्त्रभृतामपि ।
किंपुनर्योधशेषस्य प्रसुप्तस्य विशेषतः ॥ ९

अहं प्रविश्य शिबिरं प्रचरिष्यामि कालवत् ।
यथा न कश्चिदेतेषां जीवन् मुच्येत मानवः ॥ १०
[1]तथा भवद्भ्यां कार्यं स्याद् इति मे निश्चिता मतिः ॥ १०॥

1. क-ख-घ—इदमर्धं नास्ति

सञ्जयः—

इत्युक्त्वा प्राविशद्द्रौणिः पार्थानां शिविरं महत् ।
अद्वारेणाभ्यवस्कन्द्य [1]विनीय भयमात्मनः ॥ ११॥

स प्रविश्य महाबाहुर् उद्देशज्ञश्च तस्य हि ।
द्रौणिः परमसङ्क्रुद्धस् तेजसा प्रज्वलन्निव ॥ १२॥

ततः पर्यचरत् सर्वं सम्प्रसुप्तजनं निशि ॥ १३
धृष्टद्युम्नस्य निलयं शनकैरभ्युपागमत् ॥ १३॥

ते तु कृत्वा महत् कर्म श्रान्ताश्च बलवद्रणे ।
प्रसुप्ता वै सुविश्वस्तास् स्वसैन्यपरिवारिताः ॥ १४॥

अनुप्रविश्य तद्वेश्म धृष्टद्युम्नस्य भारत ।
पाञ्चाल्यं शयने द्रौणिर् अपश्यत् सुप्तमन्तिकात् ॥ १५॥

क्षौमावदाते महति स्पर्ध्यास्तरणसंवृते ।
माल्यप्रवरसंयुक्तैर् धूपैर्गन्धैश्च वासिते ॥ १६॥

तं शयानं महात्मानं विश्वस्तमकुतोभयम् ।
अपोथयत पादेन शयनस्थं महीपते ॥ १७॥

स बुद्ध्वा चरणस्पर्शाद् उत्थाय रणदुर्मदः ।
अभ्यजानाददीनात्मा द्रोणपुत्रं महारथम् ॥ १८॥

तमुत्पतन्तं शयनाद् अश्वत्थामा महाबलः ।

---

1. घ—इतोऽष्टौ पादा न सन्ति

केशेष्वा[1]लभ्य पाणिभ्यां निष्पिपेष महीतले ॥ १९॥

स बलात् तेन निष्पिष्टस् साध्वसेन च भारत ।
[2]अभ्याक्रान्तश्च निद्रान्धो न शशाक विचेष्टितुम् ॥ २०॥

निष्पिष्य तु ततो भूमौ पाञ्चाल्यं द्रौणिरञ्जसा ।
धनुषो ज्यां विमुच्याशु क्रूरबुद्धिरमर्षणः ॥ २१॥

तस्य कण्ठेऽथ बद्ध्वा तां त्वरितः क्रोधमूर्च्छितः ।
द्रौणिः क्रूरं मनः कृत्वा पाञ्चाल्यमवधीत् तदा ॥ २२॥

तमाक्रम्य पदा राजन् कण्ठे चोरसि पादयोः ।
नदन्तं विष्फुरन्तं च पशुमारममारयत् ॥ २३॥

स वार्यमाणस्तरसा बलाद्बलवता बली ।
तुदन् नखैस्तथा द्रौणिं नातिव्यक्तमुदाहरत् ॥ २४॥

धृष्टद्युम्नः—

आचार्यपुत्र शस्त्रेण जहि मां मा चिरं कृथाः ।
त्वत्कृते सुकृताँल्लोकान् गच्छेयं द्विपदां वर ॥ २५॥

सञ्जयः—

तस्याव्यक्तां तु तां वाचं संश्रुत्य द्रौणिरब्रवीत् ॥ २६

द्रौणिः—

आचार्यघातिनां लोका न सन्ति कुलपांसन ।
तस्माच्छस्त्रेण निधनं न त्वमर्हसि दुर्मते ॥ २७

---

1. क-ख-घ—लभ्य 2. ख—अर्धनवकं नास्ति

नृशंसेनातिवृत्तेन त्वया मे निहतः पिता ।
तस्मात् त्वमपि वध्यस्तु नृशंसेन नृशंसवत् ॥ २८

सञ्जयः—
एवमुक्त्वा तु तं वीरं सिंहो मत्तमिव द्विपम् ।
मर्मस्वभ्यहनद्वीरं पादघातैस्सुदारुणैः ॥ २९

तस्य वीरस्य शब्देन मार्यमाणस्य वेश्मनि ।
अबुध्यन्नथ राजेन्द्र दारा ये चास्य रक्षिणः ॥ ३०

ते दृष्ट्वा [1]धर्षयन्तं तु अतिमानुषविग्रहम् ।
भूतमित्यध्यवस्यन्तस् तस्मान्न व्याहरन् भयात् ॥ ३१

तं तु तेनाभ्युपायेन गमयित्वा यमक्षयम् ।
सोऽध्यतिष्ठत तेजस्वी रथं प्राप्य सुदर्शनम् ॥ ३२

स तस्य भवनाद्राजन् निष्क्रम्यानादयन् दिशः ।
रथेन शिबिरं प्रायाज् जिघांसुर्द्विषतो बली ॥ ३३

अपक्रान्ते ततस्तस्मिन् द्रोणपुत्रे महारथे ।
सहिता रक्षिभिस्तैस्तु प्रणेदुर्योषितस्तदा ॥ ३४

राजानं निहतं दृष्ट्वा भृशं शोकपरायणाः ।
व्याक्रोशन् क्षत्रियास्सर्वे धृष्टद्युम्नस्य भारत ॥ ३५

तासां तेन तु शब्देन समीपे क्षत्रियर्षभाः ।
समनह्यन्त सम्भ्रान्ता किमेतदिति चाब्रुवन् ॥ ३६

1. क-ख—वर्ष्मवन्तं त ... विक्रमम्

स्त्रियस्तु राजन् वित्रस्ता [1]भारद्वाजनिरीक्षिताः ।
अब्रुवन् दीनकण्ठेन क्षिप्रमागम्यतामिति ॥ ३७

स्त्रियः—

राक्षसो वा मनुष्यो वा नैनं जानीम को न्वयम् ।
हत्वा पाञ्चालदायादं रथमारुह्य तिष्ठति ॥ ३८

सञ्जयः—

ततस्ते योधमुख्यास्तं सहसा पर्यवारयन् ।
स तानापततस्सर्वान् रुद्रास्त्रेणावपोथयत् ॥ ३९

धृष्टद्युम्नं च हत्वा स तांश्चैवास्य पदानुगान् ।
अपश्यच्छयने सुप्तम् उत्तमौजसमन्तिके ॥ ४०

तमप्याक्रम्य पादेन कण्ठे चोरसि तेजसा ।
तथैव मारयामास विचेष्टन्तमरिन्दमम् ॥ ४१

युधामन्युस्तु विक्रान्तो मत्वा तं राक्षसं स्म सः ।
गदामुद्यम्य वेगेन वक्षस्येनमताडयत् ॥ ४२

गदाप्रहाराभिहतो [2]नाचलद्द्रौणिराहवे ।
तमभिद्रुत्य वेगेन क्षितौ चैनमपातयत् ॥ ४३

विष्फुरन्तं च पशुवत् तथैवैनममारयत् ।
तथा स वीरो हत्वा तं ततोऽन्यान् समुपाद्रवत् ॥ ४४

1. क-ख—भारद्वाजं निरीक्ष्य तम् व—भारद्वाजं निरक्षतम्
2. क-ख-घ—नाकम्प

संसुप्तानेव राजेन्द्र तत्र तत्र महारथान् ।
पाञ्चालवीरानाक्रम्य क्रुद्धो न्यहनदन्तिके ॥ ४५

पुरतस्स्फुरमाणांश्च शमितेव पशून् मखे ॥ ४५॥

ततो निस्त्रिंशमादाय जघानान्यान् पृथग्जनान् ।
भागशो विचरन् मार्गान् असियुद्धविशारदः ॥ ४६॥

तथैव गुल्मान् सम्प्रेक्ष्य शयानान् मध्यगौल्मिकान् ।
श्रान्तान् व्यस्तायुधान् सर्वान् असिनैव व्यपोथयत् ॥ ४७॥

योधानश्वान् द्विपांश्चैव प्राच्छिनत् स वरासिना ।
रुधिरोक्षितसर्वाङ्गः कालसृष्ट इवान्तकः ॥ ४८॥

विष्फुरद्भिश्च तैर्द्रौणिर् निस्त्रिंशस्योद्यमेन च ।
अवक्षेपेण चैवांसे त्वथ रक्तोक्षितोऽभवत् ॥ ४९॥

तस्य लोहितहस्तस्य दीप्तखड्गस्य युध्यतः ।
अमानुष इवाकारो बभौ परमभीषणः ॥ ५०॥

ये त्वजानन्त कौरव्य तेन शब्देन मोहिताः ।
वीक्षमाणास्तु ते तत्र द्रौणिं दृष्ट्वा प्रविव्यथुः ॥ ५१॥

तद्रूपं तस्य ते दृष्ट्वा क्षत्रियाश्शत्रुकर्शनाः ।
राक्षसं शङ्कमानास्तु नयनानि न्यमीलयन् ॥ ५२॥

स घोररूपो व्यचरत् कालवच्छिबिरे तदा ।

अपश्यद्द्रौपदीपुत्रान् अवशिष्टान् ससोमकान् ॥ ५३॥

तेन शब्देन वित्रस्ता धनुर्हस्ता महारथाः ।
धृष्टद्युम्नं हतं श्रुत्वा द्रौपदेया विशां पते ॥ ५४॥

अवाकिरञ् शरव्रातैर् भारद्वाजं समन्ततः ॥ ५५

ततस्तेन निनादेन सम्प्रबुद्धाः प्रभद्रकाः ।
शिलीमुखैश्शिखण्डी च द्रोणपुत्र[1]मदारयन् ॥ ५६

भारद्वाजस्तु तान् दृष्ट्वा शरवर्षाणि वर्षतः ।
ननाद बलवन्नादं जिघांसुस्तान् सुदुर्जयान् ॥ ५७

ततः परमसङ्क्रुद्धः पितुर्वधमनुस्मरन् ।
अवतीर्य रथोपस्थात् त्वरमाणोऽभिदुद्रुवे ॥ ५८

सहस्रचन्द्रविमलं गृहीत्वा चर्म संयुगे ।
खङ्गं च विमलं दिव्यं जातरूपपरिष्कृतम् ॥ ५९

द्रौपदेयानभिद्रुत्य खङ्गेन व्यचरद्बली ॥ ५९॥

ततस्स नरशार्दूलं प्रतिविन्ध्यं तमाहवे ।
कुक्षिदेशेऽहनद्राजन् स हतो न्यपतद्भुवि ॥ ६०॥

प्रासेन तु ततो द्रौणिं सुतसोमो ह्यताडयत् ॥ ६१

प्रासप्रहारं तु तदा विगृह्य द्रौणिराहवे ।
सुतसोमस्य सासिं तु बाहुं चिच्छेद मारिष ॥ ६२

1. क-ब—मवारयन्

पुनश्चाप्यहनत् पार्श्वे स भिन्नहृदयोऽपतत् ॥ ६२॥

नाकुलिस्तु शतानीको रथचक्रेण वीर्यवान् ।
दोर्भ्यामुत्क्षिप्य वेगेन वक्षस्येनमताडयत् ॥ ६३॥

अताडयच्छतानीकं मुक्तचक्रं द्विजस्तु सः ।
स विह्वलो ययौ भूमिं ततोऽस्यापाहरच्छिरः ॥ ६४॥

श्रुतकर्मा तु परिघं घोरं गृह्य दुरासदम् ।
अताडयत् समुद्यम्य वेगेन द्रौणिमुत्स्मयन् ॥ ६५॥

स तु तं श्रुतकर्माणम् आस्येऽभ्यघ्नद्वरासिना ।
स हतो न्यपतद्भूमौ विमूढो विकृताननः ॥ ६६॥

तेन शब्देन वीरस्तु श्रुतकीर्तिर्महद्धनुः ।
अश्वत्थामानमासाद्य शरवर्षैरवाकिरत् ॥ ६७॥

शरैराच्छादितस्तेन द्रोणपुत्रो महारथः ।
अदृश्यत महाराज श्वाविच्छललतो यथा ॥ ६८॥

तस्यापि शरवर्षाणि चर्मणा प्रतिवार्य सः ।
सकुण्डलं शिरः कायाद् भ्राजमानमपाहरत् ॥ ६९॥

ततो भीष्मनिहन्तारं सह सर्वैः प्रभद्रकैः ।
अभ्यघ्नत् सर्वतो वीरं नानाप्रहरणैर्बलात् ॥ ७०॥

शिलीमुखेन चाप्येनं भ्रुवोर्मध्ये समर्पयत् ॥ ७१

स तु क्रोधसमाविष्टो द्रोणपुत्रो महारथः ।
शिखण्डिनं समासाद्य द्विधा चिच्छेद सोऽसिना ॥ ७२

शिखण्डिनं ततो हत्वा क्रोधाविष्टः परन्तपः ।
प्रभद्रकगणान् सर्वान् अभिदुद्राव वेगवान् ॥ ७३

यच्च शिष्टं विराटस्य बलं तच्च समाद्रवत् ।
द्रुपदस्य च पुत्राणां पौत्राणां सुहृदां तथा ॥ ७४
चकार कदनं घोरं दृष्ट्वा तत्र महाबलः । ७४॥

अन्यानन्यांश्च पुरुषान् अभिसृत्याभिसृत्य च ।
न्यकृन्तदसिना द्रौणिर् असिमार्गविशारदः ॥ ७५॥

[1]कालीं रक्तास्यनयनां रक्तमाल्यानुलेपनाम् ।
रक्ताम्बरधरां घोरां पाशहस्तां शिखण्डिनीम् ॥ ७६॥

ददृशुः कालरात्रिं ते स्मयमानामिव स्थिताम् ॥ ७७
नराश्वकुञ्जरान् पाशैर् बद्ध्वा घोरैश्च तिष्ठतीम् ॥ ७७॥

हरन्तीं विविधान् प्रेतान् पाशबद्धान् विकेशकान् ।
तथैव च महाराज न्यस्तशस्त्रान् महारथान् ॥ ७८॥

स्वप्ने सुप्तान् नयन्तीं तां रात्रिष्वन्यासु मारिष ।
ददृशुर्योधमुख्यास्ते घ्नन्तं द्रौणिं तु नित्यदा ॥ ७९॥

यतः प्रवृत्तस्सङ्ग्रामः कुरुपाण्डवसेनयोः ।

1. ब—इतः एकोनविंशतिरर्धानि न सन्ति

ततःप्रभृति तां कन्याम् अपश्यन् द्रौणिमेव च ॥ ८०॥

ततो दैवहतान् पूर्वं पश्चाद्द्रौणिर्व्यपातयत् ।
त्रासयन् सर्वभूतानि व्यनदद्भैरवं रवम् ॥ ८१॥

तदनुस्मृत्य ते वीरा दर्शनं पौर्वकालिकम् ।
इदं तदित्यमन्यन्त दैवेनोपनिपीडिताः ॥ ८२॥

ततस्तेन निनादेन प्रत्यबुध्यन्त धन्विनः ।
शिबिरे पाण्डवेयानां शतशोऽथ सहस्रशः ॥ ८३॥

सोऽच्छिनत् कस्यचित् पादौ जघनं चापि कस्यचित् ।
कांश्चिद्बिभेद पार्श्वेषु कालसृष्ट इवान्तकः ॥ ८४॥

अत्युग्रप्रतिपिष्टैश्च विनदद्भिर्भृशातुरैः ।
गजाश्व[1]मनुजैश्चार्तैर् मही कीर्णाऽभवत् प्रभो ॥ ८५॥

क्रोशतां किमिदं कोऽयं किं शब्दः किं नु किं कृतम् ।
पाञ्चालानां तथा द्रौणिर् अन्तकस्समपद्यत ॥ ८६॥

अपेतशस्त्रसन्नाहान् संरब्धान् पाण्डुसैनिकान् ।
प्राहिणोन्मृत्युलोकाय द्रौणिः प्रहरतां वरः ॥ ८७॥

ततस्तच्छस्त्रवित्रस्ता भयादभ्यपतन् नराः ।
निद्रान्धा नष्टसंज्ञाश्च तत्र तत्र निपेतिरे ॥ ८८॥

---

1. घ—मथितैर्गात्रैर्मही कीर्णा
क-ख—मथितैश्चार्तैर्मही कीर्णाऽभवद्विभो

ऊरुस्तम्भगृहीताश्च कश्मलाभिहतौजसः ।
विनदन्तो भृशं त्रस्ता [1]निरैक्षन्त परस्परम् ॥ ८९॥

ततो रथं पुनर्द्रौणिर् आस्थितो भीमदर्शनः ।
धनुष्पाणिश्शरैरन्यान् प्रैषयद्यमसादनम् ॥ ९०॥

पुनरुत्प[2]तितः कांश्चिद् दूरादापततो नरान् ।
शूरानुत्पततश्चान्यान् कालरात्र्यै न्यवेदयत् ॥ ९१॥

तथैव स्यन्दनाग्रेण प्रमथन् स व्यरोचत ।
शरवर्षैश्च विविधैस् स शत्रूनभ्यवर्तत ॥ ९२॥

पुनश्च कांश्चिच्छस्त्रेण शतचन्द्रेण चर्मणा ।
तेन चाकाशवर्णेन तदाचरत सोऽसिना ॥ ९३॥

स तथा शिबिरं तेषां द्रौणिराहवदुर्मदः ।
व्यक्षोभयत राजेन्द्र महाह्रदमिव द्विपः ॥ ९४॥

उत्पेतुस्तेन शब्देन योधा राजन् सहस्रशः ।
निद्रान्धाश्च भयार्ताश्च व्यधावन्त ततस्ततः ॥ ९५॥

विस्वरं चुक्रुशुश्चान्ये बह्वबद्धमथाब्रुवन् ।
न च स्म प्रत्यपद्यन्त शस्त्राणि वसनानि च ॥ ९६॥

---

1. क-खघ—निरतक्षन् परस्परम्
2. क-ख—ततः कांश्चिद्दूरा
   घ—पुनरुत्पततः कांश्चिच्छतचन्द्रेण वर्मणा ।
   इति विद्यते मध्ये श्लोकद्वयं त्यक्तम् ॥

विमुक्तकेशाश्चाप्यन्ये नाभ्यजानन् परस्परम् ।
[1]उत्पतन्तः परे भीताः केचित् तत्र परिभ्रमन् ॥ ९७॥

पुरीषाण्युत्सृजन् केचित् केचिन्मूत्रं प्रसुस्रुवुः ।
बन्धनानि तु राजेन्द्र सञ्छिद्य तुरगद्विपाः ॥ ९८॥

सर्वे पर्यपतंश्चान्ये कुर्वन्तो महदाकुलम् ॥ ९९

तत्र केचिन्नरा भीता न्यपतन्त महीतले ।
तथैव पतिता भूमौ न्यषीदन् गजवाजिनः ॥ १००

तस्मिंस्तथा वर्तमाने रक्षांसि भरतर्षभ ।
हृष्टानि व्यनदन्नुच्चैर् मुदा युक्तानि सत्तम ॥ १०१

स शब्दः प्रेरितो राजन् भूतसङ्घैर्मुदा युतैः ।
अपूरयद्दिशस्सर्वा दिवं चातिमहास्वनः ॥ १०२

[2]तेषामार्तस्वरं श्रुत्वा वित्रस्ता गजवाजिनः ।
मुक्ताः पर्यपतन् राजन् मृद्नन्तश्शिबिरे जनम् ॥ १०३

तैस्तथा परिधावद्भिश् चरणोदीरितं रजः ।
अकरोच्छिबिरं तेषां रजन्यां द्विगुणं तमः ॥ १०४

तस्मिंस्तमसि सञ्जाते प्रमूढास्सर्वतो जनाः ।
नाजानन् पितरः पुत्रान् भ्रातॄन् भ्रातर एव च ॥ १०५

---

1. क-ख—उत्पतन्नपरे भीताः  घ—उत्क्रमन्त परे
2. घ—इत आरभ्यार्धचतुष्टयं नास्ति

गजो [1]गजमतिक्रम्य निर्मनुष्या हयो हयम् ।
अताडयंस्तथाऽमृद्नंस् तथाऽभञ्जंश्च भारत ॥ १०६

[2]ते भग्नाः प्रपतन्ति स्म मृद्नन्तश्च परस्परम् ।
न्यपातयंस्त्वथ रथान् पातयित्वाऽप्यपीपिषन् ॥ १०७

विचेतसस्सनिद्राश्च तमसा चावृता नराः ।
स्वानेव जघ्निरे मूढाः कालेनाभिप्रचोदिताः ॥ १०८

त्यक्त्वा द्वाराणि च द्वास्थास् तथा गुल्मानि गौल्मिकाः ।
प्राद्रवन्त यथाशक्ति ते तत्रैव विचेतसः ॥ १०९

विप्रनष्टाश्च नान्योन्यं अजानन्त तथा विभो ।
क्रोशन्तस्तात पुत्रेति दैवोपहतचेतसः ॥ ११०

पलायंत दिशस्ते वै तानप्युत्सृज्य बान्धवान् ।
गोत्रनामभिरन्योन्यम् आक्रन्दन्त ततो जनाः ॥ १११

हाहारवांस्तु कुर्वाणाः पृथिव्यां शेरते परे ।
तान् बुद्ध्वा रणमध्येऽसौ द्रोणपुत्रो व्यपोथयत् ॥ ११२

अपरे तत्र वध्यन्तो मुहुर्मुहुरचेतसः ।
शिबिरान्निष्पतन्ति स्म क्षत्रिया भयपीडिताः ॥ ११३

तांस्तु निष्पतितांस्त्रस्तान् शिबिराज्जीवितैषिणः ।

---

1. ब—गजमभिक्रम्य निर्मनुष्यो हयो हयम्
   क—गजमभिक्रम्य हयो हयमपातयत्
2. अ—नास्तीदमर्धम्

कृतवर्मा कृपश्चैव द्वारदेशे निजघ्नतुः ॥ ११४

विशस्तशस्त्रकवचान् मुक्तकेशान् कृताञ्जलीन् ।
वेपमानान् क्षितौ भीतान् नैव कांश्चिद्व्यमुञ्चताम् ॥ ११५

नामुच्यत तदा कश्चिन्निष्क्रान्तश्शिबिराद्बहिः ।
कृपस्य च महाराज हार्दिक्यस्य च धीमतः ॥ ११६

भूयश्चैव चिकीर्षन्तौ द्रोणपुत्रस्य तौ प्रियम् ।
त्रिषु देशेषु ददतुश् शिबिरस्य हुताशनम् ॥ ११७

ततः प्रकाशे शिबिरे खड्गेन पितृनन्दनः ।
अश्वत्थामा महाराज व्यचरत् कृतहस्तवत् ॥ ११८

कांश्चिद्योधान् स खड्गेन मध्ये सञ्छिद्य वीर्यवान् ।
अपातयद्द्रोणसुतो सञ्छिन्दंस्तिलकाण्डवत् ॥ ११९

कांश्चिदापततो वीरान् अपरांश्च प्रधावतः ।
व्ययोजयत खड्गेन प्राणैर्द्रौणिः कृतान्तवत् ॥ १२०

विनदद्भिर्भृशायस्तैर् नराश्वद्विपसत्तमैः ।
पतितैरभवत् कीर्णा मेदिनी भरतर्षभ ॥ १२१

मानुषाणां सहस्रेषु हतेषु पतितेषु च ।
उदतिष्ठन् कबन्धानि बहून्युत्थाय चापतन् ॥ १२२

साङ्गदान् सायुधान् बाहून् विचकर्त शिरांसि च ।
हस्तिहस्तोपमानूरून् हस्तान् पादांश्च भारत ॥ १२३

पृष्ठच्छिन्नान् शिरश्छिन्नान् पार्श्वछिन्नांस्तथाऽपरान् ।
समासाद्याकरोद्द्रौणिः कांश्चिच्चापि पराङ्मुखान् ॥ १२४

मध्य[1]काये नरांश्छिन्नान् चिच्छेदान्यांश्च कण्ठतः ।
अंसदेशे च तत्रान्यान् काये प्रावेशयच्छिरः ॥ १२५

[2]एवं हि बहुशस्तत्र निघ्नतो बलवत्तरान् ।
तमसा रजनी घोरा बभौ दारुणदर्शना ॥ १२६

किञ्चित्प्राणैश्च पुरुषैर् हतैश्चान्यैस्सहस्रशः ।
बहुना च गजाश्वेन भूरभूद्भीमदर्शना ॥ १२७

वर्धयन्तो भयं घोरं नराश्वद्विरदे रणे ।
क्रुद्धेन द्रोणपुत्रेण सञ्छिन्नाः प्रापतन् भुवि ॥ १२८

मातॄश्चान्ये पितॄंश्चान्ये भ्रातॄंश्चान्ये च चुक्रुशुः ।
केचिदूचुर्नराः क्रुद्धैर् धार्तराष्ट्रैः कृतं रणे ॥ १२९

नराः—

यत्नः कृतः प्रसुप्तानां रक्षोभिर्भीमकर्मभिः ।
असान्निध्यात्तु पार्थानाम् इदं नः कदनं कृतम् ॥ १३०

न देवासुरगन्धर्वैर् न यक्षैर्न च राक्षसैः ।
शक्यो जेतुं हि कौन्तेयो नेता यस्य जनार्दनः ॥ १३१

---

1. क-ख—मध्यकाये नरांश्चान्यां श्चिच्छेदान्यान् स कर्णतः ।
घ—देशे नरानन्यांश्चिच्छेदान्यांश्च कर्णतः
2. क-ख—एवं सुबहुशस्तत्र घ्नता हि बलवत्तरान् ।

ब्रह्मण्यस्सत्यवाग्दान्तस् सर्वभूतानुकम्पनः ॥ १३१॥

न च सुप्तं प्रमत्तं वा न्यस्तशस्त्रं कृताञ्जलिम् ।
धावन्तं मुक्तकेशं च हन्यात् पार्थो धनञ्जयः ॥ १३२॥

तदिदं नः कृतं घोरं रक्षोभिः क्रूरकर्मभिः ॥ १३३

सञ्जयः—

इति लालप्यमानास्तु शेरते बहवो जनाः ॥ १३३॥

स्तनतां च मनुष्याणाम् अपरेषां च कूजताम् ।
ततो मुहूर्तात् प्राशाम्यत् स शब्दस्तुमुलो महान् ॥ १३४॥

शोणितव्यतिषिक्तायां वसुधायां नराधिप ।
तद्रजस्तुमुलं राजन् क्षणेनान्तरधीयत ॥ १३५॥

संवेष्टमानानुद्विग्नान् निरुत्साहान् सहस्रशः ।
न्यपातयन्नरान् क्रुद्धः पशून् पशुपतिर्यथा ॥ १३६॥

अन्योन्यं सम्परिष्वज्य शयानाञ्जीवतोऽपरान् ।
संलीनान् द्रवतश्चापि सर्वान् द्रौणिरपोथयत् ॥ १३७॥

हुताशनेन दह्यन्ते वध्यन्ते द्रौणिना परे ।
[1]परस्परं तदा योधा गमयन् यमसादनम् ॥ १३८॥

तस्या रजन्यास्त्वर्धेन पाण्डवानां महद्बलम् ।
गमयामास राजेन्द्र द्रौणिर्यमनिवेशनम् ॥ १३९॥

निशाचराणां सत्त्वानां रात्रिस्सा हर्षवर्धिनी ।

---

1. अ—नास्तीदमर्धम्

आसीन्नरगजाश्वानां रौद्रा क्षयकरी भृशम् ॥ १४०॥

तत्राद्दश्यन्त रक्षांसि पिशाचाश्च पृथग्विधाः ।
खादन्ते परमांसानि पिबन्तश्शोणितानि च ॥ १४१॥

करालाः पिङ्गला रौद्राश् शैलदन्ता रजस्वलाः ।
जटिला भीमवक्राश्च पञ्चपादा महोदराः ॥ १४२॥

पश्चादङ्गुलयो रूक्षा विरूपा भैरवस्वनाः ।
गजाननातिह्रस्वाश्च नीलवर्णा विभीषणाः ॥ १४३॥

[1]सपुत्रदारास्सुक्रूराः कान्दिशीकास्सुनिर्घृणाः ॥ १४४
विविधानि च रूपाणि तत्राद्दश्यन्त रक्षसाम् ॥ १४४॥

पीत्वा च शोणितं हृष्टाः प्रानृत्यन् गणशोऽपरे ।
इदं परमिदं मेध्यम् इदं स्वाद्विति चाब्रुवन् ॥ १४५॥

मेदोमज्जास्थिरक्तानां मांसानां भृशमाशिताः ।
वरमांसानि खादन्तः क्रव्यादा मांसगर्धिनः ॥ १४६॥

वसाश्चाप्यपरे पीत्वा पर्यधावन् विकुक्षिकाः ।
[2]नानावक्रास्तथा रौद्राः क्रव्यादाः पिशिताशनाः ॥ १४७॥

अयुतानि च तत्रासन् प्रयुतान्यर्बुदानि च ।
रक्षसां घोररूपाणां महतां घोरकर्मणाम् ॥ १४८॥

मुदितानां वितृप्तानां तस्मिन् महति वैशसे ।

1. अ—नास्तीदमर्धम् 2. अ—नास्तीदमर्धम्

समेतानि बहून्यासन् भूतानि च जनाधिप ॥ १४९॥

एवंविधा हि सा रात्रिस् सोमकानां जनक्षये ।
प्रसुप्तानां प्रमत्तानाम् आसीत् सुभृशदारुणा ॥ १५०॥

असंशयं च कालस्य पर्यायो दुरतिक्रमः ।
तादृशा निहता यत्र कृत्वाऽस्माकं जनक्षयम् ॥ १५१॥

धृतराष्ट्रः—

प्रागेव सुमहत् कर्म द्रौणिरेव महाबलः ।
नाकरोदीदृशं कस्मान्मत्पुत्रविजये धृतः ॥ १५२॥

अथ कस्माद्धते क्षत्रे कर्मेदं कृतवानसौ ।
द्रोणपुत्रो महेष्वासस् तन्मे शंसितुमर्हसि ॥ १५३॥

सञ्जयः—

तेषां नूनं भयान्नासौ कृतवान् कुरुसत्तम ।
असान्निध्ये तु पार्थानां केशवस्य च धीमतः ॥ १५४॥

सात्यकेश्चापि कर्मेदं द्रोणपुत्रेण साधितम् ॥ १५५

को हि तेषां समक्षं तान् हन्यादपि मरुत्पतिः ।
एतदीदृशकं राजन् वृत्तं सुप्तजने निशि ॥ १५६

ततो जनक्षयं कृत्वा पाण्डवानां महात्ययम् ।
प्रत्यूषकाले शिबिरात् प्रतिगन्तुमियेष सः ॥ १५७

नृशोणितावसिक्तस्य द्रौणेरासीदसित्सरुः ।

पाणिना सह संश्लिष्ट एकीभूत इव प्रभो ॥ १५८

स निश्शेषानरीन् कृत्वा विरराम निशाक्षये ।
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः ॥ १५९

यथाप्रतिज्ञं तत् कर्म कृत्वा द्रौणायनिः प्रभो ।
दुर्गमां पदवीं कृत्वा पितुरासीद्गतव्यथः ॥ १६०

यथैव संसुप्तजने शिबिरे प्राविशन्निशि ।
तथैव [1]हत्वा निश्शब्दं निश्चक्राम महारथः ॥ १६१

निष्क्रम्य शिबिरात् तस्मात् ताभ्यां सम्मन्त्र्य वीर्यवान् ।
आचख्यौ कर्म तत्ताभ्यां हृष्टस्संहर्षयन् विभो ॥ १६२

तौ स्म व्याचख्यतुस्तस्मै प्रियं प्रियकरौ तदा ।
पाञ्चालान् सृञ्जयांश्चैव विनिकृत्तान् सहस्रशः ॥ १६३

प्रीत्या चोच्चैरुदक्रोशंस् तथैवास्फोटयंस्तलान् ।
दिष्ट्या दिष्ट्येति चान्योन्यं समेत्योचुर्महारथाः ॥ १६४

परिष्वज्य ततो द्रौणिस् ताभ्यां च प्रतिनन्दितः ।
इदं हर्षाच्च सुमहद् आददे वाक्यमुत्तमम् ॥ १६५

द्रौणिः—

पाञ्चाला निहतास्सर्वे द्रौपदेयाश्च सर्वशः ।
सोमका मत्स्यशेषाश्च सर्वे विनिहता मया ॥ १६६

---

1. क-ख-ध—कृत्वा

इदानीं कृतकृत्यास्स्म यामस्तत्रैव मा चिरम् ।
यदि जीवति नो राजा तस्मै शंसामहे प्रियम् ॥　　　१६७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
॥ ७८ ॥ सौप्तिकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये १६७ श्लोकाः]

---

## ॥ नवमोऽध्यायः ॥



द्रौणिकृपकृतवर्मभिर्दुर्योधनमेत्य शोचनम् ॥ १ ॥ दुर्योधनं प्रति द्रौणिना सुप्तजनवधकथनम् ॥ २ ॥ दुर्योधनेन प्राणत्यागः ॥ ३ ॥ द्रौण्यादीनां नगरगमनम् ॥ ४ ॥ सञ्जयस्य व्यासानुग्रहप्राप्तदिव्यज्ञाननाशः॥५॥

---

सञ्जयः—

ते हत्वा सर्वपाञ्चालान् द्रौपदेयांश्च सर्वशः ।
आगच्छन् सहितास्सर्वे यत्र दुर्योधनो हतः ॥　　　१

गत्वा चैनमप[1]श्यन्त किञ्चित्प्राणं नराधिपम् ।
ततो रथेभ्यः प्रस्कन्द्य परिवव्रुस्तवात्मजम् ॥　　　२

तं भग्नसक्थं राजानं कृच्छ्रप्राणमचेतसम् ।
वमन्तं रुधिरं वक्त्राद् अपश्यन् वसुधातले ॥　　　३

वृतं समन्ताद्बहुभिश् श्वापदैर्घोररूपिभिः ।

---

1. क-ख-ब—श्यंस्ते

सालावृकगणैश्चैव भक्षयिष्यद्भिरन्तिकात् ॥ ४

निवारयन्तं तान् कृच्छ्राच् छ्वापदान् सञ्जिखादिषून् ।
विवेष्टमा[1]नमूरुभ्यां सुभृशं गाढवेदनम् ॥ ५

तं शयानं तथा दृष्ट्वा भूमौ स्वरुधिरोक्षितम् ।
हतशिष्टास्त्रयो राजञ् शोकार्ताः पर्यदेवयन् ॥ ६

अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ ६॥

तैस्त्रिभिश्शोणितादिग्धैर् निश्श्वसद्भिर्महारथैः ।
शुशुभे संवृतो राजा वेदिस्त्रिभिरिवाग्निभिः ॥ ७॥

ते तं शयानं सम्प्रेक्ष्य राजानमतथोचितम् ।
अविषह्येन दुःखेन सर्वे प्ररुरुदुस्त्रयः ॥ ८॥

ततस्ते रुधिरं हस्तैर् मुखान्निर्मृज्य तस्य ह ।
रणे राज्ञश्शयानस्य कृपणं पर्यदेवयन् ॥ ९॥

कृपः—

न दैवस्यातिभारोऽस्ति यदयं रुधिरोक्षितः ।
एकादशचमूभर्ता शेते दुर्योधनो हतः ॥ १०॥

पश्य चामीकराभस्य चामीकरविभूषिताम् ।
गदां गदाप्रियस्येमां समीपे पतितां भुवि ॥ ११॥

इयमेनं सदा शूरं न जहाति रणे रणे ।

---

1. क-ख-घ—नं मह्यां च सु

स्वर्गायापि व्रजन्तं हि न जहाति यशस्विनम् ॥ १२॥

पश्येमां सह वीरेण जाम्बूनदविभूषिताम् ।
शयानां शयने धर्म्यां भार्यां प्रीतिमतीमिव ॥ १३॥

यो वै मूर्धाभिषिक्तानाम् अग्रे याति परन्तपः ।
स हतो ग्रसते पांसुं पश्य कालस्य पर्ययम् ॥ १४॥

येन स्म निहता भूमौ शेरते क्षत्रियर्षभाः ।
स भूमौ निहतश्शेते कुरुराजः परैरयम् ॥ १५॥

भयान्नमन्तो राजानो यस्याथ शतसङ्घशः ।
स वीरशयने शेते क्रव्यादैः परिवारितः ॥ १६॥

यमुपासन्नृपाः पूर्वम् अर्थहेतोर्महीपतिम् ।
तमुपासन्त कौरव्यं क्रव्यादा मांसगर्द्धिनः ॥ १७॥

सञ्जयः—

तं शयानं कुरुश्रेष्ठं भूमौ भरतसत्तमम् ।
अश्वत्थामा समालिङ्ग्य कृपणं पर्यदेवयत् ॥ १८॥

द्रौणिः—

आहुस्त्वां नरशार्दूल मुख्यं सर्वधनुष्मताम् ।
धनाध्यक्षोपमं युद्धे शिष्यं सङ्कर्षणस्य ह ॥ १९॥

कथं विवरमद्राक्षीद् भीमसेनस्तवानघ ।
बलिनः कृतिनो नित्यं सूदः पापात्मवान् नृप ॥ २०॥

कालो नूनं महाराज लोकेऽस्मिन् बलवत्तरः ।

त्वां चेत् पश्याम निहतं भीमसेनेन संयुगे ॥ २१॥

कथं त्वां सर्वधर्मज्ञं क्षुद्रः पापो वृकोदरः ।
निकृत्या हतवान् मन्दो नूनं कालो दुरत्ययः ॥ २२॥

द्वन्द्वयुद्धे ह्यधर्मेण समाहूयौजसा मृधे ।
गदया भीमसेनेन सक्थिनी ते विनाशिते ॥ २३॥

अधर्मेण हतस्याजौ मृद्यमानं पदा शिरः ।
यदुपेक्षितवान् क्षुद्रो धिक् तमस्तु युधिष्ठिरम् ॥ २४॥

युद्धेष्वपवदिष्यन्ति योधा नूनं वृकोदरम् ।
यावत् स्थास्यन्ति भूतानि निकृत्या ह्यसि पातितः ॥ २५॥

ननु रामोऽब्रवीद्राजंस् त्वां सदा यदुनन्दनः ।
दुर्योधनसमो नास्ति गदायामिति वीर्यवान् ॥ २६॥

श्लाघते त्वां हि वार्ष्णेयो राजन् संसत्सु भारत ।
स शिष्यो मम कौरव्यो गदायुद्ध इति प्रभो ॥ २७॥

यां गतिं क्षत्रियस्याहुः प्रशस्तां परमर्षयः ।
हतस्याभिमुखस्याजौ प्राप्तस्त्वमसि तां गतिम् ॥ २८॥

दुर्योधन न शोचामि त्वामहं भरतर्षभ ।
हतपुत्रौ तु शोचामि गान्धारीं पितरं च ते ॥ २९॥

द्वावनाथौ कृतौ वीर त्वया नाथेन वर्धितौ ।

भिक्षां तौ विचरिष्येते शोचन्तौ पृथिवीमिमाम् ॥ ३०॥

धिगस्तु कृष्णं वार्ष्णेयम् अर्जुनं चापि दुर्मतिम् ।
धर्मज्ञमानिनौ यौ त्वा वध्यमानमुपेक्षताम् ॥ ३१॥

पाण्डवाश्चापि ते सर्वे किं वक्ष्यन्ति नराधिपान् ।
कथं दुर्योधनोऽस्माभिर् हत इत्यनपत्रपाः ॥ ३२॥

धन्यस्त्वमसि गान्धारे यस्त्वमायोधने हतः ।
प्रयातोऽभिमुखश्शत्रून् धर्मेण भरतर्षभ ॥ ३३॥

हतपुत्रा हि गान्धारी निहतज्ञातिबान्धवा ।
प्रज्ञाचक्षुश्च दुर्धर्षः कां दशां प्रतिपत्स्यते ॥ ३४॥

धिगस्तु कृतवर्माणं मां कृपं च महारथम् ।
ये वयं न गतास्स्वर्गं त्वां पुरस्कृत्य भारत ॥ ३५॥

दातारं सर्वकामानां रक्षितारं प्रजाहितम् ।
यद्वयं नाधिगच्छाम त्वां धिगस्मान् नराधमान् ॥ ३६॥

कृपस्य तव वीर्येण मम चैव पितुश्च मे ।
सभृत्यानां नरव्याघ्र रत्नवन्ति गृहाणि नः ॥ ३७॥

तव प्रसादादस्माभिस् सहपुत्रैस्सबान्धवैः ।
अवाप्ताः क्रतवो मुख्या बहवो भूरिदक्षिणाः ॥ ३८॥

कुतश्चापीदृशं सौख्यं उपलप्स्यामहे वयम् ।

यादृशं तु गता सौख्यं त्वां पुरस्कृत्य भूमिप ॥ ३९॥

[1]वयमेव त्रयो राजन् गच्छन्तं परमां गतिम् ।
यद्वै त्वां नानुगच्छामस् तेन तप्स्यामहे वयम् ॥ ४०॥

यादृशा नो गतास्स्वर्गं त्वां पुरस्कृत्य भूमिप ।
तत्स्वर्गहीना हीनार्थास् स्मरन्तस्सुकृतानि च ॥ ४१॥

किं नाम तद्भवेत् कर्म येन त्वाऽनु व्रजामहे ॥ ४२

दुःखं नूनं कुरुश्रेष्ठ चरिष्याम महीमिमाम् ।
त्वद्धीनानां हि नो राजन् कुतश्शान्तिः कुतस्सुखम् ॥ ४३

गत्वैनांस्तु महाराज समेत्य त्वं महारथान् ।
यथाश्रेष्ठं यथाज्येष्ठं सम्पूज्य वचनान्मम ॥ ४४

आचार्यं पूजयित्वा च केतुं सर्वधनुर्भृताम् ।
हतं मया त्वं शंसेथा धृष्टद्युम्नं महारथम् ॥ ४५

परिष्वजेथा राजानं बाह्लिकं च महारथम् ।
सैन्धवं सोमदत्तं च भूरिश्रवसमेव च ॥ ४६

तथा पूर्वगतान् सर्वान् स्वर्गे पार्थिवसत्तमान् ।
अस्मद्वाक्यात् परिष्वज्य पृच्छेथास्ताननामयम् ॥ ४७

सञ्जयः—

इत्येवमुक्त्वा राजानं भग्नसक्थमचेतसम् ।

---

1. [illegible]

अश्वत्थामा लघुप्राणम् इदं वचनमब्रवीत् ॥ ४८

द्रौणिः—

दुर्योधन जीवसि चेद् वाचः कर्णसुखाश्शृणु ।
सप्त पाण्डवतश्शिष्टा धार्तराष्ट्रास्त्रयो वयम् ॥ ४९

ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः ।
अहं च कृतवर्मा च कृपश्शारद्वतस्तथा ॥ ५०

द्रौपदेया हतास्सर्वे धृष्टद्युम्नस्य चात्मजाः ।
पाञ्चालैस्सहिता राजन् मत्स्यशेषाश्च भारत ॥ ५१

कृतप्रतिकृतं पश्य हतपुत्राश्च पाण्डवाः ।
सौप्तिके शिबिरं राजन् हतं सनरवाहनम् ॥ ५२

मया च पापकर्माऽसौ धृष्टद्युम्नो महीपते ।
प्रविश्य शिबिरं रात्रौ पशुमारेण मारितः ॥ ५३

सञ्जयः—

दुर्योधनस्तु ता वाचो निशम्य मनसः प्रियाः ।
प्रतिलभ्य ततश्चेत इदं वचनमब्रवीत् ॥ ५४

दुर्योधनः—

न मेऽकरोत्तद्गाङ्गेयो न मे कर्णो न ते पिता ।
यत् त्वया कृपभोजाभ्यां सहितेन कृतं मम ॥ ५५

स चेत् सेनापतिः क्षुद्रो हतस्सार्धं शिखण्डिना ।
तेन मन्ये मघवता सममात्मानमद्य वै ॥ ५६

स्वस्ति प्राप्नुत भद्रं वस् स्वर्गे नस्सङ्गमः पुनः ॥ ५६॥

सञ्जयः—

इत्येवमुक्त्वा पुत्रस्ते कुरुराजो महामनाः ।
प्राणानवासृजद्वीरस् सुहृदां दुःखमादधत् ॥ ५७॥

ततस्ते सम्परिष्वज्य परिमृज्य च तं भृशम् ।
पुनः पुनः प्रेक्षमाणास् स्वकानारुरुहू रथान् ॥ ५८॥

इत्येवं द्रोणपुत्रस्य निशम्य करुणा गिरः ।
प्रत्यूषकाले शोकार्ताः प्राद्रवन्नगरं प्रति ॥ ५९॥

[1]एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः ।
घोरो विशसनो रौद्रो राजन् दुर्मन्त्रिते तव ॥ ६०॥

तव पुत्रे गते स्वर्गं भारते भरतर्षभ ।
ऋषिदत्तं प्रनष्टं तद् दिव्यदर्शित्वमद्य वै ॥ ६१॥

वैशम्पायनः—

इति श्रुत्वा स नृपतिर् ज्ञातिपुत्रवधं तदा ।
निश्श्वस्य दीर्घमुष्णं च ततश्चिन्तापरोऽभवत् ॥ ६२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि नवमोऽध्यायः ॥ ९ ॥

॥ ७८ ॥ सौप्तिकपर्वणि नवमोऽध्यायः ॥ ९ ॥

[ अस्मिन्नध्याये ६२॥ श्लोकाः ]

[ सौप्तिकपर्व समाप्तम् ]

1. क-ख-ग—अर्धद्वयं नास्ति

## ॥ दशमोऽध्यायः ॥

(ऐषीकपर्व)

दैवाग्निस्सृतेन धृष्टद्युम्नसारथिना युधिष्ठिराय रात्रौ वृत्तशिबिरवृत्तान्त-निवेदनम् ॥ १ ॥ तच्छ्रवणेन द्रौपद्यानयनाय नकुलमादिश्य शिबिरभुव-मुपागतवता युधिष्ठिरेण मृतनिजजनावलोकनेन परिदेवनम् ॥ २ ॥

वैशम्पायनः—

तस्यां रात्र्यां व्यतीतायां धृष्टद्युम्नस्य सारथिः ।
शशंस धर्मराजाय सौप्तिके कदनं कृतम् ॥ १

सूतः—

द्रौपदेया हता राजन् द्रुपदस्यात्मजैस्सह ।
प्रमत्ता निशि विश्वस्तास् स्वपन्तश्शिबिरे स्वके ॥ २

गौतमेन नृशंसेन भोजेन कृतवर्मणा ।
अश्वत्थाम्ना च पापेन हतं वश्शिबिरं निशि ॥ ३

एतैर्नरगजाश्वानां प्रासशक्तिपरश्वधैः ।
[1]सहस्राणि निकृन्तद्भिर् निश्शेषं शिबिरं कृतम् ॥ ४

[2]छिद्यमानस्य महतो वनस्येव परश्वधैः ।

1. अ—अर्धद्वयं नास्ति
2. ख-घ—विक्रुष्टनानाविहगफलभारानतस्य ह । [अधिकः पाठः]

[1]शुश्रुवे सुमहाञ् शब्दो बलस्य तव भारत ॥ ५
अहमेवावशिष्टस्तु तस्मात् सैन्यान्महीपते ।
मुक्तः कथञ्चिद्धर्मात्मन् द्वारेण कृतवर्मणा ॥ ६

वैशम्पायनः—

तच्छ्रुत्वा वाक्यमशिवं कुन्तीपुत्रो युधिष्ठिरः ।
पपात मुह्यन् दुर्धर्षः पुत्रशोकसमन्वितः ॥ ७
[2]तमापतन्तमाक्रम्य परिजग्राह सात्यकिः ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ८
लब्धचेतास्तु कौन्तेयश् शोकविह्वलया गिरा ।
जित्वा शत्रूञ् जितः पश्चात् पर्यदेवयदार्तवत् ॥ ९

युधिष्ठिरः—

[3]अगम्या गतिरर्थानां कर्मणामीश्वरस्य च ।
दुर्विज्ञेया गतिर्ह्येषाम् अपि ये दिव्यचक्षुषः ॥ १०
जीयमाना जयन्त्यन्ये जयमाना वयं जिताः ॥ १०॥
हत्वा भ्रातॄन् वयस्यांश्च पितॄन् भृत्यान् सुहृद्गणान् ।
[4]बन्धूनमात्यान् पौत्रांश्च जित्वा सर्वाञ्जिता वयम् ॥ ११॥
अनर्था ह्यर्थसङ्काशास् तथाऽनर्थोऽर्थदर्शनः ।

---

1. क-घ—अर्धद्वयं नास्ति
2. क-ख-घ—तं पतन्तमति
3. क-घ—इदमर्धं नास्ति
4. क-ख-घ—पुत्रपौत्रांस्तथाऽमात्यान् युद्धे जित्वा वयं जिताः ।

जयोऽयमजयाकारो जयस्तस्मात् पराजयः ॥ १२॥

यो जित्वा तप्यते पश्चाद् आपन्न इव दुर्मतिः ।
कथं मन्येत विजयं यस्याज्जिततरः परैः ॥ १३॥

[1]येषामर्थे जयोऽयं स्याद् विजयस्यात् सुहृद्वधे ।
तैर्जितैरप्रमत्तैर्हि निर्जिता जितकाशिनः ॥ १४॥

कर्णिनालीकदंष्ट्रस्य खड्गजिह्वस्य संयुगे ।
वायव्यास्त्रस्य चैन्द्रस्य ज्यातलत्रविनादिनः ॥ १५॥

क्रुद्धस्य नरसिंहस्य सङ्ग्रामेष्वपलायिनः ।
ये व्यमुच्यन्त कर्णस्य प्रमादात् त इमे हताः ॥ १६॥

रथह्रदं शरवर्षोर्मिमन्तं
रत्नाचितं वाजिसमाजयुक्तम् ।
शक्त्यृष्टिशूलध्वजनागनक्रं
शरासनावर्तमहौघफेनम् ॥ १७॥

सङ्ग्रामचन्द्रोदय[2]वेगवेलं
द्रोणार्णवं ज्यातलनेमिघोषम् ।
ये तेरुरुच्चावचशस्त्रनाभिं
ते राजपुत्रा निहताः प्रमादात् ॥ १८॥

---

1. अ—अर्धद्वयं नास्ति
2. क—तोयवेलं जलार्णवज्यातलभीमवेगम् ।
 ख—तोयवेलं बलार्णवं ज्यातलभीमनादम् ।
 घ—तोयवेलं द्रोणार्णवं जातकभीमवेगम् ।

न हि प्रमादात् परमस्ति कश्चिद्
वधो नराणामिह जीवलोके ।
[1]प्रमत्तमर्था हि नरं समन्तात्
त्यजन्त्यनर्थाश्च समाविशन्ति ॥ १९॥

ध्वजोत्तमाग्रोच्छ्रितधूमकेतुं
शरार्चिषं दीप्तमहापताकम् ।
महाधनुर्ज्यातलनेमिघोषं
तनुत्रनानाविधशस्त्रवेगम् ॥ २०॥

महाचमूकक्षदवाग्निभूतं
महाहवे भीष्ममहादवाग्निम् ।
येऽतीत्य भीमायुधतीक्ष्णवेगं
ते राजपुत्रा निहताः प्रमादात् ॥ २१॥

न हि प्रमत्तेन नरेण शक्यम्
आप्तुं वसु श्रीर्विपुलं यशो वा ॥ २२
[2]पर्याप्तमादौ विनिहत्य शत्रून्
सर्वान् महेन्द्रान् सुसमेधमानान् ।

---

1. अ—नास्तीदमर्धम्
2. ख-घ—नित्याप्रमादेन निहत्य संख्ये
शत्रून् महेन्द्रस्सुखमेधमानः ।
क—पश्चात्प्रमादेन निहत्य संख्ये शत्रून् महेन्द्रस्सुखमेधमानः ।
[ पाठान्तरम् ]

इन्द्रोपमान् पार्थिवपुत्रपौत्रान्
　　पश्याविशेषेण हतान् प्रमादात् ॥　　२३

तीर्त्वा समुद्रं वणिजस्समृद्धा
　　मग्नाः कुनद्यामिव सीदमानाः ॥　　२३॥

अमर्षितैर्ये निहता नरेन्द्रा
　　निस्संशयं ते त्रिदिवं प्रपन्नाः ।
कृष्णां तु शोचामि कथं नु [1]साध्वी
　　शोकार्णवं साऽद्य विशक्ष्यतीति ॥　　२४॥

भ्रातॄंश्च पुत्रांश्च हतान् निशाम्य
　　पाञ्चालराजं पितरं च वृद्धम् ।
ध्रुवं विसंज्ञा पतिता पृथिव्यां
　　सा [2]शोचते शोककृशाङ्गयष्टिः ॥　　२५॥

तच्छोकजं दुःखमपारयन्ती
　　कथं भविष्यत्युचिता सुखानाम् ।
रोरूयते ज्ञातिवधाभितप्ता
　　प्रदह्यमानेव हुताशनेन ॥　　२६॥

---

1. क-ख-घ—बाला दुःखार्णवं सा विषहिष्यतीति
2. क—शेष्यते　　ख-घ—संशेष्यते

वैशम्पायनः—

इत्येवमार्तः परिदेवयन् स
राजा कुरूणां नकुलं बभाषे ॥ २७

युधिष्ठिरः—

गच्छानयैनामिह मन्दभाग्याम्
अमात्यपक्षामिति राजपुत्रीम् ॥ २७॥

वैशम्पायनः—

माद्रीसुतस्तत् परिगृह्य वाक्यं
धर्मेण धर्मप्रतिमस्य राज्ञः ।
ययौ रथेनालयमाशु देव्याः
पाञ्चालराजस्य च यत्र दाराः ॥ २८॥

प्रस्थाप्य माद्रीसुतमाजमीढश्
शोकार्दितस्तैस्सहितस्सुहृद्भिः ।
रोरूयमाणः प्रययौ सुतानाम्
आयोधनं भूतगणानुकीर्णम् ॥ २९॥

स तत् प्रविश्याशिवमुग्ररूपं
ददर्श पुत्रान् सुहृदस्सखींश्च ।
भूमौ शयानान् रुधिरार्द्रगात्रान्
विभिन्नगात्रोपहृतोत्तमाङ्गान् ॥ ३०॥

स तांस्तु दृष्ट्वा भृशमार्तरूपो
युधिष्ठिरो धर्मभृतां वरिष्ठः ।

उच्चैः प्रचुक्रोश च कौरवाग्र्यः
पपात चोर्व्यां सगणो विसंज्ञः ॥　　३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि दशमोऽध्यायः ॥ १० ॥
॥ ७९ ॥ ऐषीकपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ३१॥ श्लोकाः ]

---

## ॥ एकादशोऽध्यायः ॥

नकुलेन युधिष्ठिरसमीपं प्रति द्रौपद्यानयनम् ॥ १ ॥ द्रौपद्या द्रौणि-मस्तकमणिहरणचोदितेन भीमेन नकुलसारथिना रथेन द्रौणिवधाय प्रस्थानम् ॥ २ ॥

---

वैशम्पायनः—

स दृष्ट्वा निहतान् सङ्ख्ये पुत्रान् पौत्रान् सखींस्तथा ।
महादुःखपरीतात्मा बभूव जनमेजय ॥　　१

ततस्तस्य महाञ् शोकः प्रादुरासीन्महात्मनः ।
स्मरतः पुत्रपौत्रांस्तान् भ्रातॄन् सुहृद एव च ॥　　२

तमश्रुपरिपूर्णाक्षं वेपमानमचेतसम् ।
सुहृदो भृशसंविग्नास् सान्त्वयाञ्चक्रिरे तदा ॥　　३

कृत्वा तु विधिवत् तेषां पुत्राणाममितौजसाम् ।
प्रेतकार्याणि सर्वेषां बभूव भृशदुःखितः ॥　　४

तस्मिन् मुहूर्ते जवनैर् वाजिभिर्हेममालिभिः ।
नकुलः कृष्णया सार्धम् उपायात् परमार्तया ॥ ५

उपप्लाव्यगता बाला श्रुत्वा सुमहदप्रियम् ।
महाविनाशं पुत्राणां सर्वेषां व्यथितेन्द्रिया ॥ ६

[1]कम्पमानेव कदली वातेनाभिसमाहता ।
कृष्णा राजानमासाद्य शोकार्ता न्यपतद्भुवि ॥ ७

विबभौ वदनं तस्या रुदन्त्याश्शोककर्शितम् ।
[2]फुल्लपद्मपलाशाक्षं तमोग्रस्त इवांशुमान् ॥ ८

[3]तां दृष्ट्वा सम्परिष्वज्य संरम्भात् सत्यविक्रमः ।
बाहुभ्यां परिजग्राह समुपेत्य वृकोदरः ॥ ९

सा समाश्वासिता तेन भीमसेनेन भामिनी ।
रुदती पाण्डवज्येष्ठम् इदं वचनमब्रवीत् ॥ १०

द्रौपदी—

दिष्ट्या राजन्नवाप्येमाम् अखिलां भोक्ष्यसे महीम् ।
आत्मजान् क्षत्रधर्मेण श्रुत्वा सङ्ख्ये निपातितान् ॥ ११

[4]दिष्ट्या सर्वास्त्रकुशलं मत्तमातङ्गगामिनम् ।

---

1. क-ख-ब—कम्प्यमानेव सहसा वातेन कदलीवने ।
2. क-ख—पद्मपत्रविशालाक्ष्यास्तमोग्रस्त इवोडुराट् ।
ब—विशालाक्ष्या मेघावृतमिवोडुराट् ।
3. क-ख-ब—ततः परमसंरम्भी बलवान् सत्यविक्रमः ।
4. ब—इदमादि अर्धत्रयं नास्ति

अवाप्य पृथिवीं कृत्स्नां सौभद्रं न स्मरिष्यसि ॥ १२

आत्मजांस्तैरधर्मेण श्रुत्वा शूरान् निपातितान् ।
स्थितो राज्ये मया सार्धं विहरन् न स्मरिष्यसि ॥ १३

प्रसुप्तानां वधं श्रुत्वा द्रौणिना पापकर्मणा ।
शोको मां दहते गाढं हुताशन इवाशयम् ॥ १४

तस्य पापकृतो द्रौणेर् न चेदद्य दुरात्मनः ।
ह्रियते सानुबन्धस्य युधि विक्रम्य जीवितम् ॥ १५

इहैव प्रायमासिष्ये तन्निबोधत पाण्डवाः ।
न चेत् फलमवाप्नोति द्रौणिः पापस्य कर्मणः ॥ १६

वैशम्पायनः—

एवमुक्त्वा ततः कृष्णा पाण्डवं समुपाविशत् ।
[1]युधिष्ठिरं धर्मपत्नी याज्ञसेनी यशस्विनी ॥ १७

दृष्ट्वोपविष्टां राजा तु पाण्डवो महिषीं प्रियाम् ॥
प्रत्युवाच स धर्मात्मा द्रौपदीं चारुदर्शनाम् ॥ १८

युधिष्ठिरः—

क्षत्रधर्मेण धर्मज्ञे प्राप्तास्ते निधनं शुभे ।
पुत्रास्ते भ्रातरश्चैव तान् न शोचितुमर्हसि ॥ १९

[2]स कल्याणि वनं दुर्गं दूरं द्रौणिरितो गतः ।

---

1. अ—युधिष्ठिरो याज्ञसेनीं धर्मराजो यशस्विनीम् ।
2. क-ख-घ—द्रोणपुत्रस्तु कल्याणि वनदुर्गं गतो ध्रुवम् ।

तस्य त्वं पातनं सङ्ख्ये कथं ज्ञास्यसि शोभने ॥ २०

द्रौपदी—

द्रोणपुत्रस्य सहजो मणिश्शिरसि मे श्रुतः ।
[1]निहत्य सङ्ख्ये तं पापं पश्येयं मणिमाहृतम् ॥ २१

द्रौणेश्शिरस उत्कृत्तं जीवेयमिति मे मतिः ॥ २१॥

वैशम्पायनः—

इत्युक्त्वा पाण्डवं कृष्णा राजानं चारुदर्शना ।
भीमसेनं करे स्पृष्ट्वा कुपिता वाक्यमब्रवीत् ॥ २२॥

द्रौपदी—

त्रातुमर्हसि मां भीम क्षत्रधर्ममनुस्मरन् ।
जहि तं पापकर्माणं शम्बरं मघवानिव ॥ २३॥

[2]न हि ते विक्रमे तुल्यः पुमानस्तीह कश्चन ।
श्रुतं तत् सर्वलोकेषु परमव्यसने तथा ॥ २४॥

द्वीपोऽभूस्त्वं हि पार्थानां नगरे वारणावते ।
हिडिम्बदर्शने चैव तथा त्वमभवो गतिः ॥ २५॥

तथा विराटनगरे कीचकेन भृशार्दिताम् ।
मामप्युद्धृतवान् कृच्छ्रात् पौलोमीं मघवानिव ॥ २६॥

यथैतान्यकृथाः पार्थ महाकर्माणि वै पुरा ।

1. क-ख-घ—हतस्य तस्य दुर्बुद्धेः
2. अ—अर्धषट्कं नास्ति

तथा द्रौणिममित्रघ्नं विनिहत्य सुखी भव ॥ २७॥

वैशम्पायनः—

तस्या बहुविधं दुःखं निशम्य परिदेवितम् ।
नामर्षयत कौन्तेयो भीमसेनो महाबलः ॥ २८॥

स काञ्चनविचित्राङ्गम् आरुरोह रथोत्तमम् ।
आदाय रुचिरं चित्रं समार्गणगुणं धनुः ॥ २९॥

नकुलं सारथिं कृत्वा द्रोणपुत्रवधे धृतः ।
विष्फार्य सशरं चापं तूर्णमश्वानचोदयत् ॥ ३०॥

ते हयाः पुरुषव्याघ्र चोदिता वातरंहसः ।
वेगेन सहसा जग्मुर् हरयश्शीघ्रगामिनः ॥ ३१॥

शिबिरात् स गृहीत्वा तु रथस्य पदमच्युतः ।
द्रोणपुत्रगतेनाशु ययौ मार्गेण भारत ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि एकादशोऽध्यायः ॥ ११ ॥
॥ ७९ ॥ ऐषीकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ३२॥ श्लोकाः ]

## ॥ द्वादशोऽध्यायः ॥



द्रौणिजिघांसया भीमे प्रतिगते कृष्णेन युधिष्ठिरं प्रति द्रौणिदौश्शील्यादिकथनपूर्वकं भीमस्य ततो रक्षणीयत्वकथनम् ॥

वैशम्पायनः—

तस्मिन् प्रयाते दुर्धर्षे यदूनामृष[1]भस्ततः ।
अब्रवीत् पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ १

श्रीभगवान्—

एष ते पाण्डवो भ्राता पुत्रशोकमपारयन् ।
जिघांसुर्द्रौणिमाक्रन्दे [2]एक एवाभिधावति ॥ २

[3]भीमः प्रियस्ते सर्वेभ्यो भ्रातृभ्यो भरतर्षभ ।
तं कृच्छ्रगतमद्य त्वं कस्मान्नाभ्यवपद्यसे ॥ ३

यत्तदाचष्ट पुत्राय द्रोणः प्रहरतां वरः ।
अस्त्रं ब्रह्मशिरो नाम तद्दहेत् पृथिवीमपि ॥ ४

तन्महात्मा महाभागः केतुस्सर्वधनुष्मताम् ।
प्रत्यपादयदाचार्यः प्रीयमाणो धनञ्जयम् ॥ ५

तं पुत्रोऽप्येक एवैनम् अन्वयाचदमर्षणः ।
ततः प्रोवाच पुत्राय नातिहृष्टमना इव ॥ ६

---

1. क-ख-घ—भोऽच्युतः
2. क-ख—याति भारत भारतः　　घ—याति भारत साहसी
3. क-ख-घ—भीमः प्रियतरः सर्वैर्भ्रातृभिस्ते नरर्षभ ।

विदितं चापलं ह्यासीद् आत्मजस्य महात्मनः ।
सर्वधर्मविदाचार्यस् सोऽन्वशासत् सुतं ततः ॥ ७

द्रोणः—

परमापद्गतेनापि न स्म तात त्वया रणे ।
इदमस्त्रं प्रयोक्तव्यं मानुषेषु [1]विशेषतः ॥ ८

श्रीभगवान्—

इत्युक्तवान् गुरुः पुत्रं द्रोणः पश्चादथोक्तवान् ।
[2]न त्वं जातु सतां मार्गे स्थातेति पुरुषर्षभ ॥ ९

स तदाज्ञाय दुष्टात्मा पितुर्वचनमप्रियम् ।
निराशस्सर्वकल्याणे शोचन् पर्यपतन्महीम् ॥ १०

[3]कदाचित् स नरश्रेष्ठ वनस्थे त्वयि भारत ।
अवसद्द्वारकामेत्य वृष्णिभिः परमार्चितः ॥ ११

स कदाचित् समुद्रान्ते वसन् द्वारवतीमनु ।
एक एकं समागम्य मामुवाच हसन्निव ॥ १२

यत् तदुग्रं तपः कृष्ण चरन्नमितविक्रमः ।
अगस्त्याद्भारताचार्यः प्रत्यपद्यत मे पिता ॥ १३

अस्त्रं ब्रह्मशिरो नाम देवगन्धर्वपूजितम् ।
तदद्य मयि दाशार्ह यथा पितरि मे तथा ॥ १४

---

1. क-ख-घ—कदाचन
2. क-ख-घ—नैष जातु सतां वृत्ते स्थातेति भरतर्षभ ।
3. अ—ततस्तथा कुरुश्रेष्ठ बलस्थे

अस्मत्तस्तदुपादाय दिव्यमस्त्रविदां वर ।
ममाप्यस्त्रं प्रयच्छ त्वं चक्रं रिपुहरं रणे ॥ १

स राजन् प्रीयमाणेन मयाऽप्युक्तः कृताञ्जलिः ।
याचमानः प्रयत्नेन मत्तोऽस्त्रं भरतर्षभ ॥ १६

देवदानवगन्धर्वमनुष्यपतगोरगाः ।
न समा मम वीर्यस्य शतांशेनापि पिण्डिताः ॥ १७

इदं धनुरियं शक्तिर् इदं चक्रमियं गदा ।
यद्यदिच्छसि [1]चेदस्त्रं मत्तस्तत्तद्ददामि ते ॥ १८

यच्छक्नोषि समुद्यन्तुं प्रयोक्तुमपि वा रणे ।
तद्गृहाण विनाऽस्त्रेण यन्मे दातुमिहेच्छसि ॥ १९

स सुनाभं सहस्रारं वज्रनाभमयस्मयम् ।
वव्रे चक्रं महाभागो मत्तस्स्पर्धन् मया सह ॥ २०

गृहाण चक्रमित्यु[2]क्तो मया तु तदनन्तरम् ।
जग्राहोपेत्य सहसा चक्रं सव्येन पाणिना ॥ २१

न चैनमशकत् स्थानात् प्रचालयितुमच्युत ॥ २१॥
[3]अथैनं दक्षिणेनापि ग्रहीतुमुपचक्रमे ।
सर्वयत्नेन तेनापि गृह्य नैनमकम्पयत् ॥ २२॥

1. क-ख-ब—नामास्त्रं
2. क-ख-ब—क्तः स मया तद
3. ब—अर्धद्वयं नास्ति

ततस्सर्वबलेनापि यदैनं न शशाक ह ।
उद्यन्तुं वा चालयितुं द्रौणिः परमदुर्मनाः ॥ २३॥

कृत्वा यत्नं परं श्रान्तस् स न्यवर्तत भारत ॥ २४

[1]निवृत्तमनसं तस्माद् अभिप्रायाद्विचेतसम् ।
अहमामन्त्र्य संविग्नम् अश्वत्थामानमब्रुवम् ॥ २५

यस्स दैवमनुष्येषु प्रमाणं परमं गतः ।
[2]गाण्डीवधन्वा श्वेताश्वः कपिप्रवरकेतनः ॥ २६

यस्साक्षाद्देवदेवेशं शितिकण्ठमुमापतिम् ।
द्वन्द्वयुद्धे पुरा जिष्णुस् तोषयामास शङ्करम् ॥ २७

यस्मात् प्रियतरो नास्ति ममान्यः पुरुषो भुवि ।
न देयं यस्य मे किञ्चिद् अपि प्राणान्महात्मनः ॥ २८

तेनापि सुहृदा ब्रह्मन् पार्थेनाक्लिष्टकर्मणा ।
नोक्तपूर्वमिदं वाक्यं [3]यस्त्वं मामभिभाषसे ॥ २९

ब्रह्मचर्यं महद्घोरं चरित्वा द्वादशवार्षिकम् ।
हिमवत्पादमभ्येत्य यो मया तपसाऽऽर्जितः ॥ ३०

[4]समानव्रतचारिण्यां रुक्मिण्यां यो व्यजायत ।

---

1. अ—नास्तीदमर्धम्
2. अ—अर्धचतुष्टयं नास्ति
3. क-ख-घ—यत् त्वं मत्तोऽभिमन्यसे
4. क—समानव्रतचारिण्यां यो व्यजायत भाग्यवान् ।
ख—ससमानप्रचारिण्यां रुक्मिण्यां योऽप्यजायत ।

[1]सनत्कुमारस्तेजस्वी प्रद्युम्नो नाम मे सुतः ॥ ३१

तेनाप्येतन्महद्दिव्यं चक्रमप्रतिमं [2]महत् ।
न प्रार्थितमभून्मूढ तदिदं प्रार्थितं त्वया ॥ ३२

रामेणातिबलेनैव नोक्तपूर्वं कदाचन ।
न गदेन न साम्बेन यदिदं प्रार्थितं त्वया ॥ ३३

द्वारकावासिभिश्चैव वृष्ण्यन्धकमहारथैः ।
नोक्तपूर्वमिदं क्षुद्रं यदिदं प्रार्थितं त्वया ॥ ३४

भारताचार्यपुत्र[3]स्सन् मानितस्त्वं मया द्विजः ।
चक्रेण रथिनां श्रेष्ठ यन्नस्तात युयुत्ससे ॥ ३५

एवमुक्तो मया द्रौणिर् मामिदं प्रत्युवाच ह ॥ ३५॥

द्रौणिः—

[4]प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वया सह ॥ ३६

प्रार्थितं ते मया चक्रं देवदानवपूजितम् ।
अजेयस्स्यामिति विभो सत्यमेतद्ब्रवीमि ते ॥ ३७

सोऽहं तद्दुर्लभं चक्रम् अनवाप्यैव केशव ।
प्रतियास्यामि गोविन्द शिवेनाभिवदस्व माम् ॥ ३८

एतत् सुनाभं भोजानाम् ऋषभेण त्वया धृतम् ।

1. ख—स मत्कुमार 2. अ—धनुः घ—मम
3. ख—स्त्वं मानितः सर्वयादवैः
क-घ—भरताचार्यपुत्रस्तु मानितः सर्वदैवतैः ।
4. अ—नास्तीदमर्धम्

चक्रमप्रतिचक्रेण [1]भुवि नान्योऽभिपद्यते ॥  ३९

श्रीभगवान्—

एतावदुक्त्वा द्रौणिर्मां युग्यानश्वान् धनानि च ।
[2]आदायोपययौ काले रत्नानि विविधानि च ॥  ४०

स संरब्धो दुरात्मा च चपलः क्रूर एव च ।
वेद चास्त्रं ब्रह्मशिरस् तस्माद्रक्ष्यो वृकोदरः ॥  ४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ ७९ ॥ ऐषीकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ४१ श्लोकाः ]

---

## ॥ त्रयोदशोऽध्यायः ॥



कृष्णादिभिर्भागीरथीतीरे व्याससमीपसमासीनद्रौणिदर्शनम् ॥ १ ॥ तद्दर्शिना द्रौणिना अपाण्डवत्वहेतोर्ब्रह्मशिरोऽस्त्रप्रयोगः ॥ २ ॥

---

वैशम्पायनः—

एवमुक्त्वा कुरुश्रेष्ठं सर्वयादवनन्दनः ।
सर्वायुधवरोपेतम् आरुरोह रथोत्तमम् ॥  १

युक्तं परमकाम्भोजैस् [3]तुरगैर्हेममालिभिः ।
उदितादित्यसङ्काशं सर्वरत्नविभूषितम् ॥  २

---

1. क-ख-घ—भवत्यैवोपपद्यते
2. अ—नास्तीदमर्धम्
3. क-ख-घ—दैशजैः

दक्षिणेऽस्यावहत् सैन्यस् सुग्रीवस्सव्यतो धुरम् ।
पार्ष्णिवाहौ च तस्यास्तां मेघपुष्पवलाहकौ ॥ ३

विश्वकर्मकृता दिव्या नानारत्नविभूषिता ।
उच्छ्रिता च रथे तस्मिन् ध्वजयष्टिरदृश्यत ॥ ४

वैनतेयस्स्थितस्तस्यां प्रभामण्डलरश्मिवान् ।
तस्य [1]सत्यवतः केतुर् भुजङ्गारिरदृश्यत ॥ ५

[2]अन्वारोहद्धृषीकेशः केतुस्सर्वधनुष्मताम् ।
अर्जुनस्सत्यकर्मा च कुरुराजो युधिष्ठिरः ॥ ६

शुशुभाते तु तौ वीरौ दाशार्हमभितस्स्थितौ ।
रथस्थं शार्ङ्गधन्वानम् अश्विनाविव वासवम् ॥ ७

[3]उभावारोप्य दाशार्हस् स्यन्दनं लोकपूजितम् ।
प्रतोदेन जवोपेतान् परमाश्वानचोदयत् ॥ ८

ते हयास्सहसोत्पेतुर् गृहीत्वा स्यन्दनोत्तमम् ।
आस्थितं पाण्डवेयाभ्यां यदूनामृषभेण च ॥ ९

वहतां शार्ङ्गधन्वानम् अश्वानां शीघ्रगामिनाम् ।
प्रादुरासीन्महाञ्शब्दः पक्षिणां पततामिव ॥ १०

ते समर्थं महाबाहुं क्षणेन भरतर्षभ ।

---

1. क—युक्तवतः ख—सत्त्ववतः घ—तत्त्ववतः
2. क-ख—अन्वारुरोह कृष्णस्तु घ—अभ्यारुरोह कृष्णस्तु
3. अ—अर्धपञ्चकं नास्ति

भीमसेनं महात्मानम् अनुस्मृत्य सुवेगिताः ॥ ११
क्रोधदीप्तं तु कौन्तेयं द्विषदर्थे समुद्यतम् ।
नाशक्नुवन् वारयितुं समेत्यापि महारथाः ॥ १२

स तेषामग्रतश्शूरश् श्रीमतां दृढधन्विनाम् ।
ययौ भागीरथीकच्छं हरिभिर्हेममालिभिः ॥ १३
यत्र स श्रूयते द्रौणिः पुत्रहन्ता दुरात्मवान् ॥ १३॥
स ददर्श महात्मानम् उदकान्ते यशस्विनम् ।
कृष्णद्वैपायनं व्यासम् आसीनमृषिभिस्सह ॥ १४॥

तं चैव क्रूरकर्माणं घृताक्तं कुशचीरिणम् ।
[1]रजसा ध्वस्तमासीनं ददर्श द्रौणिमन्तिके ॥ १५॥

तमभ्यधावत् कौन्तेयः प्रगृह्य सशरं धनुः ।
भीमसेनो महाबाहुस् तिष्ठ तिष्ठेति चाब्रवीत् ॥ १६॥

[2]तं दृष्ट्वा भीमकर्माणं प्रगृहीतशरासनम् ।
भ्रातरौ पृष्ठतश्चास्य जनार्दनरथस्थितौ ॥ १७॥
व्यथितात्माऽभवद्द्रौणिः प्राप्तं चेदममन्यत ॥ १८

स तद्दिव्यमदीनात्मा परमास्त्रमचिन्तयत् ।
जग्राह च शरैषीकां द्रौणिस्सव्येन पाणिना ॥ १९

---

1. क-ख-ध—रजोध्वस्तमुपा+भरतर्षभः ।
2. क—स दृष्ट्वा भीमकर्माणं जनार्दनरथे स्थितम् ।
[इति वर्तते मध्ये अर्धं नास्ति]

स तामापद्मासाद्य दिव्यमस्त्रमुदीरयत् ॥ १९॥

अमृष्यमाणस्तान् शूरान् दिव्यायुधधरान् स्थितान् ।
अपाण्डवायेति रुषा वाचमुत्सृज्य दारुणम् ॥ २०॥

इत्युक्त्वा राजशार्दूल द्रोणपुत्रः प्रतापवान् ।
सर्वलोकप्रमोहार्थं तदस्त्रं प्रमुमोच ह ॥ २१॥

ततस्तस्यामिषीकायां पावकस्समजायत ।
[1]नाशयत्येव लोकांस्त्रीन् कालान्तकयमोपमः ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
॥ ७९ ॥ ऐषीकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये २२॥ श्लोकाः ]

## ॥ चतुर्दशोऽध्यायः ॥

अर्जुनेन कृष्णाज्ञया द्रौण्यस्त्रप्रत्यस्त्रप्रयोगः ॥

वैशम्पायनः—

इङ्गितेनैव दाशार्हस् तस्याभिप्रायमादितः ।
द्रौणेर्बुद्ध्वा महाबाहुर् अभ्यभाषत फल्गुनम् ॥ १

श्रीभगवान्—

[2]अर्जुनार्जुन यद्दिव्यम् अस्त्रं ते हृदि वर्तते ।

1. क-ख-ध—निर्दहिष्यन्निवेमांस्त्रीँल्लोकाँल्लोकान्तकोपमः ।
2. क-ख—अर्जुनार्जुन यत्त्वेतत् प्रत्यस्त्रं प्रतिवर्तते ।

द्रोणोपदिष्टं तस्यायं कालस्सम्परिवर्तते ॥ २

भ्रातॄणामात्मनश्चैव परित्राणाय भारत ।
विसृजैतत्त्वमप्याजावस्त्रमस्त्रनिवारणम् ॥ ३

वैशम्पायनः—

केशवेनैवमुक्तस्तु पाण्डवः परवीरहा ।
रथादवातरत् तूर्णं प्रगृह्य सशरं धनुः ॥ ४

पूर्वमाचार्यपुत्राय ततोऽनन्तरमात्मने ।
भ्रातॄणां चैव सर्वेषां स्वस्तीत्युक्त्वा परन्तपः ॥ ५

देवताभ्यो नम[1]स्कृत्य गुरुभ्यश्चैव सर्वशः ।
उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ॥ ६

ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना ।
प्रजज्वाल महाज्वालं युगान्तानलवर्चसम् ॥ ७

[2]तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः ।
प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतम् ॥ ८

निर्घाता बहवश्चासन् पेतुरुल्कास्सहस्रशः ।
महद्भयं च भूतानां सर्वेषां समजायत ॥ ९

सशब्दमभवद्व्योम ज्वालामालाकुलं भृशम् ।
चचाल च मही कृत्स्ना सपर्वतवनद्रुमा ॥ १०
तावस्त्रतेजसा लोकांस् त्रासयन्तौ ततस्स्थितौ ॥ १०॥

1. क-ख-घ—स्कृत्वा 2. अ—अर्धद्वयं नास्ति

महर्षी सहितौ तत्र दर्शयामासतुस्तदा ।
नारदस्सर्वधर्मात्मा भरतानां पितामहः ॥ ११॥

उभौ शमयितुं वीरौ भारद्वाजधनञ्जयौ ॥ १२

[1]तौ मुनी सर्वधर्मज्ञौ सर्वभूतहितैषिणौ ।
दीप्तयोरस्त्रयोर्मध्ये स्थितौ परमतेजसौ ॥ १३

[2]तदन्तरमनाधृष्यावुपगम्य यशस्विनौ ।
आस्तामृषिवरौ तत्र ज्वलिताविव पावकौ ॥ १४

प्राणभृद्भिरनाधृष्यौ देवदानवसम्मतौ ।
अस्त्रतेजश्शमयितुं लोकानां हितकाम्यया ॥ १५

ऋषी—

नानाशस्त्रविदः पूर्वे ये व्यतीता महारथाः ।
नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ ७९ ॥ ऐषीकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये १६ श्लोकाः]

---

1. क-ख-घ—तौ दृष्ट्वा सर्वं 2. ख—इदमर्धद्वयं नास्ति

## ॥ पञ्चदशोऽध्यायः ॥

अर्जुनेन व्यासनारदभावानुरोधेन स्वप्रयुक्तब्रह्मशिरोऽस्त्रप्रतिसंहारः ॥ १ ॥ कृष्णेनाश्वत्थामानं प्रति उत्तरागर्भे ऐषीकास्त्रपातेऽपि मृतशिशोः स्वेन समुज्जीवनप्रतिज्ञा ॥ २ ॥ ब्रह्मचर्याभावादस्त्रप्रतिसंहारासमर्थेन द्रौणिना व्यासकृष्णावनादृत्य पाण्डवगर्भेष्वैषीकास्त्रोत्सर्जनम् ॥ ३ ॥

---

वैशम्पायनः—

[1]दृष्ट्वैव मुनिशार्दूलौ तावग्निसमतेजसौ ।
[2]गाण्डीवधन्वा सञ्चिन्त्य प्राप्तकालं महारथः ॥ १

सञ्जहार शरं दिव्यं त्वरमाणो धनञ्जयः ॥ १॥
उवाच च नरश्रेष्ठः प्राञ्जलिस्तावुभावृषी ॥ २

अर्जुनः—

प्रमुक्तमस्त्रमस्त्रेण शाम्यतामिति वै मया ॥ २॥

संहृते परमास्त्रेऽस्मिन् सर्वानस्मानशेषतः ।
पापकर्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा ॥ ३॥

यदत्र हितमस्माकं लोकानां चैव सर्वथा ।
भवन्तौ देवसङ्काशौ तथा सम्मन्तुमर्हतः ॥ ४॥

वैशम्पायनः—

इत्युक्त्वा सञ्जहारास्त्रं [3]पुनरेव धनञ्जयः ॥ ५

---

1. ख—तदन्तरनाधृष्यावुपगम्य यशस्विनौ ।
आसामृषिवरौ तत्र ज्वलिताविव पावकौ ॥ [अधिकः पाठः]

2. अ—नास्तीदमर्धम् 3. क-ख-घ—पाण्डवस्य धनञ्जयः

संहारो दुष्करस्तस्य देवैरपि च संयुगे ।
[1]विसृष्टस्य रणे तस्य परमास्त्रस्य संयुगे ॥ ६
अशक्तः पाण्डवादन्यस् साक्षादपि शतक्रतुः ॥ ६॥
[2]ब्रह्मतेजोद्भवं तद्धि विसृष्टमकृतात्मना ।
न शक्यमावर्तयितुं ब्रह्मचारिव्रतादृते ॥ ७॥
अचीर्णब्रह्मचर्यो यस् सृष्ट्वाऽऽवर्तयते पुनः ।
तदस्त्रं सानुबन्धस्य मूर्धानं तस्य कृन्तति ॥ ८॥
ब्रह्मचारी व्रती चापि [3]दुरवापमवाप्य तत् ।
परमव्यसनार्तोऽपि [4]नार्जुनोऽस्त्रं व्यमुञ्चत ॥ ९॥
सत्यव्रतधरश्शूरो ब्रह्मचारी च पाण्डवः ।
गुरुवर्ती च तेनास्त्रं सञ्जहारार्जुनः पुनः ॥ १०॥
द्रौणिरप्यथ सम्प्रेक्ष्य सोऽन्तरा तावृषी स्थितौ ।
न शशाक पुनर्घोरम् अस्त्रं संहर्तु[5]मोजसा ॥ ११॥
अशक्तः प्रतिसंहारे परमास्त्रस्य संयुगे ।
द्रौणिर्दीनमना राजन् द्वैपायनमभाषत ॥ १२॥

द्रौणिः—

उत्तमव्यसनार्तेन प्राणत्राणमभीप्सुना ।

---

1. घ—इदमर्धं नास्ति 2. अ—नास्तीदमर्धम्
3. ख—अयं पादोऽनन्तरश्च न स्तः
4. क-ख—नार्जुनस्तद्विमुञ्चति ब—नादिवं स्तद्विमुञ्चति
5. क-ख-घ—माहवे

मयेदमस्त्रमुत्सृष्टं भीमसेनभयान्मुने ॥ १३॥

अधर्मश्च कृतोऽनेन धार्तराष्ट्रं जिघांसता ।
मिथ्याचारेण भगवन् भीमसेनेन संयुगे ॥ १४॥

अतस्सृष्टमिदं ब्रह्मन् मयाऽस्त्रमकृतात्मना ।
[1]तस्य भूयोऽपि संहारं कर्तुं नाहमिहोत्सहे ॥ १५॥

निसृष्टं हि मया दिव्यम् एतदस्त्रं दुरासदम् ।
अपाण्डवायेति मुने वह्नितेजोऽनुमन्त्र्य वै ॥ १६॥

तदिदं पाण्डुपुत्राणाम् अन्तायैव सुसंहितम् ।
अद्य पाण्डुसुतान् सर्वान् जीविताद्भ्रंशयिष्यति ॥ १७॥

कृतं पापमिदं ब्रह्मन् क्रोधेनाविष्टचेतसा ।
वधमाशास्य पार्थानां मयाऽस्त्रं सृजता प्रभो ॥ १८॥

व्यासः—

अस्त्रं ब्रह्मशिरस्तात विद्वान् पार्थो धनञ्जयः ।
उत्सृष्टवानहिंसार्थं न रोषेण तवाहवे ॥ १९॥

अस्त्रमस्त्रेण तु रणे तव संशमयिष्यता ।
विसृष्टमर्जुनेनेदं पुनश्च प्रतिसंहृतम् ॥ २०॥

ब्रह्मास्त्रमप्यवाप्यैतद् उपदेशातत् पितुस्तव ।
क्षत्रधर्मान्महाबुद्धिर् नाकम्पत धनञ्जयः ॥ २१॥

एवं धृतिमतस्साधोस् सर्वास्त्रविदुषस्सतः ।

---

1. अ—अर्धषट्कं नास्ति

सभ्रातृबन्धोः कस्मात् त्वं वधमस्य चिकीर्षसि ॥ २२॥
अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते ।
समा द्वादश पर्जन्यस् तद्राष्ट्रं नाभिवर्षति ॥ २३॥
[1]एतदर्थं महाबाहुश् शक्तिमानपि पाण्डवः ।
उपसंहृतवानस्त्रं प्रजाहितचिकीर्षया ॥ २४॥
पाण्डवास्त्वं च राष्ट्रं च सदा संरक्ष्यमेव नः ।
तस्मात् संहर दिव्यं त्वम् अस्त्रमेतन्महाभुज ॥ २५॥
अरोषस्तव चैवास्तु [2]पार्थास्सन्तु निरामयाः ।
न ह्यधर्मेण राजर्षिः पाण्डवो जेतुमिच्छति ॥ २६॥
मणिं चैनं प्रयच्छैभ्यो यस्ते शिरसि तिष्ठति ।
[3]एतदादाय ते प्राणान् प्रतिदास्यन्ति पाण्डवाः ॥ २७॥

द्रौणिः—

पाण्डवैर्यानि रत्नानि यद्वाऽन्यत् कौरवैर्धनम् ।
अवाप्तानीह तेभ्योऽयं मणिर्मम विशिष्यते ॥ २८॥
यमाबध्य भयं नास्ति शस्त्रव्याधिक्षुधाश्रयम् ।
देवेभ्यो दानवेभ्यो वा नागेभ्यो वा कदाचन ॥ २९॥
[4]न च रक्षोगणभयं न तस्करभयं तथा ।
एवं वीर्यो मणिरयं न मे त्याज्यः कथञ्चन ॥ ३०॥

1. क-घ—एतदस्त्रं ख—इदमर्धद्वयं नास्ति
2. क-ख-घ—सन्तु पार्था अनामयाः
3. क-ख-घ—एवं जीवितमादाय तव यास्यन्ति पाण्डवाः ।
4. अ—अर्धद्वयं नास्ति

यत् तु मे भगवानाह तन्मे कार्यमनन्तरम् ।
अयं मणिरयं चाहम् इषीका तु पतिष्यति ॥ ३१॥

गर्भेषु पाण्डुपुत्राणाम् उत्तरायास्तथोदरे ॥ ३२

[1]न च शक्नोमि भगवन् संहर्तुं पुनरुद्यतम् ।
न च वाक्यं भगवतो न करिष्ये महामुने ॥ ३३

वैशम्पायनः—

[2]प्राह द्रोणसुतं तत्र व्यासः परमदुर्मनाः ॥ ३३॥

व्यासः—

एवं कुरु न चान्यत्र बुद्धिः कार्या कथञ्चन ।
गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम ॥ ३४॥

वैशम्पायनः—

[3]तमुवाच हृषीकेशः पाण्डवानां हिते रतः ॥ ३५

श्रीभगवान्—

भविष्यमेकमुत्सृज्य गर्भेष्वस्त्रं निपात्यताम् ।
अहमेकं ददाम्येषां पिण्डदं कीर्तिवर्धनम् ॥ ३६

राजर्षिं पुण्यकर्माणम् अनेकक्रतुयाजिनम् ॥ ३६॥

एवं कुरु न चान्या ते बुद्धिः कार्या कथञ्चन ।
आगर्भात् पाण्डवेयानां कृत्वा पातं विनङ्क्ष्यति ॥ ३७॥

वैशम्पायनः—

[4]एवं ब्रुवाणं गोविन्दं वृषभं सर्वसात्वताम् ।

---

1. क-ख-घ—अर्धद्वयं नास्ति 2. अ—नास्तीदमर्धम्
3. अ—अष्टादशार्धानि न सन्ति
4. अ—एतदादि दशार्धानि उपरितनाध्याये चतुर्थश्लोकानन्तरं विद्यन्ते तानि न तत्र सङ्गच्छन्ते

द्रौणिः परमसङ्क्रुद्धः प्रत्युवाचेदमुत्तरम् ॥ ३८॥

द्रौणिः—

नैतदेवं यदात्थ त्वं पक्षपातेन केशव ।
वचनात् पुण्डरीकाक्ष तव मद्वाक्यमन्यथा ॥ ३९॥

पतिष्यत्येतदस्त्रं वै गर्भे तस्या मयोद्यतम् ।
विराटदुहितुः कृष्ण यं त्वं रक्षितुमिच्छसि ॥ ४०॥

श्रीभगवान्—

अमोघः परमास्त्रस्य पातस्त्वद्य भविष्यति ।
अभिमन्योस्तुजैषीकां गर्भस्थश्शाम्यतां शिशुः ॥ ४१॥

अहमेनं मृतं जातं जीवयिष्यामि बालकम् ।
स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ॥ ४२॥

वैशम्पायनः—

इत्युक्तः प्रत्युवाचैनं द्रोणपुत्रस्स्मयन्निव ॥ ४३

द्रौणिः—

यद्यस्त्रदग्धं गोविन्द जीवयस्येवमस्त्विति ॥ ४३॥

वैशम्पायनः—

ततः परममस्त्रं तु द्रौणिरुद्यतमाहवे ।
द्वैपायनमनादृत्य गर्भेषु प्रमुमोच ह ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
॥ ७९ ॥ ऐषीकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये ४४॥ श्लोकाः ]

## ।। षोडशोऽध्यायः ।।

कृष्णेन स्ववचनोल्लङ्घनेनास्त्रप्रयोक्तुरश्वत्थाम्नः शापदानं व्यासेन तदनुमोदनं च ॥ १ ॥ भीमेन द्रौणिमस्तकमणिदानेन द्रौपदीसमाश्वासनम् ॥ २ ॥ युधिष्ठिरेण द्रौपदीवचनात् स्वमस्तके तन्मणिधारणम् ॥ ३ ॥

वैशम्पायनः—

[1]तदाज्ञाय हृषीकेशो विकृष्टं पापकर्मणा ।
हृष्यमाण इदं वाक्यं द्रौणिं प्रत्यादिशत् तदा ॥ १

श्रीभगवान्—

विराटस्य सुतां पूर्वं स्नुषां गाण्डीवधन्वनः ।
उपप्लाव्यगतां दृष्ट्वा [2]उत्तरां ब्राह्मणोऽब्रवीत् ॥ २

ब्राह्मणः—

परिक्षीणेषु कुरुषु पुत्रस्तव जनिष्यते ।
एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ॥ ३

श्रीभगवान्—

तस्य तद्वचनं साधोस् सत्यमेव भविष्यति ।
परिक्षिद्भवितैतेषां पुनर्वंशकरस्सुतः ॥ ४

त्वां तु कापुरुषं पापं विदुस्सर्वे मनीषिणः ।
असकृत् पापकर्माणं बालजीवितघातकम् ॥ ५

तस्मात् त्वमस्य पापस्य कर्मणः फलमाप्नुहि ।

1. ख—अर्धत्रयं नास्ति
2. ख—धृतवान् ब्राह्मणोऽ अ—प्रभावान् ब्राह्मणोऽब्रवीत

त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमाम् ॥ ६

[1]अप्राप्नुवन् क्वचित् काञ्चित् संविदं जातु केनचित् ।
निर्जनानसहायस्त्वं देशान् प्रतिचरिष्यसि ॥ ७

भवित्री न हि ते क्षुद्र जनमध्येषु संस्थितिः ।
[2]पूयशोणितगन्धी च दुर्गकान्तारसंश्रयः ॥ ८

विचरिष्यसि पापात्मंश् चिरमेको वसुन्धराम् ॥ ८॥

[3]वयः प्राप्य परिक्षित्तु देवव्रतमवाप्य च ।
कृपाच्छारद्वताच्छूरस् सर्वास्त्राण्युपलप्स्यते ॥ ९॥

विदित्वा परमास्त्राणि क्षत्रधर्मव्रते स्थितः ।
[4]षष्टिवर्षाणि धर्मात्मा वसुधां पालयिष्यति ॥ १०॥

ततश्चोर्ध्वं महाबाहुः कुरुराजो भविष्यति ।
[5]परिक्षिन्नाम नृपतिर् मिषतस्ते सुदुर्मते ॥ ११॥

[6]पश्य मे तपसो वीर्यं सत्यस्य च नराधम ॥ १२

व्यासः—

यस्मादनादृत्य कृतं त्वयाऽस्मान् कर्म दारुणम् ।

---

1. क-ख-ग—लभमानः क्वचित्किञ्चित् संविदं च न केनचित् ।
2. क-ख—पूति + दुर्गन्धासारसंश्रयः ।
3. अ—नास्तीदमर्धम्
4. क—षष्टिं वर्षाणि साग्राणि ग—षष्टिं वर्षसहस्राणि
5. क-ख-ग—पारीक्षितो नाम नृपो
6. अ—अहं तं जीवयिष्यामि दग्धमस्त्राग्नितेजसा । [अधिकः पाठः]

ब्राह्मणस्य सतश्चेदं वृत्तमन्यायवर्तिनः ॥ १३

तस्माद्यद्देवकीपुत्र उक्तवानुत्तमं वचः ।
आलोकात्तव तद्भावि क्षुद्रकर्मन् व्रजेति ह ॥ १४

अश्वत्थामा—

सहैव भवता ब्रह्मन् स्थास्यामि मनुजेष्विह ।
सत्यवागस्तु भगवान् अयं च पुरुषोत्तमः ॥ १५

वैशम्पायनः—

प्रदायाथ मणिं द्रौणिः पाण्डवानां यशस्विनाम् ।
[1]जगाम विमनास्तेषां सर्वेषां पश्यतां रणे ॥ १६

[2]पाण्डवाश्चैव गोविन्दं पुरस्कृत्य हतद्विषः ।
कृष्णद्वैपायनं चैव पर्वतं नारदं तथा ॥ १७

द्रोणपुत्रस्य सहजं मणिमादाय सत्वराः ।
द्रौपदीमभ्यधावन्त प्रायोपेतां यशस्विनीम् ॥* १८

ततस्ते पुरुषव्याघ्रास् सदश्वैरनिलोपमैः ।
प्रययू राजशार्दूल शिबिरं पुनरेव ह ॥ १९

[3]अवतीर्य रथेभ्यस्तु त्वरमाणा महारथाः ।

---

1. क-ख-घ—जगाम प्रेक्षतां तेषां तपोवनमरिन्दमः । [पाठान्तरम्]
2. घ—इदमर्धं नास्ति
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
3. क-ख-घ—अवतीर्याथ रथतः

दद्दशुर्द्रौपदीं कृष्णाम् आर्तामार्ततरास्त्वयम् ॥ २०

तामुपेत्य निरानन्दां दुःखशोकपरायणाम् ।
परिवार्योपतिष्ठन्त पाण्डवास्सहकेशवाः ॥ २१

ततो राज्ञाऽभ्यनुज्ञातो भीमसेनो महाबलः ।
प्रददौ तं मणिं दिव्यं वचनं चेदमब्रवीत् ॥ २२

भीमः—

अयं भद्रे तव मणिः पुत्रहन्ता जितश्च ते ।
उत्तिष्ठ शोकमुत्सृज्य क्षत्रधर्ममनुस्मर ॥ २३

प्रयाणे वासुदेवस्य शमार्थमसितेक्षणे ।
यान्युक्तानि त्वया भीरु वाक्यानि मधुसूदने ॥ २४

नैव मे पतयस्सन्ति न पुत्रा भ्रातरो न मे ।
नैव त्वमसि गोविन्द शममिच्छति राजनि ॥ २५

उक्तवत्यसि वाक्यानि धीराणि पुरुषोत्तमे ।
क्षत्रधर्मानुरूपाणि तानि संस्मर्तुमर्हसि ॥ २६

हतो दुर्योधनः पापो राज्यस्य परिपन्थ्यसौ ।
दुश्शासनस्य रुधिरं प्राशितं तु रणे मया ॥ २७

वैरस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ।
जित्वा द्रोणसुतो मुक्तो ब्राह्मण्याद्गौरवेण च ॥ २८

यशोऽस्य पतितं देवि शरीरं त्ववशेषितम् ।

मणिना विप्रमुक्तश्च न्यासितश्चायुधानि च ॥ २९

द्रौपदी—

केवलानृण्यमाप्ताऽस्मि गुरुपुत्रो गुरुर्मम ।
शिरसैनं मणिं राजा ग्रहीतुमनघोऽर्हति ॥ ३०

वैशम्पायनः—

तं गृहीत्वा ततो राजा शिरस्येवाकरोत् तदा ।
गुरोरुच्छिष्टमित्येव द्रौपदीवचनादपि ॥ ३१

ततो दिव्यं मणिवरं शिरसा धारयन् प्रभुः ।
शुशुभे च महाराजस् सचन्द्र इव पर्वतः ॥ ३२

उत्तस्थौ पुत्रशोकार्ता ततः कृष्णा मनस्विनी ।
कृष्णं चापि महाबाहुर् अन्वपृच्छद्युधिष्ठिरः ॥ ३३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ७९ ॥ ऐषीकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
॥ अस्मिन्नध्याये ३३ श्लोकाः ॥

## ॥ सप्तदशोऽध्यायः ॥



युधिष्ठिरेण द्रौणेरेकस्य बहुमारणशक्तिप्रश्ने कृष्णेन रुद्रप्रसादादित्युक्त्वा रुद्रमहिमकथनम् ॥

---

वैशम्पायनः—

हतेषु सर्वसैन्येषु सौप्तिके तै रथैस्त्रिभिः ।
शोचमानोऽब्रवीद्राजा पाण्डवो यदुनन्दनम् ॥ १

युधिष्ठिरः—

कथं नु कृष्ण पापेन क्षुद्रेण शठबुद्धिना ।
द्रौणिना निहतास्सर्वे मम पुत्रा महारथाः ॥ २

तथा कृतास्त्रविक्रान्तास् सङ्ग्रामेष्वपलायिनः ।
द्रुपदस्यात्मजास्सर्वे द्रौणिना निहताः कथम् ॥ ३

[1]यस्य द्रोणो महेष्वासो न प्रादादाहवे मुखम् ।
निजघ्ने रथिनां श्रेष्ठं धृष्टद्युम्नं कथं नु सः ॥ ४

किं नु तेन कृतं कर्म तथा युक्तं नरर्षभ ।
[2]यदेकस्समरे सर्वान् अवधीद्वै गुरोस्सुतः ॥ ५

श्रीभगवान्—

नूनं स देवदेवानाम् ईश्वरेश्वरमव्ययम् ।

---

1. क-ख-घ—यं स द्रोणो महेष्वासो न ददाह चमूमुखे ।
स वीरो रथिनां श्रेष्ठो धृष्टद्युम्नः कथं हतः । [पाठान्तरम्]
2. क-ख-घ—यदेकश्शिबिरं स्फीतमवधीद्द्रौणिराहवे । [पाठान्तरम्]

जगाम शरणं द्रौणिर् एकस्तेनावधीद्बहून् ॥ ६

प्रसन्नो हि महादेवो दद्यादमरतामपि ।
वीर्यं हि गिरिशो दद्याद् येनेन्द्रमपि शातयेत् ॥ ७

वेदाहं हि महादेवं तत्त्वेन भरतर्षभ ।
यानि चास्य पुराणानि कर्माणि विविधानि च ॥ ८

आदिरेष हि [1]भूतानां मध्यमन्तश्च भारत ।
[2]विचेष्टते जगच्चेदं सर्वमस्यैव कर्मणा ॥ ९

[3]एवं सिसृक्षुर्भूतानि ददर्श प्रथमं विभुः ।
[4]पितामहोऽब्रवीच्चैनं भूतानि सृज मा चिरम् ॥ १०

हरिकेशस्तथेत्युक्त्वा दीर्घदर्शी तदा प्रभुः ।
दीर्घकालं तपस्तेपे मग्नोऽम्भसि महातपाः ॥ ११

सुमहान्तं ततः कालं प्रतीक्ष्यैनं पितामहः ।
स्रष्टारं सर्वभूतानां ससर्ज मनसाऽपरम् ॥ १२

सोऽब्रवीद्भ्रातरं दृष्ट्वा गिरिशं सुप्तमम्भसि ।
यदि मे नाग्रजोऽस्त्यन्यस् ततस्स्रक्ष्याम्यहं प्रजाः ॥ १३

तमब्रवीत् पिता नास्ति त्वदन्यः पुरुषोऽग्रजः ।

---

1. क-ख-घ—विश्वस्य मध्यश्चान्तश्च भारत
2. क-ख-घ—तिष्ठते च जगत्सर्वं ध्रुवम
3. क-ख-घ—सिसृक्षुरथ भूतानि ससृजे प्रथमं प्रभुः ।
4. क—अयं श्लोको नास्ति

स्थाणुरेष जले मग्नो विस्रब्धः कुरु वै प्रजाः ॥ १४

स सर्वभूतान्यसृजद् दक्षः क्षिप्रं प्रजापतिः ।
यैरिमं व्यकरोत् सर्वं भूतग्रामं चतुर्विधम् ॥ १५

तास्सृष्टमात्राः क्षुधिताः प्रजास्सर्वाः प्रजापतिम् ।
बिभक्षयिषवो राजन् सहसाऽभ्यद्रवंस्तदा ॥ १६

स भक्ष्यमाणः प्राणार्थी पितामहमुपाद्रवत् ।
आभ्यो मां रक्षतु भवान् वृत्तिरासां विधीयताम् ॥ १७

[1]ततस्ताभ्यो ददावन्नम् ओषधीस्स्थावराणि च ।
जङ्गमानि च भूतानि दुर्बलानि बलीयसाम् ॥ १८

विहितान्नाः प्रजास्तास्तु जग्मुस्तुष्टा यथागतम् ।
ततो ववृधिरे राजन् प्रीतिमत्यस्स्वयोनिषु ॥ १९

भूतग्रामे विवृद्धे तु सृष्टे देवासुरे तदा ।
उदतिष्ठज्जलाज्ज्येष्ठः प्रजाश्चेमा ददर्श सः ॥ २०

बहुरूपाः प्रजास्सृष्टा विवृ[2]द्धाश्च स्वतेजसा ।
चुक्रोध बलवद्दृष्ट्वा लिङ्गं स्वं चाप्यविध्यत ॥ २१

तत् प्रविद्धं तथा भूमौ तथैव प्रत्यतिष्ठत ।

---

1. क—ततस्त्वसौ ददावन्नमोषधीः ख—ततस्तासां ददावन्नमोषधीः
   घ—ततस्त्वसौ वचावन्नमोषधिः

2. क-ख-घ—द्धास्सर्वशस्तथा

[1]तमुवाचाव्ययो ब्रह्मा वचोभिश्शमयन्निव ॥ २२

ब्रह्मा—

किं कृतं सलिले शर्व चिरकालस्थितेन ते ।
किमर्थं चेदमुत्पाद्य लिङ्गं भूमौ प्रवेशितम् ॥ २३

श्रीभगवान्—

सोऽब्रवीज्जातसंरम्भस् तथा लोकगुरुर्गुरुम् ॥ २३॥

रुद्रः—

सृष्टाः प्रजाः परेणेमाः किं करिष्याम्यनेन वै ॥ २४

तपसाऽधिगतं [2]चान्नं प्रजार्थं मे पितामह ।
ओषध्यः परिवर्धन्ते यथैव सततं प्रजाः ॥ २५

श्रीभगवान्—

एवमुक्त्वा स सक्रोधो जगाम विमना भवः ।
गिरेर्मुञ्जवतः पादं [3]तपस्तप्तुं महातपाः ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ७९ ॥ ऐषीकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये २६ श्लोकाः]

---

1. क—तमुपेत्याब्रवीद्ब्रह्मा घ—इदमादि अर्धद्वयं नास्ति
2. घ—त्वन्नं प्रजार्थं तत्
3. क-ख—गिरेर्हिमवतः पादं तत्र तेपे महत्तपः । च—तपस्तेपे

## ॥ अष्टादशोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति रुद्रस्य कोपप्रसादाभ्यां देवानां यज्ञनाशतत्प्रवृत्तिकथनपूर्वकं तत एवाश्वत्थामद्वारा पुत्रादिवधसंभवकथनम् ॥

श्रीभगवान्—

ततो देवयुगेऽतीते देवा वै समकल्पयन् ।
यज्ञं वेदप्रमाणेन विधिवद्यष्टुमीप्सवः ॥ १

कल्पयामासुरथ ते साधनानि हवींषि च ।
भागार्हा देवताश्चैव यज्ञियं द्रव्यमेव च ॥ २

ते वै रुद्रमजानन्तो याथातथ्येन भारत ।
नाकल्पयन्त देवस्य स्थाणोर्भागं नराधिप ॥ ३

सोऽकल्प्यमाने भागे तु कृत्तिवासा मखेऽमरैः ।
तपसा यज्ञमन्विच्छन् धनुरग्रे ससर्ज ह ॥ ४

लोकयज्ञः क्रियायज्ञो गृहयज्ञस्सनातनः ।
[1]पञ्चभूतनृयज्ञश्च यज्ञे सर्वमिदं जगत् ॥ ५

लोक[2]यज्ञनृयज्ञैश्च कपर्दी विदधे धनुः ।
तत् सर्वमभवत्तस्य षष्टिकिष्कुप्रमाणतः ॥ ६

1. क-ख-घ—पञ्चभूतानि यज्ञो वै यज्ञः सर्वं
2. क-ख-घ—यज्ञेन यज्ञैषी कपर्दी व्यसृजद्धनुः

[1]वषट्कारोऽभवज्ज्या तु धनुषस्तस्य भारत ।
यज्ञाङ्गानि च चत्वारि तस्य संनहनेऽभवन् ॥ ७

ततः क्रुद्धो महादेवस् तदुपादाय कार्मुकम् ।
आजगामाथ तत्रैव यत्र देवास्समीजिरे ॥ ८

तमात्तकार्मुकं दृष्ट्वा ब्रह्मचारिणमव्ययम् ।
विव्यथे पृथिवी देवी पर्वताश्च चकम्पिरे ॥ ९

न ववौ पवनश्चैव नाग्निर्जज्वाल चैधितः ।
व्यभ्रमच्चापि संविग्नं दिवि नक्षत्रमण्डलम् ॥ १०

न बभौ भास्कर[2]श्चापि सोमश्श्रीमुक्तमण्डलः ।
तिमिरेणावृतं सर्वम् आकाशं चाभवत् तदा ॥ ११

अभिभूतास्ततो देवा विषयान् न प्रजज्ञिरे ।
[3]न प्रत्यभाच्च यज्ञस्स देवतास्त्रेसिरे तथा ॥ १२

ततस्स [4]यज्ञं विव्याध रौद्रेण हृदि पत्रिणा ।
[5]अपक्रान्तस्ततो यज्ञो मृगो भूत्वा सपावकः ॥ १३

---

1. अ—अष्टार्धानि न सन्ति
2. क-ख—न बभौ भास्करो नापि सोमः श्रीयुक्तमण्डलः ।
   घ—नापि सोमः श्रीयुक्तमण्डलः
3. अ—नास्तीदमर्धम्
4. क-ख-घ—यज्ञदेवेशो विव्याध हृदि पत्रिणा
5. क-ख—व्यपासर्पत्ततो यज्ञो घ—व्यपानसर्पस्तु ततो

स तु तेनैव [1]रूपेण दिविस्थो वै व्यराजत ।
अन्वीयमानो रुद्रेण युधिष्ठिर नभस्थले ॥ १४

अपक्रान्ते ततो यज्ञे संज्ञा न प्रत्यभात् सुरान् ।
नष्टसंज्ञेषु देवेषु न प्राज्ञायत किञ्चन ॥ १५

त्र्यम्बकस्सवितुर्बाहू भगस्य नयने तथा ।
पूषणश्च दशनान् सर्वान् धनुष्कोट्या व्यशातयत् ॥ १६

प्राद्रवन्त ततो देवा यज्ञाङ्गानि च सर्वशः ।
केचित् तत्रैव घूर्णन्तो गतासव इवाभवन् ॥ १७

स तु विद्राव्य [2]तत् सर्वं शितिकण्ठोऽपहस्य तु ।
अवष्टभ्य धनुष्कोटिं रुरोध विबुधांस्ततः ॥ १८

ततो वागमरैरुक्ता ज्यां तस्य धनुषोऽच्छिनत् ।
[3]अथ तत् सहसा राजंश् छिन्नज्यं विष्फुरद्धनुः ॥ १९

ततो विधनुषं देवा देवश्रेष्ठ[4]मुपागमन् ।
शरणं सह यज्ञेन [5]प्रसादं चाकरोत् प्रभुः ॥ २०

ततः प्रसन्नो भगवान् प्रास्यत् कोपं जलाशये ।

---

1. क-ख—स तु तेनैव रूपेण दिविस्थो वै व्यरोचत ।
घ—रोषेण दिशस्तो वै व्यरोचत
2. ख-घ—सर्वांस्तान् शितिकण्ठः प्रतापवान्
3. अ—नास्तीदमर्धम्
4. क-ख-घ—मुपाद्रवन्
5. क-ख-घ—प्रसादमकरोच्च सः

[1]स जलं पावको भूत्वा शोषयत्यखिलं विभो ॥ २१

भगस्य नयने चैव बाहू च सवितुस्तथा ।
प्रादात् पूष्णश्च दशनान् पुनर्यज्ञं च पाण्डव ॥ २२

ततस्स्वस्थमिदं सर्वं बभूव पुनरेव हि ।
सर्वाणि च हवींष्यस्य देवा भागमकल्पयन् ॥ २३

तस्मिन् क्रुद्धेऽभवत् सर्वम् अस्वस्थं भुवनं प्रभो ।
प्रसन्ने च पुनस्स्वस्थं जगद्भवति भारत ॥ २४

ततस्ते निहता तेन तव पुत्रा महारथाः ।
अन्ये च बहवश्शूराः पाञ्चालास्सपदानुगाः ॥ २५

न तन्मनसि कर्तव्यं न हि तद्द्रोणिना कृतम् ।
महादेवप्रसादस्स कुरु कार्यमनन्तरम् ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सौप्तिकपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ७९ ॥ ऐषीकपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये २६ श्लोकाः]

[ऐषिकपर्व समाप्तम्]

॥ सौप्तिकपर्व समाप्तम् ॥

---

॥ अस्मिन् सौप्तिकपर्वणि ८२०॥ श्लोकाः ॥

---

1. क-ख-घ—स कोपः पावको भूत्वा व्यशोषयत तत् पयः ।

अतःपरं स्त्रीपर्व भविष्यति तस्यायमाद्यः श्लोकः



जनमेजयः—

हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
धृतराष्ट्रो महाराज श्रुत्वा किमकरोन्मुने ॥

॥ श्रीः ॥

# ॥ महाभारतम् ॥

## ॥ स्त्रीपर्व ॥

### ( जलप्रदानपर्व )

### ॥ प्रथमोऽध्यायः ॥

सञ्जयेन पुत्रादीन् प्रति शोचतो धृतराष्ट्रस्य समाश्वासनम् ॥

जनमेजयः—

हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
धृतराष्ट्रो महाराज श्रुत्वा किमकरोन्मुने ॥ १

तथैव कौरवो राजा धर्मपुत्रो महामनाः ।
कृपप्रभृतयश्चैव किमकुर्वत ते त्रयः ॥ २

अश्वत्थाम्नश्श्रुतं कर्म शापश्चान्योन्यकारितः ।
वृत्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः ॥ ३

वैशम्पायनः—

हते पुत्रशते दीनं छिन्नशाखमिव द्रुमम् ।
पुत्रशोकाभिसन्तप्तं धृतराष्ट्रं महीपतिम् ॥ ४

ध्यानमूकत्वमापन्नं चिन्तया समभिप्लुतम् ।
सञ्जयो जयतां श्रेष्ठ राजानं वाक्यमब्रवीत् ॥ ५

सञ्जयः—

किं शोचसि महाप्राज्ञ नास्ति शोके सहायता ।
अक्षौहिण्यो हता ह्यष्टौ दश चैव विशां पते ॥ ६

निर्जितेयं वसुमती शून्या स्थास्यति केवलम् ।
नानादिग्भ्यस्समागम्य नानाजात्या नराधिपाः ॥ ७

सहितास्तव पुत्रेण सर्वे वै निधनं गताः ॥ ७॥

पितॄणां पुत्रपौत्राणां ज्ञातीनां सुहृदां तथा ।
गुरूणां चानुपूर्व्येण [1]ये चान्येऽनुचरा हताः ॥ ८॥

प्रेतकार्याणि सर्वाणि कारयस्व नराधिप ॥ ९

वैशम्पायनः—

तच्छ्रुत्वा करुणं वाक्यं पुत्रपौत्रवधार्दितः ।
पपात भुवि दुर्धर्षो वाताहत इव द्रुमः ॥ १०

धृतराष्ट्रः—

हतपुत्रो हतामात्यो हतसर्वसुहृज्जनः ।
दुःखं नूनं गमिष्यामि विचरन् पृथिवीमिमाम् ॥ ११

किं तु बन्धुविहीनस्य जीवितेन ममाद्य वै ।

---

1. अ—येचान्यानुचरा हताः ख—ये चान्ये तु चरा हताः

लूनपक्षस्य इव मे वैनतेयस्य सञ्जय ॥ १२

हृतराज्यो हतसुहृद्धतपुत्रश्च वै तथा ।
[1]न भ्राजामि महाप्राज्ञ क्षीणरश्मिरिवांशुमान् ॥ १३

न कृतं सुहृदां वाक्यं जामदग्न्यस्य जल्पितम् ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥ १४

सभामध्ये तु कृष्णेन यच्छ्रेयोऽभिहितं मम ।
अलं वैरेण ते राजन् पुत्रस्सङ्गृह्यतामिति ॥ १५

तच्च तेषामकृत्वाऽद्य भृशं तप्स्यामि दुर्मतिः ।
न हि श्रोष्यामि भीष्मस्य धर्मयुक्तं प्रभाषितम् ॥ १६

दुर्योधनस्य च तथा वृषभस्येव नर्दतः ।
दुश्शासनवधं श्रुत्वा कर्णस्य च विपर्ययम् ॥ १७

द्रोणसूर्योपरागं च हृदयं मे विदीर्यते ॥ १७॥

न स्मराम्यात्मनः किञ्चित् पुरा सञ्जय दुष्कृतम् ।
यस्यैवं फलमद्येह मया मूढेन भुज्यते ॥ १८॥

नूनं ह्यपकृतं किञ्चिन्मया पूर्वेषु जन्मसु ।
येन मां दुःखभागेषु धाता कर्मसु युक्तवान् ॥ १९॥

परिणामश्च वयसस् सर्वबन्धुक्षयश्च मे ।
सुहृन्मित्रविनाशश्च दैवयोगादुपागतः ॥ २०॥

---

1. क-घ—न भ्रासामि महाप्राज्ञ क्षीणरश्मि

को न्वस्ति दुःखिततरो लोके मत्तः पुमानिह ॥ २१

तं मामद्यैव पश्यन्तु पाण्डवास्संशितव्रताः
[1]विस्तृतं ब्रह्मलोकस्य दीर्घमध्वानमास्थितम् ॥ २२

वैशम्पायनः—

तस्य लालप्यमानस्य बहुशोकं विचिन्वतः ।
शोकापहं नरेन्द्राय सञ्जयो वाक्यमब्रवीत् ॥ २३

सञ्जयः—

शोकं राजन् व्यपनुद श्रुतास्ते वेदनिश्चयाः ।
शास्त्रागमाश्च विविधा वृद्धेभ्यो नृपसत्तम ॥ २४

सृञ्जये पुत्रशोकार्ते यदूचुर्मुनयः पुरा ।
तथा यौवनकन्दर्पमास्थिते ते सुते नृप ॥ २५

न त्वया सुहृदां वाक्यं ब्रुवतामवधारितम् ।
स्वार्थो न च कृतः कश्चिल्लुब्धेन फलगृघ्नुना ॥ २६

[2]अस्मिन्नेवैकधारेण स्वबुद्ध्या भुवि चेष्टितम् ।
प्रायोऽपि वृत्तसम्पन्नास् सततं पर्युपासिताः ॥ २७

तव दुश्शासनो मन्त्री राधेयश्च दुरात्मवान् ।
शकुनिश्चैव दुष्टात्मा चित्रसेनश्च दुर्मतिः ॥ २८
अनल्पं येन वै सर्वं शल्यभूतमिदं जगत् ॥ २८॥

---

1. अ—विसृतं स्मृतिश्रुतिषु विशेषेण सृतं गतम् ॥ [अधिकः पाठः]
2. ख-घ—इदमादि अर्धद्वयं नास्ति

कुरुवृद्धस्य भीष्मस्य गान्धार्या विदुरस्य च ।
[1]द्रोणस्य च महाराज कृपस्य च शरद्वतः ॥ २९॥

कृष्णस्य च महाबाहो नारदस्य च धीमतः ।
ऋषीणां च तथाऽन्येषां व्यासस्यामिततेजसः ॥ ३०॥

न कृतं तेन वचनं पुत्रेण तव भारत ॥ ३१
अधर्मसंयुतं किञ्चिन्नित्यं युद्धमिति ब्रुवन् ॥ ३१॥

क्षपिताः क्षत्रियास्सर्वे शत्रूणां वर्धितं यशः ।
मध्यस्थोऽपि त्वमप्यासीर् न क्षमं किञ्चिदुक्तवान् ॥ ३२॥

दुर्धरेण त्वया भारस् तुलया न समो धृतः ।
आदावेव मनुष्येण वर्तितव्यं यथाक्रमम् ॥ ३३॥

यथा नातीतमर्थं वै पश्चात् तापेन युज्यते ।
पुत्रगृद्ध्या त्वया राजन् प्रियं तस्य चिकीर्षितम् ॥ ३४॥

पश्चात् तापमिमं प्राप्तं न त्वं शोचितुमर्हसि ॥ ३५

मधु यः केवलं दृष्ट्वा प्रपातं नानुपश्यति ।
स भ्रष्टो मधुलोभेन शोचत्येव यथा भवान् ॥ ३६

[2]अर्थं न शोचन् प्राप्नोति न शोचन् विन्दते सुखम् ।
[3]न शोचन् स्त्रियमाप्नोति न शोचन् विन्दते जयम् ॥ ३७

---

1. ख-घ—इदमादि अर्धत्रयं नास्ति
2. क—अर्थान  ख-घ—अर्थान्न
3. ख—इदमर्धं नास्ति

स्वयमुत्पादयित्वाऽग्निं परीतस्तेन योऽग्निना ।
दह्यमानः पुनस्तापं भजते न स पण्डितः ॥ ३८

त्वयैव ससुतेनायं वाक्यवायुसमीरितः ।
लोभाज्येन च संयुक्तो ज्वलितः पार्थपावकः ॥ ३९

तस्मिन् समिद्धे पतिताश् शलभा इव ते सुताः ।
तान् केशवाग्निनिर्दग्धान् न त्वं शोचितुमर्हसि ॥ ४०

यच्चाश्रुपातकलिलं वदनं वहसे नृप ।
अशास्त्रदृष्टमेतद्धि न प्रशंसन्ति पण्डिताः ॥ ४१

विष्फुलिङ्गा इवाग्नेस्तु दहन्ति किल मानवान् ।
जहि मन्युं स्वबुद्ध्या वै धारयात्मानमात्मना ॥ ४२

[1]एषा वै सर्वसत्त्वानां लोकेश्वर परा गतिः ॥ ४२॥

वैशम्पायनः—

तं समाश्वासितं तेन सञ्जयेन महात्मना ।
विदुरो भूय एवाह बुद्धिपूर्वं परन्तपः ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि प्रथमोऽध्यायः ॥ १ ॥
॥ ८० ॥ जलप्रदानपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ४३॥ श्लोकाः ]

---

1. क-ख-घ—इदमर्धं नास्ति

## ॥ द्वितीयोऽध्यायः ॥

विदुरेण शास्त्रार्थकथनेन धृतराष्ट्रस्य शोकापनोदनम् ॥

वैशम्पायनः—

ततोऽमृतरसैर्वाक्यैर् ह्लादयन् पुरुषर्षभः ।
वैचित्रवीर्यं विदुरो यदुवाच निबोध तत् ॥ १

विदुरः—

उत्तिष्ठ राजन् किं शेषे धारयात्मानमात्मना ।
एषा वै सर्वसत्त्वानां लोकेश्वर परागतिः ॥ २

सर्वे क्षयान्ता निचयाः पतनन्तास्समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ३

यथा शूरं च भीरुं च यमः कर्षति भारत ।
तत् किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ ॥ ४

अयुध्यमानो म्रियते युध्यमानश्च जीवति ।
कालं प्राप्य महाराज न कश्चिदतिवर्तते ॥ ५

[1]अभावादीनि दुःखानि दुःखमध्यानि भारत ।
अभावनिधनान्येव तत्र का परिदेवना ॥ ६

न [2]शोचन् मतिमन्वेति न शोचन् म्रियते नरः ।

1. ख-घ—इदमादि अर्धनवकं नास्ति 2. अ—शोकोमृतमप्येति

एवं संसाधिते लोके किमर्थमनुशोचसि ॥ ७
कालः कर्षति भूतानि सर्वाणि विविधान्युत ॥ ७॥

यथा वायुस्तृणाग्राणि संवर्तयति सर्वशः ।
तथा कालवशं यान्ति भूतानि भरतर्षभ ॥ ८॥

एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् ।
यस्य कालः प्रयात्यग्रे तत्र का परिदेवना ॥ ९॥

न चाप्येतान् मृतान् युद्धे राजन् शोचितुमर्हसि ।
प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम् ॥ १०॥

सर्वे स्वाध्यायवन्तो हि सर्वे च चरितव्रताः ।
सर्वे चाभिमुखाः क्षीणास् तत्र का परिदेवना ॥ ११॥

अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
न ते तव न तेषां त्वं तत्र का परिदेवना ॥ १२॥

हतो हि लभते स्वर्गं जित्वा वा लभते यशः ।
अभयं नो बहुगुणं नास्ति निष्फलता रणे ॥ १३॥

तेषां कामदुघाँल्लोकान् इन्द्रस्सङ्कल्पयिष्यति ।
इन्द्रस्यातिथयो ह्येते भवन्ति पुरुषर्षभ ॥ १४॥

न यज्ञैर्दक्षिणावद्भिर् न तपोभिर्न विद्यया ।
स्वर्गं याति तथा मर्त्यो यथा शूरो रणे हतः ॥ १५॥

[1]शरीराग्निषु ते शूरा जुहुवुर्वै शराहताः ।
हूयमानाञ्छरांश्चैव जहुस्तेजस्विनो मिथः ॥ १६

एतद्राजंस्तदाऽऽचक्षे स्वर्गं पन्थानमुत्तमम् ।
न युद्धादधिकं किञ्चित् क्षत्रियस्येह विद्यते ॥ १७

क्षत्रियास्ते महात्मानश् शूरास्समितिशोभनाः ।
अमृतं परमं प्राप्ता न शोच्यास्सर्व एव हि ॥ १८

आत्मानमात्मनाऽऽश्वास्य मा शुचः पुरुषर्षभ ।
नाद्य शोकाभिभूतस्त्वं कार्यमुत्स्रष्टुमर्हसि ॥ १९

मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ २०

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढम् आविशन्ति न पण्डितम् ॥ २१

न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ।
न मध्यस्थः क्वचित् कालस् सर्वं कालः प्रकर्षति ॥ २२

[2]कालः पचति भूतानि कालस्संहरते प्रजाः ।
कालस्सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ २३

अनित्यं जीवितं रूपं यौवनं द्रव्यसञ्चयः ।

---

1. ख-ब—इदमादि अर्धाष्टकं नास्ति
2. ख-घ—इदमर्धद्वयं नास्ति

आरोग्यं प्रियसंवासो गृध्येन्न ह्येषु पण्डितः ॥ २४॥

न हि जानपदं दुःखम् एकश्शोचितुमर्हसि ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ २५॥

अशोचन् प्रतिकुर्वीत यदि पश्येत् पराक्रमम् ।
भैषज्यमेतद्दुःखस्य यदेवं नानुचिन्तयेत् ॥ २६॥

चिन्त्यमानं हि नापैति भूयश्चापि विवर्धते ॥ २७

अनिष्टसम्प्रयोगाच्च विप्रयोगात् प्रियस्य च ।
अलब्धलाभाः क्लिश्यन्ते लब्धलाभानुपातिनः ॥ २८

मनुष्या मानुषैर्दुःखैर् युज्यन्ते येऽल्पबुद्धयः ।
नार्थो न धर्मो न सुखं यदेतदनुशोचसि ॥ २९

तच्च नाप्नोति कार्यार्थं त्रिवर्गाच्चैव भ्रश्यते ॥ २९॥

[1]अन्योन्यबाधनावस्थां प्राप्य वैषयिका नराः ।
असन्तुष्टाः प्रमुह्यन्ति सन्तोषं यान्ति पण्डिताः ॥ ३०॥

प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतज्ज्ञानस्य सामर्थ्यं न बालैस्समतामियात् ॥ ३१॥

शयानं चानुशयति तिष्ठन्तं चानुतिष्ठति ।
अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ॥ ३२॥

1. अ—अन्योन्यबोधनावस्थां प्राप्य वै शेषिकां नराः ।

यस्यां यस्यामवस्थायां यत् करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्तत् फलमवाप्नुयात् ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
॥ ८० ॥ जलप्रदानपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ३३॥ श्लोकाः]

---

## ॥ तृतीयोऽध्यायः ॥



विदुरेण धृतराष्ट्रशोकापनोदनाय शास्त्रार्थकथनम् ॥

---

धृतराष्ट्रः—

सुभाषितैर्महाप्राज्ञ शोको मेऽपगतः प्रभो ।
भूय एव तु वाक्यानि श्रोतुमिच्छामि तत्वतः ॥ १

अनिष्टानां च संसर्गाद् इष्टानां च निवर्तनात् ।
कथं वै मानसं दुःखं विप्रयुज्यन्ति पण्डिताः ॥ २

विदुरः—

यतो यतो मनो दुःखात् सुखाद्वा विप्रमुच्यते ।
ततस्ततश्शमं लब्ध्वा सुगतिं विन्दते बुधः ॥ ३

अशाश्वतमिदं सर्वं चिन्त्यमानं नरर्षभ ।
कदलीसन्निभो लोकस् सारो ह्यस्य न विद्यते ॥ ४

गृहाण्येव हि मर्त्यानाम् आहुर्देहान् हि पण्डिताः ।
कालेन विनियुज्यन्ते सत्यमेषां तु शोभनम् ॥ ५

यथा जीर्णमजीर्णं वा वस्त्रं त्यक्त्वाऽथ पूरुषः ।
अन्यद्रोचयते वस्त्रम् एवं देहश्शरीरिणाम् ॥ ६

वैचित्रवीर्य सत्यं हि दुःखं वा यदि वा सुखम् ।
प्राप्नुवन्ति हि भूतानि स्वकृतेनैव कर्मणा ॥ ७

कर्मणा प्राप्यते स्वर्गस् सुखं दुःखं च भारत ।
ततो वहति तं भारम् अवशस्स्ववशोऽपि वा ॥ ८

[1-2]किञ्चित् प्रक्रियमाणं वा कृतमात्रमथापि वा ।
भिन्नं वाऽप्यवरोप्यं वा अवतीर्णमथापि वा ॥ ९

आर्द्रं वाऽप्यथवा शुष्कं पच्यमानमथापि वा ।
अवतार्यन्तमापाकाद् उद्धृतं वाऽपि भारत ॥ १०

अथवा परिभ[3]ज्यन्ते एवं देहश्शरीरिणम् ॥ १०॥

गर्भस्थो वा प्रसूतो वा अथवा दशरात्रकः ।
अर्धमासगतो वाऽपि मासमात्रगतोऽपि वा ॥ ११॥

संवत्सरगतो वाऽपि द्विसंवत्सर एव वा ।

---

1. ख-घ—यथा च मृन्मयं भाण्डं चक्रारूढं विपद्यते । [अधिकः पाठः]

2. क—अर्धद्वयं नास्ति

3. क-ख-घ—भुज्यन्तमेवं देहाः

यौवनस्थो विमध्यस्थो वृद्धो वाऽपि विपद्यते ॥　　१२॥

प्राक्कर्मभिस्तु भूतानि [1]विपद्यन्ते भवन्ति च ।
एवं [2]संवर्धिते लोके किमर्थमनुतप्यसे ॥　　१३॥

यथा तु सलिले राजन् क्रीडार्थमनुसञ्चरन् ।
उन्मज्जेच्च निमज्जेच्च चेष्टते हि नराधिप ॥　　१४॥

एवं संसारगहनाद् उन्मज्जननिमज्जनात् ।
कर्मयोगेन बध्यन्ते क्लिश्यन्ते स्वल्पबुद्धयः ॥　　१५॥

ये तु प्राज्ञास्स्थिता मध्ये संसारान्तगतैषिणः ।
समागमज्ञा भूतानां ते यान्ति परमां गतिम् ॥　　१६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
॥ ८० ॥ जलप्रदानपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये १६॥ श्लोकाः ]

---

1. क-ख-घ—भवन्ति न भवन्ति च
2. ख—सांसिद्धिके

## ॥ चतुर्थोऽध्यायः ॥



विदुरेण धृतराष्ट्रं प्रति जीवस्य गर्भवासप्रकारकथनम् ॥

धृतराष्ट्रः—

कथं संसारगहनं विज्ञेयं वदतां वर ।
एतदिच्छाम्यहं श्रोतुं तत्त्वमाख्याहि [1]पृच्छते ॥ १

विदुरः—

जन्मप्रभृति भूतानां क्रियास्सर्वास्तु लक्षयेत् ।
पूर्वमेवेह कलिलं वसते किञ्चिदन्तरम् ॥ २

ततस्स पञ्चमेऽतीते मांसत्रयमकल्पयत् ।
ततस्सर्वाङ्गसम्पूर्णो [2]गर्भो मासे च जायते ॥ ३

अमेध्यमध्ये वसति मांसशोणितलेपने ।
ततस्तु वायुवेगेन ह्यूर्ध्वपादो ह्यधोमुखः ॥ ४

योनिद्वारमुपागम्य बहून् क्लेशान् समृच्छति ।
योनिसम्पीडनाच्चैव पूर्वकर्मपदानुगः ॥ ५

तस्मान्मुक्तस्स संसारादन्यान् पश्यत्युपद्रवान् ।
ग्रहास्तमुपसर्पन्ति सारमेया इवामिषम् ॥ ६

---

1. क-घ—पृच्छतः
2. क-ख-घ—मासे मांसमकल्पयत्

ततः कालान्तरे प्राप्ते व्याधयश्चापि तं तथा ।
उपसर्पन्ति जीवन्तं बध्यमानं स्वकर्मभिः ॥ ७

बद्धमिन्द्रियपाशैस्तं सङ्गकामुकमातुरम् ।
व्यसनान्यनुवर्तन्ते विविधानि नराधिप ॥ ८

[1]मथ्यमानश्च तैर्भूयो नैव तृप्तिमुपैति सः ।
[2]अयं न बुध्यते तावद् यमलोकादिहागमम् ॥ ९

यमदूतैर्विकृष्टश्च मृत्युं कालेन गच्छति ॥ ९॥

वाग्घीनस्य च या मात्रा इष्टानिष्टकृताऽस्य वै ।
भूय एवात्मनाऽऽत्मानं बध्यमानमुपैति सः ॥ १०॥

तत्रैनं परिपश्यन्ति ये ध्यानपरिनिष्ठिताः ॥ ११

अहो विनिकृतो लोको लोभेन च वशीकृतः ।
लोभक्रोधमदोन्मत्तो नात्मानमवबुध्यते ॥ १२

कुलीनत्वे च रमते दुष्कुलीनान् विकुत्सयन् ।
धनदर्पेण दृप्तश्च दारिद्र्यं परिकुत्सयन् ॥ १३

मूर्खानिति परानाह नात्मानं समवेक्षते ।
[3]दीक्षां क्षिपति चान्येषां नात्मानं शास्तुमर्हति ॥ १४

---

1. ख-घ—बध्य
2. क-घ—तत्रैनं परिपश्यन्ति ये ध्यानपरिनिश्रिताः ।
[ अर्धमेकमधिकम् ]
3. क—वीक्षां ख—दोषान् घ—शिक्षां

यथा प्राज्ञाश्च मूढाश्च धनवन्तोऽथ निर्धनाः ।
कुलीनाश्चाकुलीनाश्च मानिनोऽथाप्यमानिनः ॥ १४

सर्वे पितृवनं प्राप्तास् स्वपन्ति विगतत्वचः ॥ १५॥
निर्मांसैरस्थिभूयिष्ठैर् गात्रैश्च स्नायुबन्धनैः ।

किं विशेषं प्रपश्यन्ति तत्र तेषां परे जनाः ॥ १६॥
येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् ।

यदा सर्वे समं न्यस्तास् स्वपन्ति धरणीतले ॥ १७॥

तस्मादन्योन्यमिच्छन्ति [1]विप्रलब्धुमिहाबुधाः ॥ १८

प्रत्यक्षं च परोक्षं च यो निशाम्य श्रुतीमिमाम् ।
जन्मप्रभृति वर्तेत प्राप्नुयात् परमां गतिम् ॥ १९

एवं सर्वं विदित्वा वै यस्तत्त्वमनुवर्तते ।
स वै मोक्षयते चैव पन्थानं मनुजाधिप ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
॥ ८० ॥ जलप्रदानपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

1. ख—विप्रलब्धमिवाबुधाः
घ—विप्रलुब्ध्वा महाबुधाः

## ॥ पञ्चमोऽध्यायः ॥



विदुरेण धृतराष्ट्रं प्रति उत्तराध्याये वक्ष्यमाणसंसारादीनां कान्तारादित्वेन रूपणम् ॥

---

धृतराष्ट्रः—

यदिदं धर्मगहनं बुद्ध्या समनुबुध्यते ।
एतद्विस्तरतस्सर्वं बुद्धिमार्गं प्रशंस मे ॥　१

विदुरः—

अत्र ते वर्तयिष्यामि नमस्कृत्वा स्वयम्भुवे ।
यथा संसारगहनं वदन्ति परमर्षयः ॥　२

कश्चिन्महति संसारे वर्तमानो द्विजः किल ।
वनं दुर्गमनुप्राप्तो महत् क्रव्यादसङ्कुलम् ॥　३

सिंहव्याघ्रगजाकारैर् अतिघोरैर्महाशनैः ।
समन्तात् सम्परिक्षिप्तं यस्माद्दृष्टुर्महद्भयम् ॥　४

तदस्य दृष्ट्वा हृदयम् उद्वेगमगमत् परम् ।
[1]अत्युच्छ्रयाश्च रोमाणां विक्रियाश्च भवन्ति वै ॥　५

स तद्वनं व्यतिसरन् नृप धावन्नितस्ततः ।

---

1. क—अभ्युच्छ्रयश्च रोम्णां वै विक्रियाश्च परन्तप ।
ख—अभ्युच्छ्रयन्त रोमाणां विक्रियाश्च परन्तप ।
ब—अभ्युच्छ्रयन्ते रोमाणि विक्रमश्च परन्तप ।

वीक्षमाणो दिशस्सर्वाश् शरणं क भवेदिति ॥ ६

स तेषां छिद्रमन्विच्छन् प्रद्रुतो भयपीडितः ।
न च निर्याति वै दूरं न च तैर्विप्रयुज्यते ॥ ७

अथापश्यद्वनं गूढं समन्ताद्वागुरावृतम् ।
बाहुभ्यां सम्परिष्वक्तस् स्त्रिया परमघोरया ॥ ८

पञ्चशीर्षधरैर्नागैश् शैलैरिव समुन्नतैः ।
नभस्पृशैर्महावृक्षैः परिक्षिप्तं महावनम् ॥ ९

वनमध्ये च तत्राभूद् उदपानस्समावृतः ।
वल्लीभिस्तृणनद्धाभिर् गूढाभिरभिसंवृतः ॥ १०

पपात स द्विजस्तत्र निगूढे सलिलाशये ।
विलग्नश्चाभवत् तस्मिँल्लतासन्तानसङ्कुले ॥ ११

पनसस्य यथा जातं वृन्तबद्धं महाफलम् ।
स तथा लम्बते तत्र ऊर्ध्वपादो ह्यधश्शिराः ॥ १२

[1]तथा तत्रैव चायातो दन्ती दलितपर्वतः ।
कूपपीनाहवेलायाम् अपश्यत महागजम् ॥ १३

षड्वक्त्रं कृष्णशबलं द्विषट्कपदचारिणम् ।
क्रमेण परिसर्पन्तं वल्लीवृक्षसमावृतम् ॥ १४

---

1. ख—अथ तत्रैव चान्योऽपि भूयो जात उपद्रवः । [पाठान्तरम्]

[1]तस्य शाखाप्रशाखासु वृक्षशाखाप्रलम्बिनः ।
नानावर्णा मधुकरा घोररूपा भयावहाः ॥　　१५

आसते मधु संहृत्य पूर्वमेव निकेतजाः ॥　　१५॥

भूयो भूयस्समीहन्ते मधूनि भरतर्षभ ।
[2]स्वादूनि यानि भूतानां यैर्बालो न वितृप्यते ॥　　१६॥

तेषां मधूनां विविधा धारा प्रस्रवते सदा ।
तां लम्बमानस्स पुमान् धारां पिबति सर्वदा ॥　　१७॥

न चास्य तृष्णा विरता पिबमानस्य सङ्कटे ।
अभीप्सति च तां नित्यम् अतृप्तश्च पुनः पुनः ॥　　१८॥

न चास्य जीविते राजन् निर्वेदस्समजायत ।
तत्रैव च मनुष्यस्य जीविताशा प्रतिष्ठिता ॥　　१९॥

कृष्णाश्श्वेताश्च तं वृक्षं निकृन्तन्ति स्म मूषिकाः ।
व्यालैश्च तद्वनं दुर्गं स्त्रिया च परमोग्रिया ॥　　२०॥

कूपाधस्ताच्च नागेन पीनाहे कुञ्जरेण च ।
वृक्षप्रपाताच्च भयं मूषिकेभ्यश्च पञ्चमम् ॥　　२१॥

मधुलोभान्मधुकरैः षष्ठमाहुर्महद्भयम् ।

---

1. अ—नास्तीदमर्धम्
2. क-ख—स्वादनीयानि भूतानां

एवं संवसते तत्र क्षिप्तस्संसारसागरे ॥　　२२॥

न चैव जीविताशायां निर्वेदमुपगच्छति ॥　　२३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
॥ ८० ॥ जलप्रदानपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये २३ श्लोकः]

---

## ॥ षष्ठोऽध्यायः ॥

---

पूर्वाध्याये कान्तारादित्वेन रूपितानां संसारादीनां स्वस्वशब्दैः प्रतिपादनम् ॥

---

धृतराष्ट्रः—

अहो खलु महद्दुःखं कृच्छ्रं वासं वसत्यसौ ।
कथं तत्र रतिस्तस्य तुष्टिर्वा वदतां वर ॥　　१

स देशः क्व नु यत्रासौ वसते धर्मसङ्कटे ।
कथं वा स विमुच्येत नरस्तस्मान्महाभयात् ॥　　२

एतद्वै सर्वमाचक्ष्व साधु चेष्टामहे तथा ।
[1]तथा कृपा मे महती जाता ह्युद्धरणेन च ॥　　३

---

1. अ—तथा कृता मे बुद्धिर्वै जाता ह्युद्धरणेन च ।
ख—कृपा मे महती जाता तस्याभ्युद्धरणेन हि ॥

विदुरः—

उपाख्यानमिदं राजन् मोक्षविद्भिरुदाहृतम् ।
सुगतिं विन्दते येन परलोकेषु मानवः ॥ ४

यत् तदुच्येत कान्तारं महत् संसार एव सः ।
यत्र दुर्गं हि यत्त्वेतत् संसारगहनं हि तत् ॥ ५

ये चैव प्रथिता व्याला व्याधयस्ते प्रकीर्तिताः ॥ ५॥

या सा नारी बृहत्काया अधितिष्ठति तत्र वै ।
तामाहुस्तु जरां प्राज्ञा वर्णरूपविनाशिनीम् ॥ ६॥

स यस्तु कूपो नृपते स तु देहश्शरीरिणाम् ॥ ७

यस्तत्र वसतेऽधस्तान्महाहिः काल एव सः ।
अन्तकस्सर्वभूतानां देहिनां प्राणहार्यसौ ॥ ८

कूपमध्ये च या जाता वल्ली यत्र स मानवः ।
प्रोतो ययाऽभवल्लग्नो जीविताशा शरीरिणाम् ॥ ९

स यस्तु कूप[1]पीनाहे वृक्षं विपरिसर्पति ।
षड्वक्त्रः कुञ्जरो राजन् स तु संवत्सरस्स्मृतः ॥ १०

षण्मुखा ऋतवो मासाः पादा द्वादश कीर्तिताः ॥ १०॥

[2]ये तु वृक्षं निकृन्तन्ति मूषिकाः पतगास्तथा ।

---

1. क-घ—पीनाहे तं वृक्षं परिसर्पति
　　ख—यस्तु कूपविपीनाहे तद्वृक्षं प

2. क—अर्धत्रयं नास्ति

रात्र्यहानि च तान् प्राहुर् भूतानां परिचिन्तकाः ॥ ११॥

ये ते मधुकरास्तत्र कामास्ते परिकीर्तिताः ॥ १२

यास्तु ता बहुशो धारास् स्रवन्ति [1]बहुविस्तरम् ।
तांस्तु कामरसान् विद्याद् यत्र सज्जन्ति मानवाः ॥ १३

एवं संसारचक्रस्य परिवृत्तिं विदुर्बुधाः ।
येन संसारचक्रस्य पाशं छिन्दन्ति वै बुधाः ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
॥ ८० ॥ जलप्रदानपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये १४ श्लोकाः ]

## ॥ सप्तमोऽध्यायः ॥



विदुरेण धृतराष्ट्रं प्रति तत्त्वकथनम् ॥

धृतराष्ट्रः—

अहोऽभिहितमाख्यानं भवता तत्त्वदर्शिना ।
भूय एव [2]महाप्राज्ञ श्रोष्ये वागमृतं तव ॥ १

विदुरः—

शृणु भूयः प्रवक्ष्यामि मार्गस्यैतस्य विस्तरम् ।

1. घ—मधुनिस्रवम् क-ख—बहुनिस्रवम्
2. क-घ—तु मे हर्षः श्रोतुं ख—तु मे हर्षः श्रुत्वा

यच्छ्रुत्वा विप्रमुच्यन्ते संसाराद्धि विचक्षणाः ॥ २

यथा तु पुरुषो राजन् दीर्घमध्वानमास्थितः ।
[1]क्वचित् क्वचिच्छ्रमस्थानं कुरुते वासमेव वा ॥ ३

एवं संसारपर्याये गर्भवासेषु भारत ।
कुर्वन्ति दुर्बुधा वासं मुच्यन्ते तत्र पण्डिताः ॥ ४

तस्मादध्वानमेवैतम् आहुश्शास्त्रविदो जनाः ॥ ४॥

यत् तत् संसारगहनं वनमाहुर्मनीषिणः ।
सोऽयं लोके समावर्तो मर्त्यानां भरतर्षभ ॥ ५॥

चराणां स्थावराणां च गृध्येत् तत्र न पण्डितः ॥ ६

शारीरा मानसाश्चैव मर्त्यानां व्याधयस्तु ये ।
प्रत्यक्षाश्च परोक्षाश्च ते व्यालाः कथिता बुधैः ॥ ७

क्लिश्यमानाश्च ये नित्यं मार्यमाणाश्च भारत ।
स्वकर्मभिर्महाव्यालैर् नोद्विजन्त्यल्पबुद्धयः ॥ ८

अथापि तैर्न मुच्येत व्याधिभिः पुरुषो नृप ।
आवृणोत्येव तं पश्चाज् जरा रूपविनाशिनी ॥ ९

शब्दरूपरसस्पर्शगन्धैश्च विविधैरपि ।
मज्जमानं महापङ्के निरालम्बे समन्ततः ॥ १०

संवत्सरर्तवो मासाः पक्षाहोरात्रसन्धयः ।

---

1. ख—क्वचिच्च विश्रमस्थानं

क्रमेणास्य प्रमार्जन्ति रूपमायुस्तथैव च ॥ ११

एते कालस्य विधयो नैनं जानन्ति दुर्बुधाः ॥ ११॥

तत्रापि लिखितान्याहुस् सर्वभूतानि कर्मणा ॥ १२

रथश्शरीरं भूतानां सत्त्वमाहुस्तु सारथिम् ।
इन्द्रियाणि हयानाहुः कर्म बुद्धिश्च रश्मयः ॥ १३

तेषां हयानां यो वेगं धावतामनुधावति ।
न संयमयते बुद्ध्या स यन्ता न निवर्तते ॥ १४

[1]यस्तु संसारचक्रेऽस्मिन् चक्रवत् परिवर्तते ।
याम्यमाहू रथं ह्येनं मुह्यन्ते येन दुर्बुधाः ॥ १५

स वै तत् प्राप्नुयाद्राजन् यत् त्वं प्राप्तो नराधिप ।
राज्यनाशस्सुहृन्नाशस् सुतनाशश्च भारत ॥ १६

अनु[2]तर्षुलमेवैतद् दुःखं भवति भारत ।
साधुः परमदुःखानां दुःखभैषज्यमारभेत् ॥ १७

[3]ज्ञानौषधमवाप्येह धुराहीनं महाधनम् ।
छिन्द्यादुःखमयं व्याधिं नरस्संयतमानसः ॥ १८

न विक्रमो न चाप्यर्थो न मित्रं न सुहृज्जनः ।
तस्मान्मोचयते दुःखाद् यतात्मा स्थिरनिश्चयः ॥ १९

तस्मान्मैत्रं समास्थाय शीलमापद्य भारत ।

---

1. ब—इदमर्धं नास्ति 2. अ-क-ब—कर्षण
3. ख-ब—अर्धद्वयं नास्ति

दमस्त्यागोऽप्रमादश्च ते त्रयो ब्रह्मणो हयाः ॥ २०

शीलरश्मिसमायुक्ते स्थितो यो मानसे रथे ।
त्यक्त्वा मृत्युभयं राजन् ब्रह्मलोकं स गच्छति ॥ २१

[1]अभयं सर्वभूतेभ्यो यो ददाति महीपते ।
स गच्छति परं स्थानं विष्णोः पदमनामयम् ॥ २२

नैतत् क्रतुसहस्रेण नोपवासेन नित्यशः ।
अभयस्य हि दानेन यत् फलं प्राप्नुयान्नरः ॥ २३

न ह्यात्मनः प्रियतरं किञ्चिद्भूतेषु निश्चितम् ।
अनिष्टं सर्वभूतानां मरणं नाम भारत ॥ २४

तस्मात् सर्वेषु भूतेषु दया कार्या विपश्चिता ॥ २४॥

नानायोगसमायुक्ता बुद्धिजालेन संवृताः ।
सुसूक्ष्मदृष्टयो धीरा व्रजन्ति ब्रह्मसाम्यताम् ॥ २५॥

एवं ज्ञात्वा महाप्राज्ञ स तेषामौर्ध्वदैहिकम् ।
कर्तुमर्हति तेनैव फलं प्राप्स्यति वै भवान् ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
॥ ८० ॥ जलप्रदानपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये २६॥ श्लोकाः ]

---

1. ब—इतो नवार्धानि न सन्ति
ख—इतः अध्यायसमाप्तिपर्यन्तं नास्ति

## ॥ अष्टमोऽध्यायः ॥

व्यासेन धृतराष्ट्रस्य शोकापनोदनम् ॥

वैशम्पायनः—

विदुरस्य तु तद्वाक्यं निशम्य कुरुसत्तमः ।
पुत्रशोकाभिसन्तप्तः पपात भुवि मूर्च्छितः ॥ १

तं तथा पतितं भूमौ निस्संज्ञं प्रेक्ष्य बान्धवाः ।
कृष्णद्वैपायनश्चैव क्षत्ता च विदुरस्तथा ॥ २
सञ्जयस्सुहृदश्चान्ये [1]तथा ये चास्य सम्मताः ॥ २॥
जलेन सुखशीतेन तालवृन्तैश्च भारत ।
पस्पृशुश्शनकैर्गात्रं वीजमानाश्च यत्नतः ॥ ३॥
अन्वासत चिरं कालं धृतराष्ट्रं तथाविधम् ॥ ४
अथ दीर्घस्य कालस्य लब्धसंज्ञो महीपतिः ।
विललाप चिरं कालं पुत्राधिभिरभिप्लुतः ॥ ५

धृतराष्ट्रः—

धिगस्तु खलु मानुष्यं मानुष्ये च परिग्रहम् ।
यतो मूलानि दुःखानि सम्भवन्ति पुनः पुनः ॥ ६

मित्रनाशेऽर्थनाशे च ज्ञातिसम्बन्धिनामपि ।
प्राप्यते सुमहद्दुःखं विषाग्निप्रतिमं विभो ॥ ७
येन दह्यन्ति गात्राणि येन प्रज्ञा विनश्यति ।

1. ख—द्वास्स्था ब—तत्स्था

येनाभिभूतः पुरुषो मरणं प्रतिपद्यते ॥ ८

तदिदं मरणं प्राप्तं मया भाग्यविपर्ययात् ।
तच्चैवाहं करिष्यामि अद्यैव द्विजसत्तम ॥ ९

वैशम्पायनः—

इत्युक्त्वा च महात्मानं पितरं ब्रह्मवित्तमम् ।
धृतराष्ट्रोऽभवन्मूढश्_ शोकं च परमं गतः ॥ १०

अभूच्च तूष्णीं राजाऽसौ ध्यायमानो महीपतिः ॥ १०॥

तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनः प्रभुः ।
पुत्रशोकाभिसन्तप्तं पुत्रं वचनमब्रवीत् ॥ ११॥

व्यासः—

धृतराष्ट्र महाबाहो शृणु वक्ष्यामि पुत्रक ॥ १२

श्रुतवानसि मेधावी धर्मार्थकुशलः प्रभो ।
न तेऽस्त्यविदितं किञ्चिद् वेदितव्यं परन्तप ॥ १३

अनित्यतां हि भूतानां विजानासि न संशयः ॥ १३॥

अध्रुवे जीवलोकेऽस्मिन् स्थाने वा शाश्वते सति ।
जीविते मरणान्ते च कस्माच्छोचसि पुत्रक ॥ १४॥

प्रत्यक्षस्तव राजेन्द्र वैरस्यास्य समुद्भवः ।
पुत्रं ते कारणं कृत्वा कालयोगेन निर्मितः ॥ १५॥

अवश्यं भवितव्ये च कुरूणां सङ्क्षये नृप ।
कस्माच्छोचसि तान् शूरान् गतान् परमिकां गतिम् ॥ १६॥

जानता च महाबाहो विदुरेण महात्मना ।
यतितं सर्वयत्नेन शमं प्रति नरेश्वर ॥ १७॥

न च दैवकृतो मार्गश् शक्यो भूतेन केनचित् ।
घटताऽपि चिरं कालं नियन्तुमिति मे मतिः ॥ १८॥
दैवतानां हि यत् कार्यं मया प्रत्यक्षतश्श्रुतम् ।
तत् तेऽहं सम्प्रवक्ष्यामि कथं स्थैर्यं भवेत् तव ॥ १९॥
पुराऽहं [1]स्वेच्छया यातस् सभामैन्द्रीं जितक्लमः ।
अपश्यं तत्र च सदा समवेतान् दिवौकसः ॥ २०॥
नारदप्रमुखांश्चापि सर्वान् देवर्षिसत्तमान् ॥ २१
तत्रापि च मया दृष्टा पृथिवी पृथिवीपते ।
कार्यार्थमुपसम्पन्ना देवतानां समीपतः ॥ २२
उपागम्य तदा धात्री देवानाह समागतान् ॥ २२॥

पृथिवी—

यत् कार्यं मम युष्माभिर् ब्रह्मणस्सदने तदा ।
प्रतिज्ञातं महाभागास् तच्छीघ्रं संविधीयताम् ॥ २३॥

व्यासः—

तस्यास्तद्वचनं श्रुत्वा विष्णुर्लोकनमस्कृतः ।
उवाच प्रहसन् वाक्यं प्रभुस्तां देवसंसदि ॥ २४॥

श्रीभगवान्—

धृतराष्ट्रस्य पुत्राणां यस्तु ज्येष्ठश्शतस्य वै ।

---

1. क-ख—परितो ब—त्वरितो

दुर्योधन इति ख्यातस् स ते कार्यं करिष्यति ॥ २५
तं च प्राप्य महीपालं [1]कृतकृत्या भविष्यसि ॥ २५॥

तस्यार्थे पृथिवीपालाः कुरुक्षेत्रं समागताः ।
अन्योन्यं घातयिष्यन्ति दृढैश्शस्त्रैः प्रहारिणः ॥ २६॥

ततस्ते भविता देवि भारस्य युधि नाशनम् ।
गच्छ शीघ्रं स्वकं स्थानं लोकान् धारय शोभने ॥ २७॥

व्यासः—

स एष ते सुतो राजन् कालस्संहारकारणात् ।
कलेरंशस्समुत्पन्नो गान्धार्या जठरे नृप ॥ २८॥

अमर्षी बलवाञ् शूरः क्रोधनो दुष्प्रसाधनः ।
दैवयोगात् समुत्पन्ना भ्रातरस्तस्य तादृशाः ॥ २९॥

शकुनिर्मातुलश्चैव कर्णश्च परमस्सखा ।
समुत्पन्ना विनाशार्थं पृथिव्यां सहिता नृपाः ॥ ३०॥
एतमर्थं महाबाहो नारदो वेद तत्वतः ॥ ३१

आत्मापराधात् पुत्रास्ते विनष्टाः पृथिवीपते ।
मा तान् शोचस्व राजेन्द्र न हि शोकेऽस्ति कारणम् ॥ ३२
न हि ते पाण्डवास्स्वल्पं अपराध्यन्ति ते नृप ।
पुत्रास्तव दुरात्मानो यैरियं घातिता मही ॥ ३३
नारदेन समाख्यातं पूर्वमेव न संशयः ।

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

युधिष्ठिरस्य समितौ [1]राजसूये निवेदितम् ॥　　३४
पाण्डवाः कौरवाश्चैव समासाद्य परस्परम् ।
न भविष्यन्ति राजेन्द्र यत् ते कृत्यं तदाचर ॥　　३५
[2]नारदस्य वचश्श्रुत्वा तथाऽकुर्वत पाण्डवाः ।
एतत् ते सर्वमाख्यातं देवगुह्यं सनातनम् ॥　　३६
कथं ते शोकनाशस्स्यात् प्राणेषु च दया प्रभो ।
स्नेहश्च पाण्डुपुत्रेषु ज्ञात्वा दैवकृतं विधिम् ॥　　३७
एष चार्थो महाराज पूर्वमेव मया श्रुतः ।
कथितो धर्मराजस्य राजसूये कुरूत्तम ॥　　३८
यतितं धर्मपुत्रेण मया गुह्ये निवेदिते ।
अविग्रहे कौरवाणां दैवं तु बलवत्तरम् ॥　　३९
अनतिक्रमणीयो हि विधी राजन् कथञ्चन ।
कृतान्तस्य हि भूतेन चरेण स्थावरेण च ॥　　४०
भवान् धर्मपरो यत्र बुद्धिश्रेष्ठश्च भारत ।
मुह्यते प्राणिनां ज्ञात्वा गतिमागतिमेव च ॥　　४१
त्वां तु शोकेन सन्तप्तं मुह्य[3]मानमचेतनम् ।
ज्ञात्वा युधिष्ठिरो राजा प्राणानपि परित्यजेत् ॥　　४२
कृपालुर्नित्यशो वीरस् तिर्यग्योनिगतेष्वपि ।

---

1. ख—अयं पादोऽनन्तरश्च न स्तः
2. अ-क—नास्तीदमर्धम्　　3. क-ख-घ—मानं मुहुर्मुहुः

स कथं त्वयि राजेन्द्र कृपां वै न करिष्यति ॥ ४३

मम चैव नियोगेन विधेश्चाप्यनिवर्तनात् ।
पाण्डवानां च कारुण्यात् प्राणान् धारय भारत ॥ ४४

एवं ते वर्तमानस्य लोके कीर्तिर्भविष्यति ।
धर्मश्च सुमहांस्तात तप्तस्य तपसश्चिरात् ॥ ४५

पुत्रशोकं समुत्पन्नं हुताशं ज्वलितं यथा ।
प्रज्ञाम्भसा महाराज निर्वापय सदा सता ॥ ४६

वैशम्पायनः—
एतच्छ्रुत्वा तु वचनं व्यासस्यामिततेजसः ।
मुहूर्तं समनुध्याय धृतराष्ट्रोऽभ्यभाषत ॥ ४७

महता शोकजालेन प्रणुन्नोऽस्मि द्विजोत्तम ।
नात्मानमवबुध्यामि मुह्यमानो मुहुर्मुहुः ॥ ४८

इदं तु वचनं श्रुत्वा तव दैवनियोगजम् ।
धारयिष्याम्यहं प्राणान् यतिष्ये च न शोचितुम् ॥ ४९

एतच्छ्रुत्वा तु वचनं व्यासस्सत्यवतीसुतः ।
धृतराष्ट्रस्य राजेन्द्र तत्रैवान्तरधीयत ॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
॥ ८० ॥ जलप्रदानपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये ५० श्लोकाः]

## ॥ नवमोऽध्यायः ॥

धृतराष्ट्रेण गान्धारीप्रभृतिभिः स्त्रीभिस्सह मृतजनावलोकनाय रणाङ्कणं प्रति प्रयाणम् ॥

जनमेजयः—

गते व्यासे तु धर्मात्मा धृतराष्ट्रो महीपतिः ।
किमचेष्टत विप्रर्षे तन्मे व्याख्यातुमर्हसि ॥ १

वैशम्पायनः—

एतच्छ्रुत्वा नरश्रेष्ठ चिरं ध्यात्वा त्वचेतनः ।
सञ्जयं योजयेत्युक्त्वा विदुरं प्रत्यभाषत ॥ २

धृतराष्ट्रः—

क्षिप्रमानय गान्धारीं सर्वाश्च भरतस्त्रियः ।
कुन्तीं चैव तथा क्षत्तस् समानय ममान्तिकम् ॥ ३

वैशम्पायनः—

एवमुक्त्वा तु धर्मात्मा विदुरं धर्मवित्तमम् ।
शोकविप्रहतज्ञानो यानमेवान्वरोहत ॥ ४

गान्धारी चैव शोकार्ता भर्तुर्वचनचोदिता ।
सह कुन्त्या यतो राजा सह स्त्रीभिस्समाद्रवत् ॥ ५

तास्समासाद्य राजानं भृशं शोकसमन्विताः ।
आमन्त्र्यान्योन्यमायस्ता भृशं वै चुक्रुशुस्तथा ॥ ६

तास्समाश्वासयत् क्षत्ता ताभ्यश्चार्ततरस्स्वयम् ।

अश्रुकण्ठीस्समारोप्य ततस्ता निर्ययौ पुरात् ॥ ७

ततः प्रणादस्सञ्जज्ञे सर्वेषु कुरुवेश्मसु ।
आकुमारं पुरं तच्चाप्यभवच्छोककर्शितम् ॥ ८

अदृष्टपूर्वा या नार्यः पुरा देवगणैरपि ।
हतेश्वरास्ता ददृशुस् समवेताः पृथग्जनाः ॥ ९

प्रकीर्य केशानसितान् भूषणान्यवमुच्य च ।
एकवस्त्रधरा नार्यः परिपेतुरनाथवत् ॥ १०

श्वेतपर्वतरूपेभ्यो गृहेभ्यस्ता निराक्रमन् ।
गुहाभ्य इव शैलानां पृषत्यो हतयूथपाः ॥ ११

तान्युदीर्णानि नारीणां तदा बृन्दान्यनेकशः ।
शोकार्तान्यरुदन् घोरं किशोराणामिवाङ्गनाः ॥ १२

प्रगृह्य बाहून् क्रोशन्त्यः पुत्रान् भ्रातॄन् पितॄनपि ।
दर्शयन्ति हता हि स्म युगान्ते लोकसङ्क्षयम् ॥ १३

विलपन्त्यो नदन्त्यश्च धावमाना इतस्ततः ।
शोकेन विहतज्ञानाः कर्तव्यं न प्रजज्ञिरे ॥ १४

व्रीळां जग्मुः पुरा यास्स्म सखीनामपि योषितः ।
निर्लज्जास्तास्तु राजेन्द्र श्वश्रूणामपि सन्निधौ ॥ १५

परस्परं सुसूक्ष्मेषु शोकेष्वाश्वासयन्ति याः ।
ताश्शोकविह्वला राजन् नावैक्षन्त परस्परम् ॥ १६

ताभिः परिवृतो राजा रुदन्तीभिस्सहस्रशः ।
निर्ययौ नगरात् तूर्णं दीनस्त्वायोधनं प्रति ॥ १७

शिल्पिनो वणिजो वैश्यास् सर्वकर्मोपजीविनः ।
ते पार्थिवं पुरस्कृत्य निर्ययुर्नगराद्बहिः ॥ १८

तेषां विक्रोशमानानाम् आर्तानां कुरुसङ्क्षये ।
प्रादुरासीन्महाञ् शब्दो व्यथयन् भुवनान्युत ॥ १९

युगान्तकाले सम्प्राप्ते भूतानां दह्यतामिव ।
अभावस्योदयं प्राप्त इति भूतानि मेनिरे ॥ २०

भृशमुद्विग्नमनसस् ते पौरा जनसङ्क्षये ।
प्राक्रोशन्त महाराजं स्वनुरक्तास्तथा भृशम् ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि नवमोऽध्यायः ॥ ९ ॥
॥ ८० ॥ जलप्रदानपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये २१ श्लोकाः]

## ॥ दशमोऽध्यायः ॥



मृतबन्धुदिदृक्षया समरभूमिं गच्छतो धृतराष्ट्रस्य मध्येमार्गं कृपकृतवर्मद्रौणिभिः समागमः ॥ १ ॥ तेषां त्रयाणां धृतराष्ट्राश्वासनपूर्वकं स्वाभिमतदेशगमनम् ॥

---

वैशम्पायनः—

क्रोशमात्रं ततो गत्वा ददृशुस्तान् महारथान् ।
शारद्वतं कृपं द्रौणिं कृतवर्माणमेव च ॥ १

ते तु दृष्ट्वैव राजानं प्रज्ञाचक्षुषमीश्वरम् ।
अश्रुकण्ठा विनिश्श्वस्य रुदन्त इदमब्रुवन् ॥ २

कृपादयः—

पुत्रस्तव महाराज कृत्वा कर्म सुदुष्करम् ।
गतस्सानुचरो राजा शक्रलोकं महारथः ॥ ३

दुर्योधनबलान्मुक्ता वयमेव त्रयो रथाः ।
सर्वमन्यत् परिक्षीणं सैन्यं ते भरतर्षभ ॥ ४

वैशम्पायनः—

इत्येवमुक्त्वा राजानं कृपश्शारद्वतस्तदा ।
गान्धारीं पुत्रशोकार्ताम् इदं वचनमब्रवीत् ॥ ५

कृपः—

[1]अभीता युध्यमानास्ते घ्नन्तश्शत्रुगणान् बहून् ।

---

1. क-ख—अतीता युध्यमानास्ते घ्नन्तः शत्रुगणान्बहून् । [पाठान्तरम्]
अ—हते ता × शत्रुनिबर्हणाः

वीरकर्माणि कुर्वाणाः पुत्रास्ते निधनं गताः ॥ ६

ध्रुवं सम्प्राप्य लोकांस्ते निर्मलाञ् शस्त्रनिर्जितान् ।
भास्वरं देहमास्थाय विहरन्त्यमरा इव ॥ ७

सर्वे ह्यभिमुखा राज्ञि युध्यमाना हता युधि ॥ ७॥

न हि कश्चिद्धि शूराणां युध्यमानः पराङ्मुखः ।
शस्त्रेण निधनं प्राप्तो न हि कश्चित् कृताञ्जलिः ॥ ८॥

एतां तां क्षत्रियस्याहुः पुराणाः परमां गतिम् ।
शस्त्रेण निधनं सङ्ख्ये तान् न शोचितुमर्हसि ॥ ९॥

न चापि शत्रवस्तेषां मुच्यन्ते राज्ञि पाण्डवाः ।
शृणु यत् कृतमस्माभिर् अश्वत्थामपुरोगमैः ॥ १०॥

अधर्मेण हतं श्रुत्वा भीमसेनेन ते सुतम् ।
सुप्तं शिबिरमाविश्य पाण्डूनां कदनं कृतम् ॥ ११॥

पाञ्चाला निहतास्सर्वे धृष्टद्युम्नपुरोगमाः ।
द्रुपदस्यात्मजाश्चैव द्रौपदेयाश्च पातिताः ॥ १२॥

तथा विशसनं कृत्वा पुत्रशत्रुगणस्य ते ।
प्राद्रवाम न हि स्थातुं रणे शक्ष्यामहे त्रयः ॥ १३॥

ते हि शूरा महेष्वासाः क्षिप्रमेष्यन्ति पाण्डवाः ।
अमर्षवशमापन्ना वैरं प्रतिचिकीर्षवः ॥ १४॥

ते हतानात्मजान् श्रुत्वा प्रमत्तान् पुरुषर्षभाः ।
अन्विष्यन्तः पदं शूराः क्षिप्रमेष्यन्ति पाण्डवाः ॥ १५॥

पाण्डूनां किल्बिषं कृत्वा संस्थातुं नोत्सहामहे ।
अनुजानीहि [1]मां राज्ञि मा च शोके मनः कृथाः ॥ १६॥

राजंस्त्वमनुजानीहि धैर्यमातिष्ठ चोत्तमम् ।
दिष्टान्तं पश्य चापि त्वं क्षत्रधर्मं च केवलम् ॥ १७॥

वैशम्पायनः—

इत्येवमुक्त्वा राजानं कृत्वा चापि प्रदक्षिणम् ।
कृपश्च कृतवर्मा च द्रोणपुत्रश्च भारत ॥ १८॥

अन्वीक्षमाणं राजानं धृतराष्ट्रं मनीषिणम् ।
गङ्गामनु महात्मानस् तूर्णमश्वानचोदयन् ॥ १९॥

अपक्रम्य च ते सर्वे त्रयो राजन् महारथाः ।
आमन्त्र्यान्योन्यमुद्विग्नास् त्रिधा ते प्रययुस्ततः ॥ २०॥

जगाम हास्तिनपुरं कृपश्शारद्वतस्ततः ।
स्वमेव राष्ट्रं हार्दिक्यो द्रौणिर्व्यासाश्रमं ययौ ॥ २१॥

एवं ते प्रययुर्वीरा वीक्षमाणाः परस्परम् ।
भयार्ताः पाण्डुपुत्राणाम् आगस्कृत्वा महात्मनाम् ॥ २२॥

---

1. ख—नो

समेत्य वीरं राजानं तदा त्वनुदिते रवौ ।
विप्रजग्मुर्महाराज यथेष्टकमरिन्दमाः ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि दशमोऽध्यायः ॥ १० ॥
॥ ८० ॥ जलप्रदानपर्वणि दशमोऽध्यायः ॥ १० ॥
[ अस्मिन्नध्याये २३॥ श्लोकाः ]

---

## ॥ एकादशोऽध्यायः ॥

युधिष्ठिरेण कृष्णादिभिस्सह धृतराष्ट्रसमीपमेत्याभिवादनम् ॥ धृतराष्ट्रेण युधिष्ठिरं मृदुलमालिङ्ग्य पश्चाद्भावज्ञेन कृष्णेन पुरतः स्थापितलोहभीमस्य दृढालिङ्गनेन भञ्जनम् ॥

---

वैशम्पायनः—

हतेषु सर्वसैन्येषु पाण्डुपुत्रो युधिष्ठिरः ।
शुश्रुवे पितरं वृद्धं निर्यान्तं गजसाह्वयात् ॥ १

सोऽभ्ययात् पुत्रशोकार्तं पुत्रशोकपरिप्लुतः ।
शोचमानो महाराज भ्रातृभिस्सहितस्ततः ॥ २

अन्वीयमानो वीरेण दाशार्हेण महात्मना ।
युयुधानेन च तथा तथैव च युयुत्सुना ॥ ३

तमन्वयात् सुदुःखार्ता द्रौपदी शोककर्शिता ।
सह पाञ्चालयोषिद्भिर् यास्तत्रासन् समागताः ॥ ४

सङ्ग्राममनु वृन्दानि स्त्रीणां भरतसत्तम ।
कुररीणामिवार्तानां क्रोशन्तीनां ददर्श ह ॥　५

ताभिः परिवृतो राजा रुदन्तीभिस्समन्ततः ।
ऊर्ध्वबाहुभिरार्ताभिर् ब्रुवन्तीभिः प्रियाप्रिये ॥　६

स्त्रियः—

[1]धर्मस्ते क नु धर्मज्ञ क नु साऽद्यानृशंसता ।
यथाऽवधीः पितॄन् भ्रातॄन् गुरून् पुत्रान् सखीनपि ॥　७

घातयित्वा कथं द्रोणं भीष्मं चापि पितामहम् ।
मनस्तेऽभून्महाराज हत्वा चापि जयद्रथम् ॥　८

किं नु राज्येन ते कार्यं पितॄन् भ्रातॄनपश्यतः ।
अभिमन्युं च दुर्धर्षं द्रौपदेयांश्च भारत ॥　९

वैशम्पायनः—

अतीत्य ता महाराज क्रोशन्ती कुररीरिव ।
ववन्दे पितरं ज्येष्ठं धर्मराजो युधिष्ठिरः ॥　१०

ततोऽभिवाद्य पितरं क्रमेणामित्रकर्शनाः ।
न्यवेदयन्त नामानि पाण्डवास्तेऽपि सर्वशः ॥　११

तमात्मजान्तकरणं पिता पुत्रवधार्दितः ।
अप्रीयमाणश्शोकार्तं पाण्डवं परिषस्वजे ॥　१२

धर्मराजं परिष्वज्य सान्त्वयित्वा च भारत ।

---

1. क-ख-घ—क नु धर्मज्ञता राज्ञः कनु

दुष्टात्मा भीममन्वैच्छद् दिधक्षुरिव पावकः ॥ १३

स कोपपावकस्तस्य शोकवायुसमीरितः ।
भीमसेनमयं दावं दिधक्षुरिव दृश्यते ॥ १४

तस्य सङ्कल्पमाज्ञाय भीमं प्रत्यशुभं हरिः ।
भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसम् ॥ १५

प्रागेव तु महाबाहुर् बुध्वा तस्येङ्गितं हरिः ।
संविधानं महाप्राज्ञस् तत्र चक्रे जनार्दनः ॥ १६

उपगृह्यैव बाहुभ्यां राजा स्तम्भमयोमयम् ।
बभञ्ज बलवान् राजा मन्यमानो वृकोदरम् ॥ १७

नागायुतसमप्राणस् स राजा भीममायसम् ।
भङ्क्त्वा विमथितोरस्कस् सुस्राव रुधिरं मुखात् ॥ १८

ततः पपात मेदिन्यां तथैव रुधिरोक्षितः ।
प्रपुष्पिताग्रशिखरः पारिजात इव द्रुमः ॥ १९

पर्यगृह्णीत तं विद्वान् सूतो गावल्गणिस्तदा ।
मैवमित्यब्रवीच्चैनं शमयन् सान्त्वयन्नपि ॥ २०

हतो भीम इति ज्ञात्वा गतमन्युर्महामनाः ।
हा हा भीमेति चुक्रोश भूयश्शोकसमन्वितः ॥ २१

स विदित्वा गतक्रोधं भीमसेनवधार्दितम् ।
वासुदेवो वरः पुंसाम् इदं वचनमब्रवीत् ॥ २२

श्रीभगवान्—

मा शुचो धृतराष्ट्र त्वं नैव भीमस्त्वया हतः ।
आयसी प्रतिमा ह्येषा त्वया राजन् निपातिता ॥ २३

त्वां क्रोधवशमापन्नं विदित्वा भरतर्षभ ।
मयाऽपकृष्टः कौन्तेयो मृत्योर्दंष्ट्रान्तरं गतः ॥ २४

न हि ते राजशार्दूल बले तुल्योऽस्ति कश्चन ।
यस्सहेत महाबाहो तव निग्रहणं नरः ॥ २५

यथा हि नान्तकं प्राप्य जीवन् मुच्येत कश्चन ।
एवं बाह्वन्तरं प्राप्य न जीवेदिह कश्चन ॥ २६

तस्मात् पुत्रेण ते या सा प्रतिमा कारिताऽऽयसी ।
भीमस्य सेयं कौरव्य तवैवोपहृता मया ॥ २७

पुत्रशोकाभिसन्तापाद् धर्मादपहृतं मनः ।
तव राजेन्द्र तेन त्वं भीमसेनं जिघांससि ॥ २८

न च ते तत् क्षमं राजन् हन्यास्त्वं यद्वृकोदरम् ।
न हि पुत्रा महाराज जीवेयुस्ते कथञ्चन॥ २९

तस्माद्यत् कृतमस्माभिर् मन्यमानैः क्षमं विभो ।
अनुमन्यस्व राजेन्द्र मा च शोके मनः कृथाः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि एकादशोऽध्यायः ॥ ११ ॥
॥ ८० ॥ जलप्रदानपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये ३० श्लोकाः]

## ॥ द्वादशोऽध्यायः ॥



कृष्णवाक्याद्गतमन्युना धृतराष्ट्रेण भीमादीनामालिङ्गनम् ॥

वैशम्पायनः—

तत एनमुपातिष्ठञ् शौचार्थं परिचारकाः ।
कृतशौचं पुनश्चैनं प्रोवाच मधुसूदनः ॥ १

श्रीभगवान्—

राजन्नधीता वेदास्ते शास्त्राणि विविधानि च ।
श्रुतानि च पुराणानि राजधर्माश्च केवलाः ॥ २

एवं विद्वान् महाप्राज्ञस् समर्थस्सन् बलाबले ।
आत्मापराधे कस्मात् त्वं कुरुषे रोषमीदृशम् ॥ ३

उक्तवांस्ते तथैवाहं भीष्मद्रोणौ च भारत ।
विदुरस्सञ्जयश्चैव त्वं तु राजन्नधः कृथाः ॥ ४

स वार्यमाणो नास्माकम् अकार्षीर्वचनं तदा ।
पाण्डवानधिकाञ् जानन् बले शौर्ये च भारत ॥ ५

राजा हि यस्स्थिरः प्राज्ञस् स्वयं दोषानवेक्षते ।
देशकालविभागं च परं श्रेयस्स विन्दति ॥ ६

उच्यमानं न यश्श्रेयो गृह्णीते वै यथातथम् ।
आपदं समनुप्राप्य सोऽभ्येति विलयं किल ॥ ७

अतोऽन्यवृत्तमात्मानं समवेक्षस्व भारत ।

राजंस्त्वमविधेयात्मा दुर्योधनवशे स्थितः ॥ ८

आत्मापराधादापन्नस् तत् किं भीमजिघांसया ।
तस्मात् संयच्छ कोपं त्वं स्वमनुस्मृत्य दुष्कृतम् ॥ ९

यस्तु तां स्पर्धया क्षुद्रः पाञ्चालीमानयत् सभाम् ।
स हतो भीमसेनेन वैरं प्रतिचिकीर्षता ॥ १०

आत्मनोऽतिक्रमं पश्य पुत्रस्य च दुरात्मनः ।
यदनागसि पाण्डूनां परित्यागः परन्तप ॥ ११

वैशम्पायनः—

एवमुक्तस्स कृष्णेन नृपस्सत्यं जनाधिप ।
उवाच देवकीपुत्रं धृतराष्ट्रो महीपतिः ॥ १२

धृतराष्ट्रः—

एवमेतन्महाभाग यथा वदसि माधव ।
पुत्रस्नेहस्तु धर्मात्मन् धर्मान्मां समचालयत् ॥ १३

दिष्ट्या स पुरुषव्याघ्रो बलवान् सत्यविक्रमः ।
त्वद्गुप्तो नागमत् कृष्ण भीमो बाह्वन्तरं मम ॥ १४

इदानीं त्वहमेकाग्रो गतमन्युर्गतज्वरः ।
मध्यमं पाण्डवं वीरं स्प्रष्टुमिच्छामि केशव ॥ १५

हतेषु पार्थिवेष्वेषु पुत्रेषु च हतेषु च ।
पाण्डुपुत्रेषु मे धर्मः प्रीतिश्चाप्यवतिष्ठते ॥ १६

वैशम्पायनः—

ततस्स भीमं च धनञ्जयं च
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
पस्पर्श गात्रैः प्ररुदन् स्वगात्रम्
आश्वास्य कल्याणमुवाच चैनान् ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ ८० ॥ जलप्रदानपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये १७ श्लोकाः]

## ॥ त्रयोदशोऽध्यायः ॥

कृष्णयुधिष्ठिरादिभिर्गान्धारीसमीपगमनम् ॥ १ ॥ गान्धारीं युधिष्ठिरं शप्तुकामां विज्ञाय पूर्वमेवागतेन व्यासेन गान्धार्याः कोपापनोदनम् ॥

वैशम्पायनः—

धृतराष्ट्राभ्यनुज्ञातास् ततस्ते कुरुपुङ्गवाः ।
अभ्ययुर्भ्रातरस्सर्वे गान्धारीं सहकेशवाः ॥ १

ततो ज्ञात्वा हतामित्रं धर्मराजं युधिष्ठिरम् ।
गान्धारी पुत्रशोकार्ता शप्तुमैच्छदनिन्दिता ॥ २

तस्याः पापमभिप्रायं विदित्वा पाण्डवान् प्रति ।
ऋषिर्गन्धवतीपुत्रः प्रागेव समपद्यत ॥ ३

स गङ्गायामुपस्पृश्य ब्रह्मर्षिः प्रयतश्शुचिः ।
तं देशमुपसम्पेदे पाराशर्यो मनोजवः ॥ ४

दिव्येन चक्षुषा ज्ञात्वा मनसाऽनुद्धतेन च ।
सर्वं प्राणभृतां भावं सततं समबुध्यत ॥ ५

स स्नुषामब्रवीत् काले कल्याणानि महातपाः ।
शापकालमवाक्षिप्य शमकालमुदीरयन् ॥ ६

व्यासः—

न कोपः पाण्डवे कार्यो गान्धारि शममाप्नुहि ।
रजो निगृह्यतां चैव शृणु चेदं वचो मम ॥ ७

पुरोक्ता युद्धकाले त्वं पुत्रेण जयमिच्छता ।
जयमाशास्व मे मातर् युध्यमानस्य शत्रुभिः ॥ ८

सा तथा याच्यमाना त्वं युद्धकाले जयैषिणा ।
उक्तवत्यसि कल्याणि यतो धर्मस्ततो जयः ॥ ९

वाक्ये व्यतीते मा क्रोधे मनः कुरु यशस्विनि ।
[1]स्मरामि भाषमाणां हि त्वामहं सत्यवादिनीम् ॥ १०

विग्रहे तुमुले राज्ञां गत्वा परमसंशयम् ।
जितं पाण्डुसुतैर्युद्धे नूनं धर्मस्ततोऽधिकः ॥ ११

क्षमाशीला पुरा भूत्वा साऽद्य न क्षमसे कथम् ।

---

1. ख—अर्धषट्कं नास्ति

अधर्मं जहि धर्मज्ञे यतो धर्मस्ततो जयः ॥ १२

सा त्वं धर्मं परित्यज्य वाचा चोक्त्वा मनस्विनि ।
कोपं संयच्छ गान्धारि पाण्डवेषु सुतेषु ते ॥ १३

गान्धारी—

भगवन् नाभ्यसूयामि नैतानिच्छामि नश्यतः ।
पुत्रशोकेन तु बलान्मनो विह्वलतीव मे ॥ १४

यथैव कुन्त्या कौन्तेया रक्षितव्यास्तथा मया ।
[1]तथैव धृतराष्ट्रेण रक्षितव्या मया यथा ॥ १५

दुश्शासनापराधेन शकुनेस्सौबलस्य च ।
कर्णदुर्योधनाभ्यां च वृत्तोऽयं कुरुसङ्क्षयः ॥ १६

नापराध्नोति बीभत्सुर् न च भीमो वृकोदरः ।
नकुलस्सहदेवश्च नैव जातु युधिष्ठिरः ॥ १७

युध्यमाना हि कौरव्याः कृन्तमानाः परस्परम् ।
निहतास्तैर्हताश्चान्ये तत्र नास्त्यप्रियं मम ॥ १८

यत् तु कर्माकरोद्भीमो वासुदेवस्य पश्यतः ।
दुर्योधनं समाहूय गदायुद्धे महामनाः ॥ १९

शिक्षयाऽभ्यधिकं ज्ञात्वा चरन्तं बहुधा रणे ।
अधो नाभेः प्रहृतवांस् तन्मे कोपयतीव हि ॥ २०

1. अ—नास्तीदमर्धम्

कथं हि धर्मं धर्मज्ञास् समुद्दिष्टं महात्मभिः ।
त्यजेयुराहवे शूराः प्राणहेतोः कथञ्चन ॥　　२१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
॥ ८० ॥ जलप्रदानपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[अस्मिन्नध्याये २१ श्लोकाः ]

---

## ॥ चतुर्दशोऽध्यायः ॥



भीमगान्धारीसंवादः ॥

---

वैशम्पायनः—

तच्छ्रुत्वा वचनं तस्या भीमसेनोऽथ भीतवत् ।
गान्धारीं प्रत्युवाचेदं वचस्सानुनयं तदा ॥　　१

भीमः—

अधर्मो यदि वा धर्मस् त्रासात् तत्र मया कृतः ।
आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि ॥　　२

न हि युद्धेन पुत्रस्ते धर्मेण सुमहाबलः ।
शक्यः केनचिदुद्धर्तुं तस्माद्विषममाचरम् ॥　　३

अधर्मेण जितः पूर्वं तेनापि च युधिष्ठिरः ।
निकृताश्च सदैव स्म ततो विषममाचरम् ॥　　४

सैन्यस्यैकोऽवशिष्टोऽयं गदायुद्धे च वीर्यवान् ।
[1]न त्यक्ष्यति हृतं राज्यम् इति चैव कृतं मया ॥ ५
[2]मां हत्वा न हरेद्राज्यम् इति चैतत् कृतं मया ॥ ५॥

एकपत्नीं च पाञ्चालीम् एकवस्त्रां रजस्वलाम् ।
भवत्या विदितं सर्वम् उक्तवान् यत् सुतस्तव ॥ ६॥

सुयोधनमसंहृत्य न शक्या भूस्ससागरा ।
केवलं भोक्तुमस्माभिर् इति चैतत् कृतं मया ॥ ७॥

[3]तच्चाप्यप्रियमस्माकं पुत्रस्ते समुदाचरत् ।
द्रौपद्या यत् सभामध्ये सव्यमूरुमदर्शयत् ॥ ८॥

तत्रैव वध्यस्सोऽस्माकं दुराचारोऽम्ब ते सुतः ।
[4]धर्मराजाज्ञया त्वेवं स्थितास्स्म समये पुरा ॥ ९॥

वैरं सन्धुक्षितं राज्ञि पुत्रेण तव यन्महत् ।
क्लेशिताश्च वनेऽत्यर्थं तस्मादेतत् कृतं मया ॥ १०॥

वैरस्यास्मि गतः पारं हत्वा दुर्योधनं रणे ।

---

1. अ—नास्तीदमर्धम् 2. ख—नास्तीदमर्धम्
3. अ—अर्धत्रयं नास्ति
4. अ-क—वैरस्यास्मि गतः पारं हत्वा दुर्योधनं रणे ।
राज्यं युधिष्ठिरे प्राप्ते वयं विगतमन्यवः ॥
गान्धारी—
न तस्यैवं वधस्तात यः प्रशंसति ते सुतः ।
[ अधिकः पाठः ]

[1]राज्यं युधिष्ठिरे प्राप्ते वयं विगतमन्यवः ॥ ११॥

गान्धारी—

न तस्यैवं वधस्तात यं प्रशंससि मे सुतम् ।
कृतवांश्चापि तत् सर्वं यदिदं भाषसे मयि ॥ १२॥

हताश्वे नकुले यत् तद् वृषसेनेन भारत ।
अपिबश्शोणितं सङ्ख्ये दुश्शासनशरीरजम् ॥ १३॥

सद्भिर्विगर्हितं घोरम् अनार्यजनसेवितम् ।
क्रूरं कर्माकरोः कस्मात् तदयुक्तं वृकोदर ॥ १४॥

अन्यस्यापि न पातव्यं रुधिरं किं पुनस्स्वकम् ।
यथैवात्मा तथा भ्राता न विशेषोऽस्ति कश्चन ॥ १५॥

भीमः—

हताश्वं नकुलं दृष्ट्वा वृषसेनेन संयुगे ।
शत्रूणां तु प्रहृष्टानां त्रासस्सञ्जनितो मया ॥ १६॥

स प्रतिज्ञामकरवं पिबाम्यसृगरेरिति ।
रुधिरं नातिचक्राम दन्तोष्ठान्मेऽम्ब मा शुचः ॥ १७॥

वैवस्वतो हि तद्वेद यथावत् कुलनन्दिनि ।
मा कृथा हृदि तन्मातर् न तत् पीतं मयाऽनघे ॥ १८॥

केशपक्षपरामर्शे द्रौपद्या द्यूतकारिते ।

---

1. ख—धर्मराजस्त्वया देवि स्थापितस्समये पुरा । [अधिकः पाठः]

क्रोधाद्यदन्नवं चाहं तच्च मे [1]क्षन्तुमर्हसि ॥ १९॥

क्षत्रधर्मच्युतो राज्ञि भवेयं शाश्वतीस्समाः ।
प्रतिज्ञां तामनिस्तीर्य ततस्तत् कृतवानहम् ॥ २०॥

अनिगृह्य पुरा पुत्रान् अस्मास्वनपकारिषु ।
न मामर्हसि कल्याणि दोषेण परिशङ्कितुम् ॥ २१॥

गान्धारी—

वृद्धस्यास्य शतं पुत्रान् निघ्नंस्त्वमपराजितः ।
कस्मान्नाशेषयः कश्चिद् येनाल्पमपराधितम् ॥ २२॥

सन्तानमावयोस्तात वृद्धयोर्हृतराज्ययोः ।
नाशेषयः कथं यष्टिम् एकां वृद्धयुगस्य वै ॥ २३॥

शेषे ह्यवस्थिते तात पुत्राणामल्पकेऽपि च ।
न मे दुःखं भवेदद्य यदि त्वं धर्ममाचरेः ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ ८० ॥ जलप्रदानपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[अस्मिन्नध्याये २४॥ श्लोकाः]

---

1, ख—हृदि वर्तते

## ॥ पञ्चदशोऽध्यायः ॥

युधिष्ठिरादिभिः गान्धारीकुन्त्यादेरभिवादनम् ॥ १ ॥ सकुन्त्या गान्धार्या द्रौपदीसमाश्वासनम् ॥ २ ॥

वैशम्पायनः—

तमेवमुक्त्वा गान्धारी युधिष्ठिरमपृच्छत ।
क स राजेति सक्रोधा पुत्रपौत्रवधार्दिता ॥ १

तामभ्यगच्छत् कौन्तेयो वेपमानः कृताञ्जलिः ।
युधिष्ठिरस्तु गान्धारीं मधुरं वाक्यमब्रवीत् ॥ २

युधिष्ठिरः—

[1]पुत्रहन्ता नृशंसोऽहं तव देवि युधिष्ठिरः ।
शापार्हः पृथिवीनाशे हेतुभूतश्शपस्व माम् ॥ ३

न हि मे जीवितेनार्थो न राज्येन सुखेन वा ।
तादृशान् सुहृदो हत्वा [2]सुमूढस्य सुतद्रुहः ॥ ४

वैशम्पायनः—

तमेवंवादिनं भीतं सन्निकर्षागतं तदा ।
नोवाच किञ्चिद् गान्धारी निश्श्वासपरमा नृप ॥ ५

तस्यावनतदेहस्य पादयोर्निपतिष्यतः ।

1. ख—अर्धद्वयं नास्ति
2. ख—प्रमूढस्य सुहृद्द्रुहः

युधिष्ठिरस्य नृपतेर् धर्मज्ञा धर्मदर्शिनी ॥ ६

अङ्गुल्यग्राणि ददृशे देवी पट्टान्तरेण सा ।

ततस्स कुनखी भूतो दर्शनीयनखो नृपः ॥ ७

तं दृष्ट्वाऽथार्जुनोऽगच्छद् वासुदेवस्य पृष्ठतः ॥ ७॥

एवं सङ्क्लेष्टमानांस्तान् इतश्चेतश्च भारत ।

गान्धारी विगतक्रोधा सान्त्वयामास मातृवत् ॥ ८॥

ते पाण्डवास्त्वनुज्ञाता मातरं वीतमत्सराः ।

अभ्यगच्छन्त सहिताः पृथां पृथुलवक्षसः ॥ ९॥

चिरस्य दृष्ट्वा पुत्रांस्तान् पुत्राधिभिरभिप्लुता ।

बाष्पमाहारयामास वस्त्रेणावृत्य वै मुखम् ॥ १०॥

ततो बाष्पं समुत्सृज्य सह पुत्रैस्तथा पृथा ।

अपश्यदेनाञ्शस्त्रौघैर् बहुधा परिविक्षतान् ॥ ११॥

सा तानेकैकशः पुत्रान् संस्पृशन्ती पुनः पुनः ।

अन्वशोचत दुःखार्ता द्रौपदीं निहतात्मजाम् ॥ १२॥

रुदन्तीमथ पाञ्चालीं ददर्श पतितां भुवि ॥ १३

पाञ्चाली—

आर्ये पौत्रा हतास्सर्वे सौभद्रसहिता गताः ।

न त्वां तेऽद्याभिगच्छन्ति [1]चिरदृष्टामनिन्दिते ॥ १४

किं नु राज्येन मे कार्यं विहीनायास्सुतैर्वरैः ॥ १४॥

---

1. ख-ब—चिरं दृष्टा तपस्विनीम

वैशम्पायनः—

तां समाश्वासयामास पृथा पृथुललोचनाम् ।
उत्थाप्याङ्केन रुदती रुदतीं शोकलालसाम् ॥ १५॥

तयैव सहिता तत्र पुत्रैरनुगता पृथा ।
अभ्यगच्छत गान्धारीम् आर्तामार्तस्वरा स्वयम् ॥ १६॥

तामुवाचाथ गान्धारी सह कुन्त्या यशस्विनीम् ॥ १७

मैवं पुत्रीति शोकार्ता पश्य मामपि दुःखिताम् ।
मन्ये लोकविनाशोऽयं कालपर्यायचोदितः ॥ १८

अवश्यभावी सम्प्राप्तस् स्वभावाद्रोमहर्षणः ॥ १८॥

इदं तु समनुप्राप्तं विदुरस्य वचो महत् ।
असिद्धानुनये कृष्णे यदुवाच महाद्युतिः ॥ १९॥

अस्मिन्नपरिहार्येऽर्थे व्यतीते च विशेषतः ।
मा शुचो न हि शोच्यास्ते सङ्ग्रामे निधनं गताः ॥ २०॥

यथैव त्वं तथैवाहं को मामाश्वासयिष्यति ।
ममैव चापराधेन कुलमेतद्विनाशितम् ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
॥ ८० ॥ जलप्रदानपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये २१॥ श्लोकाः]
[जलप्रदानपर्व समाप्तम्]

## ॥ षोडशोऽध्यायः ॥

(स्त्रीपर्व)

गान्धार्या व्यासप्रसादलब्धदिव्यचक्षुषा रणाङ्गणदर्शनम् ॥ १ ॥ धृतराष्ट्रयुधिष्ठिरादीनां स्त्रीभिः सह रणभूमिप्रवेशः ॥ २ ॥ स्त्रीणां विलापः ॥ ३ ॥ गान्धार्या कृष्णाय विलपत्स्नुषादिप्रदर्शनम् ॥ ४ ॥

वैशम्पायनः—

एवमुक्त्वा तु गान्धारी कुरूणामवकर्तनम् ।
अपश्यत् तत्र तिष्ठन्ती [1]सर्वं दिव्येन चक्षुषा ॥ १

[2]गान्धारी च महाभागा समानव्रतचारिणी ।
उग्रेण तपसा युक्ता सततं सत्यवादिनी ॥ २

वरदानेन कृष्णस्य महर्षेः पुण्यकर्मणः ।
दिव्यज्ञानबलोपेता विविधं पर्यदेवयत् ॥ ३

ददर्श सा बुद्धिमती दूरादेव यथाऽन्तिके ।
रणाजिरं तद्वीराणाम् अद्भुतं रोमहर्षणम् ॥ ४

अस्थिकेशपरिस्तीर्णं रुधिरौघपरिप्लुतम् ।
शरीरैर्बहुसाहस्रैर् विनिकीर्णं समन्ततः ॥ ५

1. अ-ब—सर्वं तत्र यथास्थितम्
2. क-ख—पतिव्रता

यूनां गजानामश्वानाम् आवृतं रुधिराशनैः ।
शरीरैरशिरस्कैश्च विदेहैश्च शिरोगणैः ॥ ६

गजाश्वनरवीराणां निस्सत्त्वैरभिसंवृतम् ।
सृगालबलगोमायुकङ्ककाकनिषेवितम् ॥ ७

मोदनं पुरुषादानां रक्षसां कुलसङ्कुलम् ।
अशिवाभिश्शिवाभिश्च सेवितं गृध्रनादितम् ॥ ८

ततो व्यासाभ्यनुज्ञातो धृतराष्ट्रो महीपतिः ।
पाण्डुपुत्राश्च ते सर्वे युधिष्ठिरपुरोगमाः ॥ ९

वासुदेवं पुरस्कृत्य हतबन्धुं च पार्थिवम् ।
कुरुस्त्रियस्समादाय जग्मुरायोधनं प्रति ॥ १०

समासाद्य कुरुक्षेत्रं तास्त्रियो निहतेश्वराः ।
अपश्यन्त हतांस्तत्र पुत्रान् भ्रातॄन् प्रियान् सखीन् ॥ ११

क्रव्यादैर्भक्ष्यमाणांश्च [1]कङ्कगोमायुवायसैः ।
भूतैः पिशाचै रक्षोभिर् विविधैश्च निशाचरैः ॥ १२

रुद्राक्रीडनिभं दृष्ट्वा तदा विशसनं स्त्रियः ।
कुरर्य इव शोकार्ता विक्रोशन्त्यो निपेतिरे ॥ १३

अदृष्टपूर्वं पश्यन्त्यो दुःखार्ता भरतस्त्रियः ।

---

1. क-ख—गोमायुबल

शरीरेषु स्खलन्त्यश्च न्यपतंश्च परासुवत् ॥ १४

श्रान्तानां चाप्यनाथानां [1]क्रन्दन्तीनां भृशं तथा ।
पाञ्चालकुरुयोषाणां कृपणं तदभून्महत् ॥ १५

दुःखाभिहतचित्ताभिस् समन्तादनुनादितम् ।
दृष्ट्वाऽऽयोधनमत्युग्रं धर्मज्ञा सुबलात्मजा ॥ १६

ततस्सा पुण्डरीकाक्षम् आमन्त्र्य पुरुषोत्तमम् ।
कुरूणां वैशसं दृष्ट्वा दुःखाद्वचनमब्रवीत् ॥ १७

गान्धारी—

पश्यैताः पुण्डरीकाक्ष स्नुषा मे निहतेश्वराः ।
प्रकीर्णकेश्यः क्रोशन्त्यः कुरर्य इव माधव ॥ १८

अमूस्त्वभिसमागम्य स्मरन्त्यो भरतर्षभान् ।
पृथगेवानुपद्यन्ते पुत्रान् भ्रातॄन् पितॄन् पतीन् ॥ १९

वीरसूभिर्महाबाहो हतपुत्राभिरावृतम् ।
[2]क्वचिच्च वीरपत्नीभिर् हतवीराभिरावृतम् ॥ २०

शोभितं पुरुषव्याघ्रैर् भीष्मकर्णाभिमन्युभिः ।
द्रोणद्रुपदशल्यैश्च ज्वलद्भिरिव पावकैः ॥ २१

काञ्चनैः कवचैर्निष्कैर् मणिभिश्च महाधनैः ।

---

1. क—आसीत्काचन चेतना अ—क्रीडन्तीनां भृशं तदा
2. ख—अर्धद्वयं नास्ति

[1]अङ्गदैर्हस्तकेयूरैस् स्रग्भिश्च समलङ्कृतम् ॥　　२२

वीरबाहुविसृष्टाभिश् शक्तिभिः परिघैरपि ।
खड्गैश्च विमलैस्तीक्ष्णैस् सशरैश्च शरासनैः ॥　　२३

क्रव्यादसङ्घैर्मुदितैस् तिष्ठद्भिस्सहितैः क्वचित् ।
क्वचिदाक्रीडमानैश्च शयानैश्चापरैः क्वचित् ॥　　२४

एतदेवंविधं वीर सम्पश्यायोधनं महत् ।
[2]त्वया तु साधितं कर्म पुष्कराक्ष महाद्युते ॥　　२५

पश्यमाना च दह्यामि शोकेनाहं जनार्दन ॥　　२५॥

पाञ्चालानां कुरूणां च विनाशं मधुसूदन ।
पञ्चानामिव भूतानाम् अहं वधमचिन्तयम् ॥　　२६॥

तान् सुपर्णाश्च गृध्राश्च विकर्षन्त्यसृगुक्षितान् ।
[3]निगृह्य कवचानुग्रान् भक्षयन्ति सहस्रशः ॥　　२७॥

जयद्रथस्य कर्णस्य तथैव द्रोणभीष्मयोः ।
अभिमन्योर्विनाशं च कश्चिन्तयितुमर्हति ॥　　२८॥

अवध्यकल्पान् निहतान् दृष्ट्वाऽहं मधुसूदन ।
गृध्रकङ्कबलश्येनश्वसृगालसमावृतान् ॥　　२९॥

अमर्षवशमापन्नान् दुर्योधनवशे स्थितान् ।

---

1. ख—अङ्गदै　　2. क—इदमर्धं नास्ति
3. क-ख—निगृह्य कवचेषूग्रा भ

पश्येमान् पुरुषव्याघ्रान् संशान्तानिव पावकान् ॥ ३०॥
शयनान्युचितास्सर्वे मृदूनि विमलानि च ।
विपन्नास्तेऽद्य वसुधां विवृतामधिशेरते ॥ ३१॥
वन्दिभिश्चाधिकं काले स्तुवद्भिरभिनन्दिताः ।
शिवानामशिवा घोराश् शृण्वन्ति विविधा गिरः ॥ ३२॥
ये पुरा शेरते वीराश् शयनेषु यशस्विनः ।
चन्दनागरुदिग्धाङ्गास् तेऽद्य पांसुषु शेरते ॥ ३३॥
तेषामाभरणान्येते गृध्रगोमायुवायसाः ।
आक्षिपन्ति शिवा दृष्ट्वा विनदन्ति पुनः पुनः ॥ ३४॥
चापानि विशिखान् पीतान् निस्त्रिंशान् विमला गदाः ।
युद्धाभिपातिनश्शूरा जीवन्त इव बिभ्रति ॥ ३५॥
[1]आपीतवर्णा बहवः क्रव्यादैरभिघातिताः ।
ऋषभप्रतिरूपाक्षाश् शेरते च सहस्रशः ॥ ३६॥
अपरे पुनरालिङ्ग्य गदाः परिघबाहवः ।
शेरतेऽभिमुखाश्शूरा दयिता इव योषितः ॥ ३७॥
[2]बिभ्रतः कवचानन्ये विमलान्यायुधानि च ।

---

1. क—स्वरूपवर्णा बहवः अ—आवीतवर्णै+रपिबद्धिताः ।
   ध—अपि ते वर्णे + रभिवातिताः ।
2. क—पञ्चार्धानि न सन्ति

न धर्षयन्ति क्रव्यादा जीवन्तीति जनार्दन ॥ ३८॥

क्रव्यादैः कृष्यमाणानाम् अपरेषां महात्मनाम् ।
शातकुम्भस्रजश्चित्रा विप्रकीर्णास्सहस्रशः ॥ ३९॥

एते गोमायवोऽभीता निहतानां यशस्विनाम् ।
[1]कण्ठान्तरगतान् दिव्यान् आक्षिपन्ति महामणीन् ॥ ४०॥

सर्वेष्वपररात्रेषु यानवन्दन्त वन्दिनः ।
स्तुतिभिश्च परार्ध्याभिर् उपचारैश्च शिक्षिताः ॥ ४१॥

तानद्य परिदेवन्ति दुःखिताः परमाङ्गनाः ।
कृपणा वृष्णिशार्दूल दुःखशोकान्विता भृशम् ॥ ४२॥

नीलोत्पलवनानीव विभान्ति रुचिराणि वै ।
मुखानि परमस्त्रीणां परिशुष्काणि केशव ॥ ४३॥

रुदित्वा विरता ह्येता ध्यायन्तस्सपरिक्लमाः ।
कुरुस्त्रियोऽभिगच्छन्ति तेन तेनैव दुःखिताः ॥ ४४॥

एतान्यादित्यवर्णानि पुण्डरीकनिभानि च ।
पश्य रोदनताम्राणि वदनानीह योषिताम् ॥ ४५॥

आसामपरिपूर्णार्थं निशम्य परिदेवितम् ।
इतरेतरसङ्क्रन्दान् न विजानन्ति योषितः ॥ ४६॥

---

1. क—कण्ठान्तरगता भारानाक्षिपन्ति ख—जात्यन्तर
ब—जात्यन्तर……प्रक्षिपन्ति

एता दीर्घमिवोच्छ्वस्य निश्श्वस्य च विलप्य च ।
विस्पन्दमाना दुःखेन जीवितं नाजहुस्स्त्रियः ॥ ४७॥

[1]बह्वदृष्ट्वा शरीराणि क्रोशन्ति विलपन्ति च ।
पाणिभिश्चापरा घ्नन्ति शिरांसि मृदुपाणयः ॥ ४८॥

[2]शिरोभिः पतितैर्हस्तैस् सर्वाङ्गैः खण्डशः कृतैः ।
इतरेतरसङ्क्रान्तैर् आस्तीर्णा भाति मेदिनी ॥ ४९॥

विशिरस्कानधःकायान् दृष्ट्वा घोराननिन्दिताः ।
मुह्यन्त्यनुचिता नार्यो [3]वीक्षमाणा विचेतसः ॥ ५०॥

अपश्यन्त्योऽपरं तत्र नेदमस्येति दुःखिताः ॥ ५१

बाहूरुचरणानन्यान् विशिखोन्मथितान् पृथक् ।
सन्दधत्योऽसुखाविष्टा मूर्छन्तीह पुनः पुनः ॥ ५२

उत्कृत्तशिरसश्चान्यान् विजग्धान् मृगपक्षिभिः ।
दृष्ट्वाऽपि न विजानन्ति भर्तॄन् भारतयोषितः ॥ ५३

पाणिभिश्चापरा घ्नन्ति शिरांसि मधुसूदन ।
प्रेक्ष्य भ्रातॄन् पितॄन् वाऽपि पतींश्च निहतान् परैः ॥ ५४

बाहुभिः कार्मुकैः खड्गैश् शिरोभिश्च सकुण्डलैः ।

---

1. क—बुध्वा ख-घ—बह्वयो 2. क—अर्धचतुष्टयं नास्ति
3. ख-घ—विदेहानि शिरांसि च
शिरः कायेन सन्धाय प्रेक्षमाणा विचेतसः । [अधिकः पाठः]

अगम्यकल्पा पृथिवी मांसशोणितकर्दमा ॥ ५५

न दुःखेषूचिताः पूर्वं दुःखं गाहन्त्यनिन्दिताः ।
भ्रातृभिः पितृभिः पुत्रैर् उपस्तीर्णां वसुन्धराम् ॥ ५६

यूथानीव किशोरीणां सुकेशीनां जनार्दन ।
स्नुषाणां धृतराष्ट्रस्य पश्य बृन्दान्यनेकशः ॥ ५७

नातो दुःखतरं किंस्वित् केशव प्रतिभाति मे ।
यदिमाः कुर्वते सर्वा रवमुच्चावचं स्त्रियः ॥ ५८

[1]नूनं वै चरितं पापं मया पूर्वेषु जन्मसु ।
यान् पश्यामि हतान् पुत्रान् पौत्रान् भ्रातॄंश्च केशव ॥ ५९

वैशम्पायनः—

एव[2]मुक्त्वा विलपति समाभाष्य जनार्दनम् ।
[3]गान्धारी पुत्रशोकार्ता ददर्श निहतं सुतम् ॥ ६०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ८१ ॥ स्त्रीपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ६० श्लोकाः ]

---

1. क—नूनमाचरितं 2. ख—मार्ता वि
क-घ—मार्ता विलपति ददर्श निहतं सुतम् ॥
3. अ-क—स्नुषाणां धृतराष्ट्रस्य पश्य बृन्दान्यनेकशः ।
[ अधिकः पाठः]

## ॥ सप्तदशोऽध्यायः ॥

गान्धार्या दुर्योधनमालिङ्ग्य परिदेवनम् ॥

वैशम्पायनः—

हतं दुर्योधनं दृष्ट्वा गान्धारी शोककर्शिता ।
सहसा न्यपतद्भूमौ छिन्नेव कदली वने ॥ १

सा तु लब्ध्वा पुनस्संज्ञां विक्रुश्य च पुनः पुनः ।
दुर्योधनमभिप्रेक्ष्य शयानं रुधिरोक्षितम् ॥ २
परिष्वज्याथ गान्धारी कृपणं पर्यदेवयत् ॥ २॥
हा हा पुत्रेति दुःखार्ता विललापाकुलेन्द्रिया ॥ ३

सुगूढजत्रुं [1]विमलं हारनिष्कनिषेवितम् ।
वारिणा नेत्रजेनोरस् सिञ्चन्ती शोककर्शिता ॥ ४
समीपस्थं हृषीकेशम् इदं वचनमब्रवीत् ॥ ४॥

गान्धारी—

उपस्थितेऽस्मिन् सङ्ग्रामे ज्ञातीनां सङ्क्षये विभो ।
मामयं प्राह वार्ष्णेय प्राञ्जलिर्नृपसत्तमः ॥ ५॥
अस्मिन् ज्ञातिसमुद्धर्षे जयमम्बा ब्रवीतु मे ॥ ६

1. क-ख—विपुलं

इत्युक्ता जानती सर्वम् अहं स्वं व्यसनागमम् ।
अब्रुवं पुरुषव्याघ्र [1]यतो धर्मस्ततो जयः ॥ ७

यदा तु युध्यमानस्त्वं सम्प्रमुह्यसि पुत्रक ।
ध्रुवं शस्त्रहताँल्लोकान् प्राप्तोऽस्यमरवत् प्रभो ॥ ८

इत्येवमब्रुवं पूर्वं नैनं शोचाम्यहं प्रभो ॥ ८॥

धृतराष्ट्रं तु शोचामि कृपणं हतबान्धवम् ॥ ९

अमर्षणं युधां श्रेष्ठं कृतास्त्रं युद्धदुर्मदम् ।
शयानं वीरशयने पश्य माधव मे सुतम् ॥ १०

योऽयं मूर्धावसिक्तानाम् अग्रे याति परन्तप ।
सोऽयं पांसुषु शेतेऽद्य पश्य कालस्य पर्ययम् ॥ ११

एवं दुर्योधनो वीरो गतिं त्वसुलभां गतः ।
[2]तथा ह्यभिमुखश्शेते शयने वीरसेविते ॥ १२

[3]यं पुरा पर्युपासीना रमयन्ति वरस्त्रियः ।
तं वीरशयने सुप्तं रमयन्त्यशिवाश्शिवाः ॥ १३

यं पुरा पर्युपासीना रमयन्ति महीक्षितः ।
महीतलस्थं निहतं गृध्रास्तं पर्युपासते ॥ १४

---

1. क-ब—यतः कृष्णस्ततो जयः
2. घ—इदमाद्यर्धषट्कं नास्ति
3. क-ख—अर्धद्वयं नास्ति

यं पुरा व्यजनैरग्र्यैर् उपवीजन्ति योषितः ।
तमद्य पक्षव्यजनैर् उपवीजन्ति पक्षिणः ॥ १५

एष शेते महाबाहुर् बलवान् सत्यविक्रमः ।
सिंहेनेव द्विपस्सङ्ख्ये भीमसेनेन पातितः ॥ १६

[1]पश्य दुर्योधनं कृष्ण शयानं रुधिरोक्षितम् ।
निहतं भीमसेनेन गदामालिङ्ग्य भारतम् ॥ १७

अक्षौहिणीर्महाबाहुर् दश चैकं च केशव ।
अनयद्यः पुरा सङ्ख्ये सेनया निधनं गतः ॥ १८

एष दुर्योधनश्शेते महेष्वासो महारथः ।
शार्दूल इव सिंहेन भीमेन विनिपातितः ॥ १९

विदुरं ह्यवमत्यैष पितरं चैव मन्दभाक् ।
बालो वृद्धावमानेन मन्दो मृत्युवशं गतः ॥ २०

निस्सपत्ना मही यस्य त्रयोदश समास्थिता ।
स शेते निहतस्सङ्ख्ये पुत्रो मे पृथिवीपतिः ॥ २१

अपश्यं कृष्ण पृथिवीं धार्तराष्ट्रवशानुगाम् ।
पूर्णां हस्तिगवाश्वैश्च वार्ष्णेय न तु तच्चिरम् ॥ २२

तामेवाद्य महाबाहो पश्याम्यन्यानुशासिताम् ।

---

1. ख—अर्धषटकं नास्ति

हीनां हस्तिगवाश्वैश्च किं नु जीवामि माधव ॥ २३

इदं कृच्छ्रतरं पश्य पुत्रस्यापि वधान्मम ।
या इमाः पर्युपासन्ते [1]हताञ् शूरान् रणे स्त्रियः ॥ २४

प्रकीर्णकेशां सुश्रोणिं दुर्योधनभुजाङ्कगाम् ।
रुक्मवेदिनिभां पश्य कृष्ण लक्ष्मणमातरम् ॥ २५

नूनमेषा पुरा बाला जीवमाने महाभुजे ।
भुजमाश्रित्य रमते सुभुजस्य मनस्विनी ॥ २६

कथं नु शतधा नेदं हृदयं मम दीर्यते ।
पश्यन्त्या निहतं पुत्रं पौत्रेण सहितं रणे ॥ २७

पुत्रं रुधिरसंसिक्तम् उपजिघ्रन्त्यनिन्दिता ।
दुर्योधनं तु मृदुना पाणिना परिमार्जति ॥ २८

किं नु शोचति भर्तारम् अथ पुत्रं मनस्विनी ।
[2]तथा ह्यवस्थिता भाति पुत्रं चाप्यभिवीक्षते ॥ २९

स्वशिरः पञ्चशाखाभ्याम् अभिहत्यायतेक्षणा ।
पतत्युरसि वीरस्य कुरुराजस्य माधव ॥ ३०

---

1. ख—इतः पादचतुयं नास्ति
2. क—कथंनु शतधा नेदं हृदयं मम दीर्यते। [अधिकः पाठः]
   घ—ह्यवस्थिता भाति पुत्रं चाप्यभिवीक्ष्य सा

पुण्डरीकमिवाघ्राति पुण्डरीकान्तरप्रभा ।
मुखं प्रमृज्य पुत्रस्य भर्तुश्चैव तपस्विनी ॥ ३१

[1-2]यदि वाप्यागमास्सन्ति यदि च श्रुतयस्तथा ।
[3]ध्रुवं लोकमवाप्तोऽयं नृपो बाहुबलार्जितम् ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ८१ ॥ स्त्रीप्रर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ३२ श्लोकाः]

---

1. अ-ब—कथं नु शतधा नेदं हृदयं मम दीर्यते ।
पश्यन्त्यानिहतं पुत्रं पौत्रेण सहितं रणे ॥ [अधिकः पाठः]
2. ब—पुत्रं रुधिरसंसिक्तम् उपजिघ्रन्त्यनिन्दिता । [अधिकः पाठः]
3. क-ख—ध्रुवं लोकानवाप्तोऽयं ध्रुवान् बाहुबलार्जितान् ।

## ॥ अष्टादशोऽध्यायः ॥

कृष्णं प्रति गान्धारीवचनम् ॥

गान्धारी—

पश्य माधव पुत्रान् मे शतसङ्ख्यान् जितक्लमान् ।
गदया भीमसेनेन भूयिष्ठं निहतान् रणे ॥ १

इदं दुःखतरं [1]मेऽद्य यदिमा मुक्तमूर्धजाः ।
हत[2]भर्त्र्यो रणे बालाः परिधावन्ति मे स्नुषाः ॥ २

प्रासादतलचारिण्यश्च चरणैर्भूषणान्वितैः ।
कायेनाद्य स्पृशन्तीमां रुधिरार्द्रां वसुन्धराम् ॥ ३

गृध्रानुत्सारयन्त्यश्च गोमायूंश्च तथाऽपराः ।
शोकेनार्ता विघूर्णन्त्यो मत्ता इव चरन्त्युत ॥ ४

एषां या त्वनवद्याङ्गी करसम्मितमध्यमा ।
घोरमायोधनं दृष्ट्वा पतत्यसुखिता भुवि ॥ ५

दृष्ट्वा मे पार्थिवसुताम् एनां लक्ष्मणमातरम् ।
[3]राजपत्नीं महाबाहो मनो न ह्युपशाम्यति ॥ ६

भ्रातॄंश्चान्याः पितॄंश्चान्याः पुत्रांश्च निहतान् भुवि ।
दृष्ट्वा परिपतन्त्येताः प्रगृह्य सुभुजा भुजान् ॥ ७

---

1. क-ख—मन्ये 2. अ-ख-घ—पुत्रा 3. घ—इदमर्धं नास्ति

[1]मध्यानामथ वृद्धानां बालानां चापराजितः ।
आक्रन्दं हतबन्धूनां दारुणे वैशसे शृणु ॥ ८

रथनीळेषु देहांश्च हतानां गजवाजिनाम् ।
आस्थितान् श्रममोहार्तान् स्थितान् पश्य महाबल ॥ ९

अन्या ह्यपहृतं कायाच् चारुकुण्डलमुन्नसम् ।
स्वस्य बन्धोश्शिरः कृष्ण गृहीत्वा पश्य तिष्ठति ॥ १०

पूर्वजन्मकृतं पापं मन्ये नाल्पमिवानघ ।
एताभिरनवद्याभिर् मया चैवाल्पपुण्यया ॥ ११

तदिदं धर्मराजेन घातितं नो जनार्दन ।
न हि नाशोऽस्ति वार्ष्णेय कर्मणोश्शुभपापयोः ॥ १२

प्रत्यग्रवयसः पश्य दर्शनीय [2]कुचाननाः ।
कुलेषु जाता ह्रीमत्यः कृष्णपक्ष्माक्षिमूर्धजाः ॥ १३

हंसगद्गदभाषिण्यो दुःखशोकप्रमोहिताः ।
सारस्य इव पश्यन्त्यः पतिताः पश्य माधव ॥ १४

फुल्लपद्मप्रकाशानि पुण्डरीकाक्ष योषिताम् ।
अनवद्यानि वक्त्राणि तपत्यंशुभिरंशुमान् ॥ १५

सेर्ष्याणां मम पुत्राणां वासुदेवावरोधनम् ।

---

1. क—मध्यमानां च नारीणां वृद्धानां चापि भारत ।
2. क—कुचोदराः

मत्तमातङ्गदर्पाणां पश्यन्त्यद्य पृथग्जनाः ॥　　१६

शतचन्द्राणि चर्माणि ध्वजांश्चादित्यसन्निभान् ।
रौक्माणि चैव वर्माणि निष्कानपि च काञ्चनान् ॥　　१७

शिरस्त्राणानि चैतानि पुत्राणां मे महीतले ।
पश्य दीप्तानि गोविन्द पावकान् सुहुतानिव ॥　　१८

एष दुश्शासनश्शेते शूरेणामित्रघातिना ।
पीतशोणितसर्वाङ्गो भीमसेनेन पातितः ॥　　१९

[1]द्यूतक्लेशाननुस्मृत्य द्रौपदीचोदितेन च ॥　　१९॥

उक्ता ह्यनेन पाञ्चाली सभायां द्यूतनिर्जिता ।
प्रियं चिकीर्षता भ्रातुः कर्णस्य च जनार्दन ॥　　२०॥

सहैव सहदेवेन नकुलेनार्जुनेन च ॥　　२१

दासभार्याऽसि पाञ्चालि क्षिप्रं प्रविश नो गृहान् ।　　२१॥
ततोऽहमब्रुवं कृष्ण तदा दुर्योधनं नृपम् ॥　　२२

मृत्युपाशपरिक्षिप्तं शकुनिं पुत्र वर्जय ।
गान्धारराजं दुर्बुद्धिं मातुलं कलहप्रियम् ॥　　२३

क्षिप्रमेनं परित्यज्य पुत्र संशाम्य पाण्डवैः ।

---

1. क-ख-घ—गदया भीमसेनेन पश्य माधव मे सुतम् ।

[अधिकः पाठः]

न त्वं बुध्यसि दुर्बुद्धे भीमसेनममर्षिणम् ॥ २४

वाङ्नाराचैस्तुदंस्तीक्ष्णैर् उल्काभिरिव कुञ्जरम् ।
तानेष रभसः क्रूरो [1]वाक्छल्यैरवपोथयत् ॥ २५

उत्ससर्ज विषं तेषु सर्पो गोवृषभेष्विव ॥ २५॥

एष दुश्शासनश्शेते निक्षिप्य विपुलौ भुजौ ।
निहतो भीमसेनेन सिंहेनेव महर्षभः ॥ २६॥

अत्यर्थमकरोद्रौद्रं भीमसेनोऽत्यमर्षणः ।
दुश्शासनस्य यत् क्रुद्धोऽपिबच्छोणितमाहवे ॥ २७॥

इति श्रीमहाभरते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ८१ ॥ स्त्रीपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये २७॥ श्लोकाः]

---

1. ख—रभसः क्रूरान् वाक्छल्यानपि चारयत्
क—वाकुच्छल्यं नावरोधयत् ब—वाकुच्छल्यापि चराचरम्

## ॥ एकोनविंशोऽध्यायः ॥



कृष्णं प्रति गान्धारीवचनम् ॥

गान्धारी—

एष माधव पुत्रो मे विकर्णः प्राज्ञसम्मतः ।
भूमौ विनिहतश्शेते [1]भीमेन शतधा कृतः ॥ १

[2]गजमध्ये हतश्शेते विकर्णो मधुसूदन ।
नीलमेघपरिक्षिप्तश् शरदीव दिवाकरः ॥ २

अस्य चापग्रहेणैष पाणिः कृतकिणो महान् ।
कथञ्चिच्छिद्यते गृध्रैर् अत्तुकामैस्तलत्रवान् ॥ ३

अस्य भार्याऽऽमिषप्रेप्सुं गृध्रमेषा तपस्विनी ।
वारयत्यनिशं योद्धुं न च शक्नोति माधव ॥ ४

युवा बृन्दारक[3]समो विकर्णः पुरुषर्षभ ।
सुखोषितस्सुखार्हश्च शेते पांसुषु माधव ॥ ५

कर्णिनालीकनाराचैर् भिन्नवर्माणमाहवे ।
अद्यापि न जहात्येनं लक्ष्मीर्भरतसत्तमम् ॥ ६

एष सङ्ग्रामशूरेण प्रतिज्ञां पालयिष्यता ।

1. अ—विकर्णोमधुसूदन घ—भीमसेनशतं कृतः
2. अ-क—नास्तीदमर्धम्
3. क-ख—: शूरो विकर्णः

दुर्मुखो निहतश्शेते भीमेनारिनिबर्हणः ॥ ७

तस्यैतद्वदनं कृष्ण श्वापदैरर्धभक्षितम् ।
[1]विभात्यभ्यधिकं तात सप्तम्यामिव चन्द्रमाः ॥ ८

शूरस्यास्य रणे कृष्ण पश्याननमथेदृशम् ॥ ८॥

[2]स कथं निहतोऽमित्रैः पांसून् ग्रसति मत्सुतः ।
यस्याहवमुखे सौम्य स्थाता नैवोपलभ्यते ॥ ९॥

स कथं दुर्मुखोऽमित्रैर् हतो विबुधलोकजित् ॥ १०

चित्रसेनं हतं भूमौ शयानं मधुसूदन ।
धार्त[3]राष्ट्रमिमं पश्य प्रतिमानं धनुर्भृताम् ॥ ११

तं चित्रमाल्याभरणं युवत्यश्शोककर्शिताः ।
क्रव्यादसङ्घसहिता रुदन्त्यः पर्युपासते ॥ १२

स्त्रीणां रुदितनिर्घोषं श्वापदानां च गर्जितम् ।
चित्ररूपमिदं कृष्ण [4]विमिश्रं प्रतिभाति मे ॥ १३

[5]युवा बृन्दारको नित्यं प्रवरस्त्रीनिषेवितः ।
विविंशतिरसौ शेते ध्वस्तः पांसुषु माधव ॥ १४

1. घ—अर्धद्वयं नास्ति क—विभात्यभ्यधिकं नाम
2. ख—विभाति निहतस्यापि श्वापदैरर्धभक्षितम् । [अधिकः पाठः]
3. घ—राष्ट्रं विनिहतं प्रतिमानं
क-ख—राष्ट्रमिमं पश्य प्रतिमानं धनुष्मताम्
4. क-ख—विचित्रं 5. घ—पश्य मे दारको

शरसङ्कृत्तवर्माणं वीरं विशसने हतम् ।
परिवार्यासते गृध्राः परिविंशाविविंशतिम् ॥ १५

प्रमथ्य समरे वीरः पाण्डवानामनीकिनीम् ।
आविश्य शयनं शेते पुनस्सत्पुरुषोचितम् ॥ १६

स्मितोपपन्नं सुनसं सुभ्रु ताराधिपोपमम् ।
अतीव सौम्यं वदनं कृष्ण पश्य विविंशतेः ॥ १७

एनं हि पर्युपातिष्ठन् बहुधा वरयोषितः ।
क्रीडन्तमिव गन्धर्वं देवकन्यास्सहस्रशः ॥ १८

हन्तारमरिसैन्यानां वीरं समितिशोभनम् ।
निबर्हणममित्राणां दुष्षहं प्रसहेत कः ॥ १९

दुष्षहस्यैतदाभाति शरीरं संवृतं शरैः ।
गिरिरात्मरुहैः फुल्लैः कर्णिकारैरिवावृतः ॥ २०

शातकुम्भस्रजा भाति कवचेन च भास्वता ।
अग्निनेव गिरिश्श्वेतो गतासुरपि दुष्षहः ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
॥ ८१ ॥ स्त्रीपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

## ॥ विंशोऽध्यायः ॥

कृष्णं प्रति गान्धार्या रुदन्तीनां स्त्रीणां प्रदर्शनम् ॥

गान्धारी—

अध्यर्धगुणमाहुर्यं बले शौर्ये च माधव ।
पित्रा त्वया च दाशार्ह दृप्तं सिंहमिवोत्कटम् ॥ १

यो बिभेद चमूमेको मम पुत्रस्य दुर्भिदाम् ।
स भूत्वा मृत्युरन्येषां स्वयं मृत्युवशं गतः ॥ २

तस्योपलक्षये कृष्ण कार्ष्णेरमिततेजसः ।
अभिमन्योर्हतस्यापि प्रभा नैवोपशाम्यति ॥ ३

एषा विराटदुहिता स्नुषा गाण्डीवधन्वनः ।
हतं बाला पतिं वीरं शोच्या शोचत्यनिन्दिता ॥ ४

तमेषा हि समासाद्य भार्या भर्तारमन्तिकात् ।
विराटदुहिता कृष्ण पाणिना परिमार्जति ॥ ५

तथा वक्त्रमुपाघ्राय सौभद्रस्य यशस्विनी ।
विबुद्धकमलाकारं कम्बुवृत्तशिरोधरम् ॥ ६

काम्यरूपमतीवैषा परिष्वजति भामिनी ॥ ६॥

लज्जमाना पुरा चैनं माध्वीकमदमूर्छिता ॥ ७

तस्य क्षतजसन्दिग्धं जातरूपपरिष्कृतम् ।
विमुच्य कवचं कृष्ण शरीरमभिवीक्षते ॥ ८

[1]अवेक्षमाणा तं बाला कृष्णा त्वामभिवीक्षते ॥ ८।

कथं ते पुण्डरीकाक्ष सदृशाक्षो निपातितः ।
बले शौर्ये च सदृशस् तेजसा चैव तेऽनघ ॥ ९।

रूपेण च तवात्यर्थं शेते भुवि निपातितः ॥ १०

अत्यन्तसुकुमारस्य राङ्कवाजिनशायिनः ।
कच्चिदद्य शरीरं ते भूमौ न परितप्यते ॥ ११

मातङ्गभुजवर्ष्माणौ ज्याक्षेपकठिनत्वचौ ।
काञ्चनाङ्गदिनौ शेते विक्षिप्य विपुलौ भुजौ ॥ १२

व्यायम्य बहुधा नूनं सुखसुप्तश्श्रमादिव ।
एवं विलपतीमार्तां किं मां न प्रतिभाषसे ॥ १३

[2]ननु मां त्वं पुरा दूराद् अभिवीक्ष्याभिभाषसे ।
न स्मराम्यपराधं मे किं मां न प्रतिभाषसे ॥ १४

आर्यामार्यं सुभद्रां त्वम् इमांश्च त्रिदशोपमान् ।
पितॄन् मातॄश्च दुःखार्तान् विहाय क्व गमिष्यसि ॥ १५

वैशम्पायनः—

तस्य शोणितसन्दिग्धान् केशानुन्नम्य पाणिना ।

1. अ—नास्तीदमर्धम् 2. ख-घ—इदमाद्यर्धद्वयं नास्ति

उत्सङ्गे वक्त्रमाधाय जीवन्तमिव पृच्छति ॥ १६

गान्धारी—

स्वस्रीयं वासुदेवस्य पुत्रं गाण्डीवधन्वनः ।
कथं त्वां रणमध्यस्थं जघ्नुरेनं महारथाः ॥ १७

धिगस्तु क्रूरकर्तॄंस्तान् कृपकर्णजयद्रथान् ।
द्रोणद्रोणायनी चोभौ यैरसि व्यसने हतः ॥ १८

रथर्षभाणां सर्वेषां कथमासीत् तदा मनः ।
बालं त्वां परिवार्यैकम् [1]अनेकेषां निजघ्नताम् ॥ १९

कथं नु पाण्डवानां च पाञ्चालानां च पश्यताम् ।
त्वं वीर निधनं प्राप्तो नाथवान् सन्ननाथवत् ॥ २०

[2]दृष्ट्वा बहुभिराक्रन्दैर् निहतं त्वामनाथवत् ।
वीराः पुरुषशार्दूल कथं जीवन्ति पाण्डवाः ॥ २१

न राज्यलाभो विपुलश् शत्रूणां वा पराभवः ।
प्रीतिं दास्यति पार्थानां त्वामृते पुष्करेक्षण ॥ २२

तव शस्त्रजिताँल्लोकान् धर्मेण च दमेन च ।
क्षिप्रमन्वागमिष्यामि तत्र मां प्रतिपालय ॥ २३

[3]दुष्करं पुनरप्राप्ते काले भवति केन चित् ।
यदहं त्वा रणे दृष्ट्वा हतं जीवामि दुर्भगा ॥ २४

1. क-ख—मम दुःखाय जघ्नुषाम्
2. अ-क—नास्तीदमर्धम् 3. क—इदमर्धं नास्ति

कामिदानीं नरव्याघ्र त्वं श्लक्ष्णस्मितया गिरा ।
पितृलोके समेत्यान्यां मामिवामन्त्रयिष्यसि ॥ २४॥

नूनमप्सरसां स्वर्गे मनांसि प्रमथिष्यसि ।
परमेण च रूपेण गिरा च स्मितपूर्वया ॥ २५॥

प्राप्य पुण्यकृतां लोकान् अप्सरोभिस्समेयिवान् ।
सौभद्र विहरन् काले स्मरेथास्सुकृतानि मे ॥ २६॥

एतावानिह संवासो विहितस्ते मया सह ।
षण्मासास्सप्तमे मासे त्वं वीर निधनं गतः ॥ २७॥

गान्धारी—

इत्युक्तवचनामेनाम् अपाकर्षन्ति दुःखिताम् ।
उत्तरां मोघसङ्कल्पां मत्स्यराजकुलस्त्रियः ॥ २८॥

उत्तरामपकृष्यैताम् आर्तामार्ततरास्स्वयम् ।
विराटं निहतं दृष्ट्वा क्रोशन्ति विलपन्ति च ॥ २९॥

द्रोणास्त्रशरसङ्कृत्तं शयानं शोणितोक्षितम् ।
विराटं वितुदन्त्येते गृध्रगोमायुवायसाः ॥ ३०॥

वितुद्यमानं विहगैर् विराटमसितेक्षणाः ।
न शक्नुवन्ति विवशा विसर्जयितुमातुराः ॥ ३१॥

आसामातपतप्तानाम् आयासेन च योषिताम् ।
श्रमेण च विवर्णानां रूपाणां विकृतं वपुः ॥ ३२॥

उत्तरां चाभिमन्युं च काम्भोजं च सुदक्षिणम् ।

शिशूनेतान् हतान् पश्य लक्ष्मणं च सुदर्शनम् ॥ ३३॥

कार्ष्णिनाऽभिहतं कृष्ण लक्ष्मणं प्रियदर्शनम् ।
आयोधनशिरोमध्ये शयानं पश्य माधव ॥ ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि विंशोऽध्यायः ॥ २० ॥
॥ ८१ ॥ स्त्रीपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ३४॥ श्लोकाः]

---

## ॥ एकविंशोऽध्यायः ॥



कृष्णं प्रति गान्धार्या कर्णशरीरस्य विलपन्तीनां तत्स्त्रीणांच प्रदर्शनम्॥

---

गान्धारी—

एष वैकर्तनश्शेते महेष्वासो महारथः ।
ज्वलितानलवत् सङ्ख्ये संशान्तः पार्थतेजसा ॥ १

पश्य वैकर्तनं कर्णं निपात्यातिरथान् बहून् ।
शोणितौघपरीताङ्गं शयानं पतितं भुवि ॥ २

अमर्षी दीर्घरोषश्च महेष्वासो महारथः ।
[1]रणे विनिहतश्शेते शूरो गाण्डीवधन्वना ॥ ३

यं स्म पाण्डवसन्त्रासान्मम पुत्रा महारथाः ।

---

1. क—रणे निपतितः शेते हतो घ—इदमर्धद्वयं नास्ति

आयुध्यन्त पुरस्कृत्य मातङ्गमिव यूथपम् ॥ ४

शार्दूलमिव सिंहेन समरे सव्यसाचिना ।
मातङ्गमिव मत्तेन मातङ्गेन निपातितम् ॥ ५

त एताः पुरुषव्याघ्र निहतं शूरमाहवे ।
प्रकीर्णमूर्धजा[1]स्तस्य स्त्रियस्तं पर्युपासते ॥ ६

उद्विग्नस्सततं यस्माद् धर्मराजो युधिष्ठिरः ।
त्रयोदश समा निद्रां चिन्तयन् नाधिगच्छति ॥ ७

अनाधृष्यः परैर्युद्धे शत्रुभिर्मघवानिव ।
युगान्ताग्निरिवार्चिष्मान् हिमवानिव सुस्थिरः ॥ ८

स भूत्वा शरणं पूर्वं धार्तराष्ट्रस्य माधव ।
भूमौ विनिहतश्शेते वातरुग्ण इव द्रुमः ॥ ९

पश्य कर्णस्य पत्नीं त्वं वृषसेनस्य मातरम् ।
लालप्यमानां करुणं रुदन्तीं पतितां भुवि ॥ १०

आचार्यशापोऽनुगतो ध्रुवं त्वां
यदग्रसच्चक्रमिदं धरा ते ।
ततश्शरेणाभिहृतं शिरस्ते
धनञ्जयेनाहवचक्रमध्ये ॥ ११

1. क-ख—: पत्न्यो रुदन्त्यः पर्युपासते

अहो धिगेषा पतिता विसंज्ञा
　　समीक्ष्य जाम्बूनदबद्धनिष्कम् ।
कर्णं महाबाहुमदीनसत्त्वं
　　सुषेणमाता रुदती भृशार्ता ॥　　१२

कलावशेषो हि कृतो महात्मा
　　शरीरभक्षैः परिभक्षयद्भिः ।
द्रष्टुं न सम्प्रीतिकरश्शशीव
　　कृष्णस्य पक्षस्य चतुर्दशाहे ॥　　१३

विवर्तमाना पतिता पृथिव्याम्-
　　उत्थाय दीना पुनरेव चैषा ।
कर्णस्य वक्त्रं परिजिघ्रमाणा
　　रोरूयते पुत्रवधाभितप्ता ॥　　१४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ ८१ ॥ स्त्रीपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये १४ श्लोकाः]

---

## ॥ द्वाविंशोऽध्यायः ॥



गान्धार्या कृष्णं प्रति बाह्लिकादीनां तथा तत्स्त्रीणां च प्रदर्शनम् ॥

---

गान्धारी—

आवन्त्यं भीमसेनेन भक्षयन्ति निपातितम् ।
गृध्रगोमायवश्शूरं दूरबन्धुमबन्धुवत् ॥ १

तं पश्य कदनं कृत्वा शत्रूणां मधुसूदन ।
शयानं वीरशयने रुधिरेण समुक्षितम् ॥ २

तं सृगालाश्च कङ्काश्च क्रव्यादाश्च पृथग्विधाः ।
तेन तेन विकर्षन्ति पश्य कालस्य पर्ययम् ॥ ३

शयानं वीरशयने शूरमाक्रन्दकारिणम् ।
आवन्त्यमभितो नार्यो रुदन्त्यः पर्युपासते ॥ ४

प्रातिपीयं महेष्वासं हतं भीमेन बाह्लिकम् ।
प्रसुप्तमिव शार्दूलं पश्य कृष्ण मनस्विनम् ॥ ५

अतीव मुखवर्णोऽस्य निहतस्यापि शोभते ।
सोमस्येवाभिपूर्णस्य पौर्णमास्यां समुद्यतः ॥ ६

पुत्रशोकाभितप्तेन प्रतिज्ञां चैव रक्षता ।
पाकशासनिना सङ्ख्ये वार्धक्षत्रिर्निपातितः ॥ ७

एकादश [1]चमूभर्त्रा रक्ष्यमाणं [2]महात्मना ।
सत्यं चिकीर्षता पश्य हतमेनं जयद्रथम् ॥ ८

सिन्धुसौवीरभर्तारं दर्पपूर्णं मनस्विनम् ।
भक्षयन्ति शिवा गृध्रा जनार्दन जयद्रथम् ॥ ९

संरक्ष्यमाणं भार्याभिर् अनुरक्ताभिरच्युत ।
भषन्तोऽप्यपकर्षन्ति गहनं निम्नमन्तिकात् ॥ १०

तमेताः पर्युपासन्ते वीक्षमाणा महाभुजम् ।
सिन्धुसौवीरकाम्भोजगान्धारयवनस्त्रियः ॥ ११

यदा कृष्णामुपादाय प्राद्रवत् केकयैस्सह ।
तदैव वध्यः पाण्डूनां जनार्दन जयद्रथः ॥ १२

दुश्शलां मानयद्भिस्तु तदा मुक्तो जयद्रथः ।
कथमद्य न तां कृष्ण मानयन्ति स्म ते सुताः ॥ १३

[3]सैन्धवं मे सुता बाला प्रस्खलन्तीव दुःखिता ।
प्रमापयति चात्मानं प्राक्रोशन्ती च पाण्डवान् ॥ १४

किं नु दुःखतरं कृष्ण परं मम भविष्यति ।
यत् सुता विधवा बाला स्नुषाश्च निहतेश्वराः ॥ १५

---

1. ख-घ—चमूं जित्वा
2. अ-ख-घ—महात्मभिः
3. क—सैषा मम सुता बाला विलपन्ती सुदुःखिता ।
ख—सैषा मम सुता

अहो धिग् दुश्शलां पश्य वीतशोकभयामिव ।
भर्तुश्शिर अपश्यन्तीं धावमानामितस्ततः ॥ १६

वारयामास यस्सर्वान् पाण्डवान् पुत्रगर्धिनः ।
स हत्वा विशिखैस्सेनां स्वयं मृत्युवशं गतः ॥ १७

तं सुप्तमिव मातङ्गं वीरं परमदुर्जयम् ।
परिवार्य रुदन्त्येतास् स्त्रियश्चन्द्रोपमाननाः ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
॥ ८१ ॥ स्त्रीपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
॥ अस्मिन्नध्याये १८ श्लोकाः ॥

---

## ॥ त्रयोविंशोऽध्यायः ॥

---

कृष्णं प्रति गान्धार्या भीष्मद्रोणादिगुणानुवर्णनपूर्वकं तत्तच्छरीराणां विलपन्तीनां तत्तत्स्त्रीणां च प्रदर्शनम् ॥

---

गान्धारी—

एष शल्यो हतश्शेते साक्षान्नकुलमातुलः ।
धर्मज्ञेन सता तात धर्मराजेन संयुगे ॥ १

यस्त्वया स्पर्धते नित्यं सर्वत्र [1]मधुसूदन ।

---

1. क-ख-घ—पुरुषर्षभ

स एष निहतश्शेते मद्रराजो महाबलः ॥ २

[1]जयद्रथे यदि ब्रूयुर् अपराधं कथञ्चन ।
मद्रपुत्रे कथं ब्रूयुर् अपराधं विवक्षवः ॥ ३

तेन सङ्गृहृता तात रथमातिरथैर्युधि ।
जयार्थं पाण्डुपुत्राणां तथा तेजोवधः कृतः ॥ ४

अहो धिक् पश्य शल्यस्य पूर्णचन्द्रसुदर्शनम् ।
मुखं पद्मपलाशाक्षं बन्धूकाभोष्ठमव्रणम् ॥ ५

एषा चामीकराभस्य तप्तकाञ्चनसप्रभा ।
आस्याद्विनिस्सृता जिह्वा भक्ष्यते कृष्णपक्षिभिः ॥ ६

युधिष्ठिरेण निहतं शल्यं समितिशोभनम् ।
रुदन्त्यः पर्युपासन्ते मद्रराजकुलाङ्गनाः ॥ ७

एतास्सुसूक्ष्मवसना मद्रराजं नरर्षभम् ।
क्रोशन्त्यभिसमासाद्य क्षत्रियाः क्षत्रियर्षभम् ॥ ८

शल्यं निपतितं नार्यः परिवार्याभितस्स्थिताः ।
वाशितागृष्टयः पङ्के परिमग्नमिवर्षभम् ॥ ९

[2]शल्यं शरणदं शूरं पश्यैनं रथसत्तमम् ।
शयानं वीरशयने शरैर्विशकलीकृतम् ॥ १०

---

1. क—कोशे 'जयद्रथे यदि ब्रूयुरपराधं विवक्षवः । इति अर्धमेकं दृश्यते
2. अ—अर्धद्वयं नास्ति

एष शैलालयो राजा भगदत्तः प्रतापवान् ।
गजाङ्कुशधरश्श्रीमान् शेते युधि निपातितः ॥ ११

यस्य रुक्ममयी माला शिरस्येषा विराजते ।
श्वापदैर्भक्ष्यमाणस्य शोभयत्येव मूर्धजान् ॥ १२

एतेन किल पार्थस्य युद्धमासीत् सुदारुणम् ।
रोमहर्षणमत्युग्रं शक्रस्य बलिना यथा ॥ १३

योधयित्वा महाबाहुर् एष पार्थं धनञ्जयम् ।
संशयं गमयित्वा च कुन्तीपुत्रेण पातितः ॥ १४

यस्य नास्ति समो लोके शौर्ये वीर्ये च कश्चन ।
स एष निहतश्शेते भीष्मो भीमकृदाहवे ॥ १५

पश्य शान्तनवं कृष्ण शयानं सूर्यवर्चसम् ।
[1]युगान्त इव कालेन पातितं सूर्यमम्बरात् ॥ १६

एष जित्वा रणे शत्रूञ् शस्त्रपातेन वीर्यवान् ।
नरसूर्योऽस्तमभ्येति सूर्योऽस्तमिव केशव ॥ १७

शरतल्पगतं वीरं धर्मे देवर्षिणा समम् ।
शयानं वीरशयने पश्य शूरनिषेविते ॥ १८

कर्णिनालीकनाराचैर् आस्तीर्य शयनोत्तमम् ।
आविश्य शेते भगवान् स्कन्दश्शरवणं यथा ॥ १९

1. ख—अर्धचतुष्टयं नास्ति

अतूलपूर्णं गाङ्गेयस् त्रिभिर्बाणैस्समर्पितम् ।
उपधायोपधानार्थं दत्तं गाण्डीवधन्वना ॥ २०

पालयानः पितुश्शास्त्रम् ऊर्ध्वरेता महायशाः ।
एष शान्तनवश्शेते माधवाप्रतिमो रथः ॥ २१

धर्मात्मा तात सर्वज्ञः पारम्पर्येऽथ निर्णये ।
अमर्त्य इव मर्त्यस्सन्नेष प्राणानधारयत् ॥ २२

नास्ति युद्धे [1]समः कश्चिन्न विद्यासु पराक्रमे ।
यत्र शान्तनवो भीष्मश् शेतेऽद्य निहतः परैः ॥ २३

स्वयमेतेन शूरेण पृच्छ्यमानेन पाण्डवैः ।
धर्मज्ञेनाहवे मृत्युर् आख्यातस्सत्यवादिना ॥ २४

[2]प्रनष्टः कुरुवंशस्स पुनर्येन समुद्धृतः ।
स गतः कुरुभिस्सार्धं महाबुद्धिः पराजयम् ॥ २५

धर्मेण कुरवः कं नु परिप्रक्ष्यन्ति माधव ।
हते देवव्रते भीष्मे देवकल्पे नरर्षभे ॥ २६

अर्जुनस्य विनेतारम् आचार्यं सात्यकेस्तथा ।
तं पश्य पतितं द्रोणं कुरूणां गुरुसत्तमम् ॥ २७

---

1. क-घ—कृती कश्चिन्न विद्वान्न पराक्रमी
   ख—कृती कश्चिन्न विद्या न पराक्रमः
2. ख—इदमर्धं नास्ति

अस्त्रं चतुर्विधं वेद यथैव त्रिदशेश्वरः ॥ २७॥

[1]विधिपादो मन्त्रपादः पूजापादस्तथैव च ।
रहस्यपाद इत्येतत् प्रोक्तं पादचतुष्टयम् ॥ २८॥

पैशाचमासुरं गान्धर्वं मानुषं च चतुर्विधम् ।
भार्गवो वा महावीर्यस्तथा द्रोणोऽपि माधव ॥ २९॥

यस्य प्रसादाद्बीभत्सुः पाण्डवः कर्म दुष्करम् ।
चकार स हतश्शेते नैनमस्त्राण्यपालयन् ॥ ३०॥

यं पुरोधाय कुरव आह्वयन्ति स्म पाण्डवान् ।
सोऽयमस्त्रभृतां श्रेष्ठो द्रोणश्शस्त्रैः पृथक् कृतः ॥ ३१॥

यस्य निर्दहतस्सेनां गतिरग्नेरिवाभवत् ।
स भूमौ निहतश्शेते शान्तार्चिरिव पावकः ॥ ३२॥

धनुर्मुष्टिरशीर्णश्च हस्तावापश्च माधव ।
[2]द्रोणस्य निहतस्यापि ददृशे जीवतो यथा ॥ ३३॥

वेदाश्च यस्माच्चत्वारस् सर्वास्त्राणि च केशव ।
अनपेतानि वै शूराद् यथाऽऽदौ प्रजापतेः ॥ ३४॥

वन्दनार्हाविमौ तस्य वन्दिभिर्वन्दितौ शुभौ ।

---

1. क—कोशेऽपि न ख—कोशेऽपिन घ—कोशऽपि न
2. क—निहतस्यापि दृश्यन्ते पाण्डवैर्जीवतो यथा ।
   ख-घ—दृश्यते जीवतो

गोमायवो विकर्षन्ति पादौ [1]क्षत्रशतार्चितौ ॥ ३५॥

द्रोणं द्रुपदपुत्रेण निहतं मधुसूदन ।
कृपी कृपणमन्वास्ते दुःखोपहतचेतना ॥ ३६॥

तां पश्य रुदतीमार्तां मुक्तकेशीमधोमुखीम् ।
हतं पतिमुपास्यन्तीं द्रोणं शस्त्रभृतां वरम् ॥ ३७॥

बाणैर्भिन्नतनुत्राणं धृष्टद्युम्नेन केशव ।
उपासते मृधे द्रोणं जटिला ब्रह्मचारिणी ॥ ३८॥

[2]प्रेतकृत्ये च यतते कृपी कृपणमातुरा ।
हतस्य समरे भर्तुस् सुकुमारी यशस्विनी ॥ ३९॥

अग्नीनाहृत्य विधिवच् चितां प्रज्वाल्य सर्वशः ।
द्रोणमादाय गायन्ति त्रीणि सामानि गायकाः ॥ ४०॥

किरन्ति च चितामेते जटिला ब्रह्मचारिणः ।
धनुर्भिश्शक्तिभिश्चैव रथनीडैश्च माधव ॥ ४१॥

शस्त्रैश्च विविधैरन्यैर् धक्ष्यन्तो भूरितेजसम् ॥ ४२

त एते द्रोणमाधाय गायन्ति च रुदन्ति च ।
सामभिस्त्रिभिरन्तस्थैर् अनुशंसन्ति चापरे ॥ ४३

अग्नावग्निमिवाधाय द्रोणं हुत्वा हुताशने ।

1. क—शिष्य 2. क—अर्धपञ्चकं नास्ति

गच्छन्त्यभिमुखा गङ्गां द्रोणशिष्या द्विजातयः ॥　　४४

अपसव्यं चितां कृत्वा पुरस्कृत्य कृपीं तथा ॥　　४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ ८१ ॥ स्त्रीपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये ४४॥ श्लोकाः ]

---

## ॥ चतुर्विंशोऽध्यायः ॥

---

कृष्णं प्रति गान्धार्या भूरिश्रवःप्रभृतिशरीराणां तत्तत्स्त्रीणां च प्रदर्शनम् ॥

---

गान्धारी—

सौमदत्तिं च पश्यैनं युयुधानेन पातितम् ।
वितुद्यमानं बहुभिर् विविधैर्माधवान्तिके ॥　　१

पुत्रशोकाभिसन्तप्तस् सोमदत्तो जनार्दन ।
युयुधानं महेष्वासं गर्हयन्निव दृश्यते ॥　　२

असौ तु भूरिश्रवसो माता शोकपरिप्लुता ।
आश्वासयति भर्तारं सोमदत्तमनिन्दिता ॥　　३

दिष्ट्या त्वियं महाराज दारुणं भरतक्षयम् ।
कुरूणां कदनं घोरं युगान्तं नानुपश्यसि ॥　　४

[1]अमूस्तु भूरिश्रवसो भार्यास्सात्यकिना हतम् ।
परिवार्यानुशोचन्ति भर्तारमसितेक्षणाः ॥　　५

एता विलप्य बहुलं भर्तुश्शोकेन कर्शिताः ।
पश्यन्त्यभिमुखा भूमौ कृपणं बत केशव ॥　　६

बीभत्सुरतिबीभत्सं कर्मेदमकरोत् कथम् ।
प्रमत्तस्य यदच्छेत्सीद् बाहुं शूरस्य यज्वनः ॥　　७

ततः पापतरं कर्म कृतवानिह सात्यकिः ।
यस्य प्रायोपविष्टस्य प्राहार्षीत् संशितात्मनः ॥　　८

एको द्वाभ्यां हतश्शेते क्षत्रधर्मेण धार्मिकः ।
इति यूपध्वजस्यैता भार्याः क्रोशन्ति माधव ॥　　९

भार्या यूपध्वजस्यैषा करसम्मितमध्यमा ।

---

1. ख-घ—दिष्ट्या यूपध्वजं वीरं पुत्रं भूरिसहस्रदम् ।
अनेकक्रतुयज्वानं निहतं नाद्य पश्यसि ॥
दिष्ट्या स्नुषाणामाक्रन्दे घोरं विलपितं बहु ।
न शृणोषि महाराज सारसीनामिवार्णवे ॥
एकवस्त्रानुसंवीताः प्रकीर्णासितमूर्धजाः ।
स्नुषास्ते परिधावन्ति हतापत्या हतेश्वराः ॥
श्वापदैर्भक्ष्यमाणं त्वम् अहो दिष्ट्या न पश्यसि ॥
छिन्नबाहुं नरव्याघ्रम् अर्जुनेन निपातितम् ।
शलं विनिहतं सङ्ख्ये भूरिश्रवसमेव च ॥
स्नुषाश्च विधवास्सर्वा दिष्ट्या नाद्येह पश्यसि ॥
दिष्ट्या तत् काञ्चनं छत्रं यूपकेतोर्महात्मनः ।
विनिकीर्णं रथोपस्थे सौमदत्तेर्न पश्यसि ॥　　[अधिकः पाठः]

कृत्वोत्सङ्गे भुजं भर्तुः कृपणं पर्यदेवयत् ॥ १०

सौमदत्तिप्रिया—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ११

[1]अयं स हन्ता शत्रूणां [2]मित्राणामभयङ्करः ।
प्रदाता गोसहस्राणां क्षत्रियान्तकरः करः ॥ १२

वासुदेवस्य सान्निध्ये पार्थेनाक्लिष्टकर्मणा ।
युध्यतस्समरेऽन्येन प्रमत्तस्य निपातितः ॥ १३

किं नु वक्ष्यति संसत्सु कथासु च जनार्दनः ।
अर्जुनस्य तु तत् कर्म स्वयं चापि किरीटवान् ॥ १४

गान्धारी—

इत्येवं गर्हयित्वैषा तूष्णीमास्ते वराङ्गना ।
तामेतामनुशोचन्ति सपत्न्या[3]स्स्वामिवल्लभाः ॥ १५

गान्धारराजश्शकुनिर् बलवान् सत्यविक्रमः ।
निहतस्सहदेवेन भागिनेयेन मातुलः ॥ १६

यः पुरा हेमदण्डाभ्यां व्यजनाभ्यां च वीज्यते ।

---

1. ख—अयं श्लोको नास्ति
2. घ—अयं पादोऽनन्तरश्च न स्तः
3. क—स्सौम्यवल्लभाः ख-घ—स्स्वामिव स्नुषाम्

[1]स एष पक्षिभिः पक्षैश् शयान उपवीज्यते ॥ १८

यश्च रूपाणि कुरुते शतशोऽथ सहस्रशः ।
तस्य मायाविनो माया दग्धाः पाण्डवतेजसा ॥ १८

मायया निकृतिप्रज्ञो [2]यो जिगाय युधिष्ठिरम् ।
सभायां विपुलं राज्यं स कथं जीवितं जहौ ॥ १९

शकुन्तारशकुनिं कृष्ण समन्तात् पर्युपासते ।
कितवं मम पुत्राणां विनाशायोपशिक्षितम् ॥ २०

एतेनैतन्महद्वैरम् आहितं पाण्डवैस्सह ।
वधाय मम पुत्राणाम् आत्मनस्सगणस्य च ॥ २१

यथैव मम पुत्राणां लोकारशस्त्रजिताः प्रभो ।
एवमस्यापि दुर्बुद्धेर् लोकारशस्त्रेण निर्जिताः ॥ २२

कथं च नायं तत्रापि पुत्रान् मे भ्रातृभिस्सह ।
विरोधयेदृजुप्रज्ञान् अनृजुर्मधुसूदन ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ ८१ ॥ स्त्रीपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये २३ श्लोकाः]

---

1. घ—इदमर्धं नास्ति
2. क—जितवान् यो युधिष्ठिरम् अ—योजनाय युधिष्ठिरः

## ॥ पञ्चविंशोऽध्यायः ॥



कृष्णं प्रति गान्धार्या कुरुपाण्डवसङ्क्षयस्य कृष्णोपेक्षणहेतुकत्व-कथनपूर्वकं सर्वबन्धुसङ्क्षयाय शापदानम् ॥

गान्धारी—

काम्भोजं पश्य दुर्धर्षं काम्भोजास्तरणोचितम् ।
शयानमृषभस्कन्धं हतं पांसुषु माधव ॥ १

अस्य क्षतजसन्दिग्धौ बाहू चन्दनरूषितौ ।
अवेक्ष्य कृपणं भार्या विलपत्यतिदुःखिता ॥ २

काम्भोजभार्या—

इमौ तौ परिघप्रख्यौ बाहू शुभतलाङ्गुली ।
[1]ययोर्विवरमापन्नां [2]मां रतिर्मा पुरा जहत् ॥ ३

कां गतिं तु गमिष्यामि त्वया हीना नरेश्वर ।
दूरबन्धुरनाथाऽद्य ह्यतीव मधुरस्वरा ॥ ४

गान्धारी—

आतपे क्लाम्यमानानां विविधानामिव स्रजाम् ।
क्लान्तानामपि नारीणां जहाति श्रीर्न वै तनुम् ॥ ५

शयानमभितश्शूरं कलिङ्गं मधुसूदन ।
पश्य दीप्ताङ्गदयुतं प्रतिमानं धनुष्मताम् ॥ ६

1. ख—अर्धचतुष्टयं नास्ति 2. क—प्रीतिर्मा पुनराजहत्

मागधानामधिपतिं जयत्सेनं जनार्दन ।
परिवार्य प्ररुदिता मागध्यः पश्य योषितः ॥ ७

हरिण्यायतनेत्राणां सुस्वराणां जनार्दन ।
मम श्रुतिहरो नादो मनो मोहयतीव मे ॥ ८

प्रकीर्णसर्वाभरणा रुदन्त्यश्शोककर्शिताः ।
स्वास्तीर्णशयनोपेता मागध्यश्शेरते भुवि ॥ ९

कोसलानामधिपतिं राजपुत्रं बृहद्बलम् ।
भर्तारं परिवार्यैताः पृथक् प्ररुदितास्स्त्रियः ॥ १०

अस्य गात्रगतान् बाणान् कार्ष्णिबाहुबलेरितान् ।
उद्धरन्त्यसुखाविष्टा मूर्छमानाः पुनः पुनः ॥ ११

आसां सर्वानवद्यानाम् आतपेन परिक्लमात् ।
प्रम्लाननलिनाभानि भान्ति वक्त्राणि माधव ॥ १२

[1]द्रोणेन निहताश्शूराश् शेरते रुधिरोक्षिताः ।
धृष्टद्युम्नसुतास्सर्वे भ्रातरो हेममालिनः ॥ १३

रथाश्ववायुं चापार्चिं शरशक्तिगदेन्धनम् ।
द्रोणमासाद्य निर्दग्धाश् शलभा इव पावकम् ॥ १४

तथैव निहताश्शूराश् शेरते रुचिराङ्गदाः ।
द्रोणेनाभिहतास्सङ्ख्ये भ्रातरः पञ्च केकयाः ॥ १५

1. घ—पञ्चार्धानि न सन्ति

तप्तकाञ्चनवर्णाभास् ताम्रध्वजरथस्रजः ।
भासयन्ति महीं भासा ज्वलिता इव पावकाः ॥ १६

द्रोणेन द्रुपदं सङ्ख्ये पश्य माधव पातितम् ।
महाद्विपमिवारण्ये सिंहेन महता हतम् ॥ १७

पाञ्चालराज्ञो विमलं पुण्डरीकाक्ष पाण्डरम् ।
आतपत्रं समाभाति शरदीव दिवाकरः ॥ १८

एतास्तु द्रुपदं वृद्धं स्नुषा भार्याश्च दुःखिताः ।
दग्ध्वा गच्छन्ति पाञ्चालराजानमपसव्यतः ॥ १९

धृष्टकेतुं महेष्वासं चेदिपुङ्गवमङ्गनाः ।
द्रोणेन निहतं शूरं हरन्ति हृतचेतसः ॥ २०

द्रोणास्त्रमभिहत्यैष विमर्दे मधुसूदन ।
महेष्वासो हतश्शेते वज्राहत इव द्रुमः ॥ २१

एष चेदिपतिश्शूरो धृष्टकेतुर्महारथः ।
शेते विनिहतस्सङ्ख्ये हत्वा [1]शत्रून् महारथः ॥ २२

वितुद्यमानं विहगैस् तं भार्याः प्रत्युपस्थिताः ।
[2]चेदिराजं हृषीकेश हतं सबलबान्धवम् ॥ २३

दशार्ह[3]पुत्रजं वीरं शयानं सत्यविक्रमम् ।

---

1. क-ख-ग—शत्रून् सहस्रशः 2. ख—अर्धसप्तकं नास्ति
3. क—इतः अर्धपञ्चकं नास्ति

आदायाङ्के रुदन्त्येता चेदिराजवराङ्गनाः ॥ २४

आर्यपुत्रं हृषीकेशं सुकेशं चारुकुण्डलम् ।
द्रोणेन समरे पश्य निकृत्तं बहुभिश्शरैः ॥ २५

वितुद्यमानमाजिस्थं युध्यमानं परैस्सह ।
नाजहात् पतितं लक्ष्मीर् अद्यापि मधुसूदन ॥ २६

एवं ममापि पुत्रस्य पुत्रः पितरमन्वगात् ।
दुर्योधनं महाबाहो लक्ष्मणः परवीरहा ॥ २७

विन्दानुविन्दावावन्त्यौ पतितौ पश्य माधव ।
वनेषु पुष्पितौ सालौ मरुता गलिताविव ॥ २८

काञ्चनाङ्गदवर्माणौ बाणखड्गधनुर्धरौ ।
ऋषभप्रतिरूपाक्षौ शयानौ विमलस्रजौ ॥ २९

अवध्याः पाण्डवाः कृष्ण सर्व एव त्वया सह ।
ये मुक्ता द्रोणभीष्माभ्यां कर्णाद्वैकर्तनात् कृपात् ॥ ३०

दुर्योधनाद्द्रोणसुतात् सैन्धवाच्च जयद्रथात् ।
सौमदत्तेर्विकर्णाच्च शूराच्च कृतवर्मणः ॥ ३१

ये हन्युश्शस्त्रवेगेन देवानपि नरर्षभाः ।
त इमे निहतास्सर्वे पश्य कालस्य पर्ययम् ॥ ३२

नातिभारोऽस्ति दैवस्य ध्रुवं माधव कश्चन ।
यत्रेमे निहताश्शूराः क्षत्रियाः क्षत्रियैस्सह ॥ ३३

शूराश्च कृतविद्याश्च मम पुत्रा मनस्विनः ।
तथैव निहताः कृष्ण मम पुत्रा यशस्विनः ॥ ३४

यथैवाकृतकामस्त्वम् उपप्लाव्यं गतः पुनः ॥ ३४॥

शन्तनोश्चैव पुत्रेण प्राज्ञेन विदुरेण च ।
तदैवोक्तास्मि मा स्नेहं कुरुष्वात्मसुतेष्विति ॥ ३५॥

[1]न तयोर्वचनं तात मिथ्या भवितुमर्हति ।
अचिरेणैव मे पुत्रा भस्मीभूता जनार्दन ॥ ३६॥

वैशम्पायनः—

इत्युक्त्वा न्यपतद्भूमौ गान्धारी शोककर्शिता ।
दुःखोपहतविज्ञाना धैर्यमुत्सृज्य भारत ॥ ३७॥

ततः कोपपरीताङ्गी दुःखशोकपरिप्लुता ।
जगाद शौरिं रोषेण गान्धारी व्यथितेन्द्रिया ॥ ३८॥

गान्धारी—

पाण्डवा धार्तराष्ट्राश्च क्रुद्धाः कृष्ण परस्परम् ।
उपेक्षिता विनश्यन्तस् त्वया कस्माज्जनार्दन ॥ ३९॥

शक्तेन बहुभृत्येन विपुले तिष्ठता बले ॥ ४०

उभयत्र समत्वेन श्रुतवाक्येन चैव हि ।
इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन ॥ ४१

1. क—न तयोर्दर्शनात्तात ख-ध—तनयोर्दर्शनं तात

यस्मात् त्वया महाबाहो फलं तस्मादवाप्नुहि ॥ ४१॥
पतिशुश्रूषया यन्मे तपः किञ्चिदुपार्जितम् ।
तेन त्वां दुरवापेन शपे चक्रगदाधर ॥ ४२॥
यस्मात् परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः ।
उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन् वधिष्यसि ॥ ४३॥
त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन ।
हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः ॥ ४४॥
अनाथवदभिज्ञातो लोकेष्वनभिलक्षितः ।
कुत्सितेनाभ्युपायेन निधनं समवाप्स्यसि ॥ ४५॥
तवाप्येवं हतसुता निहतज्ञातिबान्धवाः ।
स्त्रियः परिपतिष्यन्ति यथेमा भरतस्त्रियः ॥ ४६॥

वैशम्पायनः—

[1]तच्छ्रुत्वा वचनं घोरं वासुदेवो महामनाः ।
उवाच देवीं गान्धारीम् इदमभ्युत्स्मयन्निव ॥ ४७॥

श्रीभगवान्—

संहर्ता वृष्णिचक्रस्य नान्योऽस्मद् विद्यते शुभे ।
जानेऽहमेतदप्येवं जीर्णे वदसि क्षत्रिये ॥ ४८॥
अवध्यास्ते नरैरन्यैर् अपि वा देवदानवैः ।
परस्परकृतं नाशम् अतः प्राप्स्यन्ति यादवाः ॥ ४९॥

1. ख—अर्धपञ्चकं नास्ति

वैशम्पायनः—

इत्युक्तवति दाशार्हे पाण्डवास्त्रस्तमानसाः ।
बभूवुर्भृशसंविग्ना निराशास्तेऽपि जीविते ॥ ५०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ ८१ ॥ स्त्रीपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये ५०॥ श्लोकाः]
[स्त्रीपर्व समाप्तम्]

---

## ॥ षड्विंशोऽध्यायः ॥
(श्राद्धपर्व)

शोकाद्भुवि पतिताया गान्धार्याः कृष्णेनाश्वासनम् ॥ १ ॥ युधिष्ठिराज्ञया विदुरसञ्जयादिभिर्मृतानां दाहक्रियाकरणम् ॥ २ ॥

---

श्रीभगवान्—

उत्तिष्ठोत्तिष्ठ गान्धारि मा च शोके मनः कृथाः ।
तवैव ह्यपराधेन कुरवो निधनं गताः ॥ १

या त्वं पुत्रं दुरात्मानं इष्टमत्यन्तमानिनम् ।
दुर्योधनं पुरस्कृत्य दुष्कृतं साधु मन्यसे ॥ २

दुष्कृतं चैव परुषं वृद्धानां शासनातिगम् ।
कथमात्मकृतं दोषं मय्याधातुमिहेच्छसि ॥ ३

मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।

दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ४

[1]तपोर्थिनं ब्राह्मणी दत्तगर्भा
गौर्वोढारं धावितारं तुरङ्गः ।
शूद्रा दासं पशुपालं तु वैश्या
वधार्थिनं त्वद्विधा राजपुत्री ॥ ५

वैशम्पायनः—

तच्छ्रुत्वा वासुदेवस्य पुनरुक्तं वचोऽप्रियम् ।
तूष्णीं बभूव गान्धारी शोकव्याकुललोचना ॥ ६

धृतराष्ट्रस्तु राजर्षिर् निगृह्याबुद्धिजं तमः ।
पर्यपृच्छत धर्मात्मा धर्मराजं युधिष्ठिरम् ॥ ७

धृतराष्ट्रः—

जीवतां परिमाणज्ञस् सैन्यानामसि पाण्डव ।
हतानां यदि जानीषे परिमाणं ब्रवीहि मे ॥ ८

युधिष्ठिरः—

दशायुतसहस्राणि सहस्राणि च विंशतिः ।
कोट्यष[2]ष्टिश्च षट् चैव अस्मिन् राजन् मृधे हताः ॥ ९

आलक्ष्याणां तु शूराणां सहस्राणि चतुर्दश ।
दश चान्यानि राजेन्द्र शतं षष्टिश्च भारत ॥ १०

---

1. क—तं पार्थिवं ब्राह्मणी धत्तगर्भं ख—तपेत्थियं ब्राह्मणी धत्तगर्भं
घ—तपोद्भवं ब्राह्मणि धत्तगर्भं

2. अ—ष्ट्यश्च षटैव घ—ष्टिश्च षट् सैन्यम्

धृतराष्ट्रः—

युधिष्ठिर गतिं कां ते गताः पुरुषसत्तमाः ।
आचक्ष्व मे महाबाहो सर्वज्ञो ह्यसि मे मतः ॥　　११

युधिष्ठिरः—

यैर्हतानि शरीराणि तस्मिन् परमसङ्कुले ।
[1]देवराजसमास्ते तु देवराजेन पूजिताः ॥　　१२

[2]ये तु हृष्टेन मनसा मर्तव्यमिति भारत ।
गन्धर्वलोके पूज्यन्ते ते गन्धर्वैस्समागताः ॥　　१३

ये तु सङ्ग्रामभूयिष्ठा याचमानाः पराङ्मुखाः ।
[3]शस्त्रेण निधनं प्राप्तास् ते गता गुह्यकान् प्रति ॥　　१४

[4]विध्यमानाः परैर्ये तु ह्रीयमाणा निरायुधाः ।
ह्रीनिषेधा महात्मानः परानभिमुखान् रणे ॥　　१५

भिद्यमानाश्शितैर्बाणैः क्षत्रधर्मपरायणाः ।
हतास्ते ब्रह्मसदनं गता वीरास्सुवर्चसः ॥　　१६

[5]क्षत्रधर्मेण निहतास् ते गताः परमां गतिम् ।

---

1. क—देवराजसमां ल्लोकान् गतास्ते सत्यविक्रमाः ।
   घ—इदमनन्तरार्धं च नास्ति
2. क—ये त्वहृष्टेन मनसा कर्तव्य　ख—इदमर्धं नास्ति
3. ख—अर्धषट्कं नास्ति
4. क—वध्यमानाः परैर्येतु ह्रीयमाना　घ—इदमर्धचतुष्टयं नास्ति
5. क—इदमर्धं नास्ति

ये तत्र निहता राजन्नन्तरायोधनं प्रति ॥ १७

यथाकथञ्चित् पुरुषास् ते गता[1]ह्युत्तरान् कुरून् ॥ १७॥

धृतराष्ट्रः—

[2]येन ज्ञानबलेनैव पुत्र पश्यसि सिद्धवत् ।

तन्मे वद महाबाहो श्रोतव्यं यदि वै मया ॥ १८॥

युधिष्ठिरः—

निदेशाद्भवतः पूर्वं वने विचरता मया ।

तीर्थयात्राप्रसङ्गेन सम्प्राप्तो यमुनातटम् ॥ १९॥

देवर्षिर्लोमशो दृष्टस् ततः प्राप्तोऽस्म्यनुस्मृतिम् ।

दिव्यं चक्षुरनुप्राप्तं ज्ञानयोगेन वै पुरा ॥ २०॥

धृतराष्ट्रः—

यथाऽनाथा जनास्तात नाथवन्तश्च [3]पाण्डव ।

कच्चित्तेषां शरीराणि धक्ष्यन्ते विधिपूर्वकम् ॥ २१॥

युधिष्ठिरः—

[4]न येषां शान्तिकर्तारो न च ये ह्याहिताग्नयः ।

वयं तु तेषां कुर्मोऽद्य बहुत्वात् तात कर्मणः ॥ २२॥

यान् सुपर्णाश्च गृध्राश्च विकर्षन्ति ततस्ततः ।

---

1. ख-घ—ह्युत्तमां गतिम्

2. क—येन ज्ञानबलेनैवं ख-घ—अर्धषट्कं नास्ति

3. क—ये त्वनाथा जनस्यास्य सनाथा ये च भारत। ख—बान्धवाः

4. क—न तेषां मन्त्रसंस्कर्ता न च तेऽत्र हि मानवाः।
वयं च कस्य कुर्याम बहुत्वान्मृतकर्मणा ।

तेषां सङ्कर्षणा लोका भविष्यन्ति न संशयः ॥ २३॥

वैशम्पायनः—

एवमुक्त्वा महाप्राज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
आदिदेश सुधर्माणं धौम्यं सूतं च सञ्जयम् ॥ २४॥

विदुरं च महाबुद्धिं युयुत्सुं चापि कौरवम् ।
इन्द्रसेनमुखान् भृत्यान् सूतांश्चैव च सर्वशः ॥ २५॥

युधिष्ठिरः—

भवन्तः कारयन्त्वेषां प्रेतकार्याणि सर्वशः ।
यथा नाथवतां किञ्चिच् छरीरं न विनश्यते ॥ २६॥

वैशम्पायनः—

शासनाद्धर्मराजस्य क्षत्ता सूतश्च सञ्जयः ।
सुधर्मा धौम्यसहित इन्द्रसेनादयस्तथा ॥ २७॥

चन्दनागरुकाष्ठानि [1]तथा कालेयकान्यपि ।
घृतं तैलं च गन्धांश्च क्षौमाणि वसनानि च ॥ २८॥

समाहृत्य महार्हाणि दारुणां चैव सञ्चयान् ।
रथांश्च मृदितांस्तत्र नानाप्रहरणानि च ॥ २९॥

चितां कृत्वा प्रयत्नेन यथा मुख्यान् नराधिपान् ।
दाहयामासुरव्यग्रा विधिदृष्टेन कर्मणा ॥ ३०॥

दुर्योधनं च राजानं भ्रातृंश्चास्य महारथान् ।

1. घ—इतः अर्धपञ्चकं नास्ति

शल्यं शलं च राजानं भूरिश्रवसमेव च ॥ ३१॥

जयद्रथं च राजानम् अभिमन्युं च भारत ।
दौश्शासनिं लक्ष्मणं च धृष्टकेतुं च भारत ॥ ३२॥

बृहद्बलं सोमदत्तं सृञ्जयं च महारथम् ।
राजानं क्षेमधन्वानं विराटद्रुपदौ तथा ॥ ३३॥

शिखण्डिनं च पाञ्चाल्यं धृष्टद्युम्नं च भारत ।
युधामन्युं च दुर्धर्षम् उत्तमौजसमेव च ॥ ३४॥

कोसलेन्द्रं द्रौपदेयान् शकुनिं चैव सौबलम् ।
अचलं पुष्कलं चैव भगदत्तं च भारत ॥ ३५॥

कर्णं वैकर्तनं चैव सहपुत्रममर्षणम् ।
केकयांश्च महेष्वासांस् त्रिगर्तांश्च महारथान् ॥ ३६॥

घटोत्कचं राक्षसेन्द्रं बकभ्रातरमेव च ।
अलम्बुसं च राजानं जलसन्धं च पार्थिवम् ॥ ३७॥

अन्यांश्च पार्थिवाञ् छूरान् शतशोऽथ सहस्रशः ।
घृतधाराहुतैर्दीप्तैः पावकैस्समदाहयन् ॥ ३८॥

पितृमेधांश्च केषाञ्चित् पार्थिवानां महात्मनाम् ।
सामानि चान्वगीयन्त तेऽन्वशासत चापरे ॥ ३९॥

साम्नामृचां च नादेन स्त्रीणां च रुदितस्वनैः ।
कश्मलं सर्वभूतानां तदानीमन्वपद्यत ॥ ४०॥

हुताश्च तत्र दीप्ताश्च दीप्यमानाश्च पावकाः ।
नभसीवान्वदृश्यन्त ग्रहास्तन्वभ्रसंवृताः ॥ ४१॥

ये चाप्यनाथास्तत्रासन् नानादेशसमागताः ॥ ४२

तांश्च सर्वान् समानीय राशीन् कृत्वा सहस्रशः ।
चितादारुभिरव्यग्रैः प्रभूतस्नेहमूर्छितैः ॥ ४३

दाहयामास विदुरो धर्मराजस्य शासनात् ॥ ४३॥

कारयित्वा क्रियास्तेषां कुरुराजो युधिष्ठिरः ।
धृतराष्ट्रं पुरस्कृत्य गङ्गामभिमुखोऽगमत् ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ ८२ ॥ श्राद्धपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ४४॥ श्लोकाः ]

## ॥ सप्तविंशोऽध्यायः ॥

मृतानामुदकदानाय धृतराष्ट्रयुधिष्ठिरादिभिर्गङ्गातीरगमनम् ॥ १ ॥ उदकदानारम्भे कुन्त्या युधिष्ठिरं प्रति कर्णस्य स्वपुत्वत्वकथनपूर्वकं तस्मा उदकदानचोदना ॥ २ ॥ धृतराष्ट्रयुधिष्ठिरादिभिः बन्धुभ्यो जलदानम् ॥ ३ ॥

---

ते समासाद्य गङ्गां तु शिवां पुण्यजलान्विताम् ।
[1]ह्लादिनीं वप्रसम्पन्नां महानूपां महावनाम् ॥ १

भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च ।
कवचानि विचित्राणि गङ्गामवजगाहिरे ॥ २

ततः पितॄणां पुत्राणां गुरूणां स्वजनस्य च ।
भ्रातॄणामार्यकाणां च पतीनां च कुरुस्त्रियः ॥ ३

उदकं चक्रिरे सर्वा रुदन्त्यो भृशदुःखिताः ॥ ३॥
सुहृदां चापि धर्मज्ञाः प्रचक्रुस्सलिलक्रियाः ॥ ४

उदके क्रियमाणे तु वीराणां वीरपत्निभिः ।
सूपतीर्थोऽभवद्गङ्गा भूयो विप्रससार च ॥ ५

[2]तन्महोदधिसङ्काशं निरानन्दमनुत्सवम् ।
वीरपत्नीभिराकीर्णं गङ्गातीरमशोभत ॥ ६

---

1. क—संह्लादिनीं च प्रपदन्तततो भूपा महाबलाः । ख—ह्लादिनीं विप्र
2. ख—पञ्चार्धानि न सन्ति

ततः कुन्ती महाराज रुदन्ती शोककर्शिता ।
व्रीडया मन्दया वाचा पुत्रान् वचनमब्रवीत् ॥ ७

कुन्ती—

यस्स शूरो महेष्वासो रथयूथपयूथपः ।
अर्जुनेन हतस्सङ्ख्ये वीरलक्षणलक्षितः ॥ ८

यं सूतपुत्रं मन्यध्वं राधेय इति पाण्डवाः ।
[1]यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः ॥ ९

अत्यरिच्यत यस्सर्वान् पुरा वस्सपदानुगान् ।
दुर्योधनबलं सर्वं यः प्रकर्षन् व्यरोचत ॥ १०

यस्य नास्ति समो लोके पृथिव्यामपि कश्चन ।
[2]योऽवृणीत यशश्शूरः प्राणैरपि सदा भुवि ॥ ११

सत्यसन्धस्य शूरस्य सङ्ग्रामेष्वपलायिनः ।
कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः ॥ १२

स हि ते पूर्वजो भ्राता भास्करान्मय्यजायत ।
कुण्डली कवची शूरो दिवाकरसमप्रभः॥ १३

वैशम्पायनः—

श्रुत्वा तु पाण्डवास्सर्वे मातुर्वचनमप्रियम् ।
कर्णमेवाभ्यरोचन्त भूयश्चात्यातुरा भवन् ॥ १४

---

1. क-ख—नास्तीदमर्धम्
2. ख—इदमर्धं नास्ति

ततस्स पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः ।
उवाच मातरं वीरो निश्वसन्निव पन्नगः ॥ १५

युधिष्ठिरः—

[1]यश्शरोर्मिध्वजावर्तो महाभुजमहाग्रहः ।
तलशब्दप्रणदितो महारथमहाद्रुमः ॥ १६

यस्येषुपातमासाद्य कोऽन्यस्तिष्ठेद्धनञ्जयात् ॥ १६॥

[2]कथं पुत्रो भवत्याऽऽर्यः देवगर्भः पुराऽभवत् ।
कुण्डली कवची शूरो दिवाकरसमप्रभः ॥ १७॥

[3]यस्य बाहुप्रतापेन तापितास्सर्वतो वयम् ।
तमग्निमिव वस्त्रेण कथं छादितवत्यसि ॥ १८॥

यस्य बाहुप्रभावेन [4]वैरमस्मास्वरोचयत् ।
[5]सुयोधनस्तु तं ज्येष्ठं कथं नोदितवत्यसि ॥ १९॥

तथा कर्णं महेष्वासं धार्तराष्ट्रैरुपासितम् ।
[6]आर्योपायैर्यथाऽस्माभिर् बलं गाण्डीवधन्वनः ॥ २०॥

---

1. ख-घ—अर्धद्वयं नास्ति
2. ख—नास्तीदमर्धम्
3. घ—अर्धद्वयंना स्ति
4. क-ख—इतः अर्धद्वयं नास्ति
5. ख—अर्धचतुष्टयं नास्ति
6. घ—अर्धद्वयं नास्ति क—आर्योपायैर्यशोऽस्माभिः

भूमिपानां च सर्वेषां लोके बलवतां वरम् ।
नान्यः कुन्तीसुताज्जिष्णोर् निहन्याद्रथिनो रथी ॥　　२१॥

[1]स नः प्रथमजो भ्राता सर्वशस्त्रभृतां वरः ।
असूत तं भवत्यग्रे कथमद्भुतविक्रमम् ॥　　२२॥

अहो भवत्या मन्त्रेण गृहीतेन वयं हताः ।
निधनेन हि कर्णस्य पीडितास्सहबान्धवाः ॥　　२३॥

अभिमन्योर्विनाशाद्धि द्रौपदेयवधादपि ।
पाञ्चालानां वधाच्चापि कुरूणां घातनादपि ॥　　२४॥

ततश्शतगुणं दुःखम् इदमापतितं महत् ॥　　२५

कर्णमेवानुशोचामि दग्धामग्नाविवाहुतिम् ।
न च मे किञ्चिदप्राप्यं भवेदपि दिवि स्थितम् ॥　　२६

न च स्म वैशसं घोरं कौरवाणां कृतं भवेत् ॥　　२६॥

वैशम्पायनः—

एवं विलप्य करुणं धर्मराजो युधिष्ठिरः ।
वदन् स शनकै राजन् चकारास्योदकं प्रभुः ॥　　२७॥

ततो विनेदुस्सहसा स्त्रियः पुम्भिश्च सर्वशः ।
अभितो या स्थितास्तत्र तस्मिन्नुदककर्मणि ॥　　२८॥

---

1. ख—नास्तीदमर्धम्

ततस्समानयामास कर्णस्य च परिच्छदम् ।
स्त्रियः कुरुपतिश्श्रीमान् प्रेम्णा भ्रातुर्युधिष्ठिरः ॥ २९॥

स ताभिस्सह धर्मात्मा प्रेतकार्यमनन्तरम् ।
सर्वं चकार कर्णस्य विधिवद्भूरिदक्षिणम् ॥ ३०॥

स राजा धृतराष्ट्रश्च कृताञ्जलिरतन्द्रितः ।
समुत्ततार गङ्गायां भार्यया सह भारत ॥†* ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
॥ ८२ ॥ श्राद्धपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ३१॥ श्लोकाः]
[श्राद्धपर्व समाप्तम्]
स्त्रीपर्व समाप्तम्

---

॥ अस्मिन् स्त्रीपर्वणि ७८५॥ श्लोकाः ॥

---

† ख—वासुदेवं पुरस्कृत्य सर्वे ते विविशुः पुरम् ॥
[अधिकः पाठः]

* क-ख-घ—धर्म्यं यशस्यमायुष्यं शत्रुनाशनमेव च ।
गर्भाधानं पुंसवनम् आख्यानं परिकीर्तितम् ॥
भारतं च महाश्चर्यं यश्शृणोति दिने दिने ।

सर्वतीर्थाभिषेकस्य फलमाप्नोति मानवः ॥
भारतं शृणुयान्नित्यं भारतं परिकीर्तयेत् ।
भारतं भवने यस्य तस्य हस्तगतो जयः ॥
भारतं परमं पुण्यं भारते विविधाः कथाः ।
भारतं सेव्यते देवैर् भारतं परमं पदम् ॥
भारतं सर्वशास्त्राणाम् उत्तमं भरतर्षभ ।
भारतात् प्राप्यते श्रेष्ठो मोक्षस्तद्धि ब्रवीमि ते ॥
पर्वैकादशमं श्रुत्वा अश्वमेधफलं लभेत् ॥
विमानं समधिष्ठाय काञ्चनं साप्सरोगणः ।
दिवं याति महानन्दो युगानां विंशतिं विशेत् ॥

इमं महायुद्धमखं महात्मनां
शृणोति नूनं पठते च यः पुमान् ।
स सम्यगिष्टस्य मखस्य यत् फलं
तदाप्नुयाद्वंशविवृद्धिमात्मनः ॥

मखो हि विष्णुर्भगवान् सनातनो
वहन्ति पञ्चाग्न्यनिलेन्दुभानवः ।
विनष्टदुःस्वप्नकथश्च यः पठेत्
स सर्वलोकान् विचरन् सुखी भवेत् ॥

[अधिकः पाठः]

अतःपरं शान्तिपर्व भविष्यति तस्यायमाद्यः श्लोकः ॥



वैशम्पायनः—

कृत्वोदकं ते सुहृदां सर्वेषां पाण्डुनन्दनाः ।
विदुरो धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः ॥

॥ श्रीरस्तु ॥

## महाभारतस्य शल्यपर्वस्थानां विषयाणाम्

# अक्षरमातृकाक्रमेण सूचनम्


| | अध्यायः-पुटम् |
|---|---|
| अग्नितीर्थमहिमानुवर्णनम् | ४२-३४५ |
| अर्जुनपराक्रमवर्णनम् | २१-१६७ |
| अर्जुनयुद्धम् | २६-१९८ |
| अर्जुनेन श्रीभगवन्तं प्रति भीष्मादिविनाशेऽपि महद्भिश्शमविधानानुशासनेऽपि च दुर्योधनदुर्नयाद्युद्धाविरामगोचरानुतापप्रदर्शनम् | २१-१६३ |
| अर्जुनाद्भीतेन दुर्योधनबलेन स्वस्वपुत्रादिभिस्सह पलायनम् | २२-१६९ |
| अर्जुनेन श्रीभगवन्तं प्रति युधिष्ठिररक्षणायान्तरनुतापेऽपि दुर्योधनवधप्रतिज्ञानकारणकथनपूर्वकं रणस्थलगमनचोदनम् | २१-१६६ |
| अरुन्धतीमहिमानुवर्णनम् | ४३-३५१ |
| अश्वत्थामवचनाच्छल्येन सैनापत्याङ्गीकरणम् | ५-३३ |
| अश्वत्थामादिभिः भूपतितदुर्योधनदर्शनेन शोचनम् | ५९-४५९ |
| अश्वत्थाम्ना दुर्योधनं प्रति संलापपूर्वकमनुशोचनम् | ५९-४६० |
| अश्वत्थाम्ना सपाञ्चालादीनां पाण्डवानां रात्रौहननप्रतिज्ञानम् | ५९-४६३ |
| अश्वत्थाम्नः सैनापत्येऽभिषेचनम् | ५९-४६४ |
| आर्ष्टिषेणचरितम् | ३५-२८८ |
| इन्द्रेण स्रुचावतीं प्रतीष्टलाभाय बदरपचनचोदनम् | ४३-३४८ |
| इन्द्रेण स्रुचावतीं प्रति वरप्रदानम् | ४३-३५० |
| इन्द्रस्य ब्रह्महत्यावाप्तेः कथनम् | ३८-३०७ |

अध्यायः-पुटम्

इन्द्रेण सरस्वत्यरुणासङ्गमे यजनादिना ब्रह्महत्यायाः परिहरणम् ३८-३०८
ऋषिभिः सरस्वत्याः शापविमोचनम् ३८-३०४
ऋषिभिः सरस्वतीं प्रति रुधिरजलवत्ताकारणप्रश्नः ३८-३०४
ऋषिभिः राक्षसान्नस्य परिहर्तव्यत्वेनान्नदोषाणां विवेचनम् ३८-३०६
ऋषिभिः सरस्वत्याःशोधनपूर्वकं तत्र स्नापयित्वा राक्षसानां
सन्तारणम् ३८-३०६
एकतद्वितत्रितसंज्ञकानां विप्राणां चरितम् ३१-२६०
औशनसतीर्थस्य कपालमोचननामहेतुकथनम् ३४-२८४
कर्णवधानन्तरं शल्यस्य सैनापत्यं तेन युद्धाय निर्गमनं च १—२
कुमारसम्भवादिकथनम् ३९-३०९
कुरुक्षेत्रमहिमानुवर्णनम् ४८-३७८
कृपेण दुर्योधनं प्रति स्वस्वेतरपक्षयोः दौर्बल्यप्राबल्यकथनम् ३—१८
कृपेण परैस्सन्धिविधानकथनम् ३—२४
कृपेण शल्यस्य युद्धभूमेः बहिः प्रापणम् ११—७१
कृपाश्वत्थामकृतवर्मभिः ह्रदमुपेत्य दुर्योधनेन सहभाषणम् २७-२१२
कृपादिभिः पाण्डवानामागमनदर्शनेन ह्रदादपयानपूर्वकं
वटवृक्षमूले समुपवेशः २७-२२०
कौबेरतीर्थमहिमानुवर्णनम् ४२-३४५
कौरवपाण्डवानां युद्धम् ११—७२
गदापाण्योः भीमदुर्योधनयोः वर्णनम् ५०-३८९
गान्धार्याः श्रीभगवत्सन्निधौ रोदनं श्रीभगवता तदाश्वासनं च ५७-४५१
चन्द्रे क्षयरोगप्राप्तिहेतुकथनम् ३०-२५४
चन्द्रस्य रोहिण्यामेवाधिकप्रेमस्थित्या दक्षेण शापविधानम् ३०-२५६
चन्द्रेण प्रभासतीर्थस्नानेन क्षयरोगपरिहरणम् ३०-२५८
जनमेजयेन गान्धार्याश्वासनकारणप्रश्नः ५७-४४४
दधीचिसारस्वतयोरुपाख्यानम् ४६-३६७
दुर्योधनपक्षीयैः व्यूहनिर्माणम् ७—४१
दुर्योधनवचनादरणेन कौरवैर्युद्धाय सन्नहनम् ४—३०

अध्यायः-पुटम्

| | |
|---|---|
| दुर्योधनशिरसि पुष्पवर्षणम् | ५५-४३३ |
| दुर्योधनेन कृपं प्रति सन्ध्यनङ्गीकरणकथनम् | ४—२४ |
| दुर्योधनेन सपरिवारं युद्धाय निर्याणम् | १८-१२२ |
| दुर्योधनेन युद्धाय सूतचोदनम् | १९-१२८ |
| दुर्योधनेन स्वसैन्यसान्त्वनम् | १९-१३१ |
| दुर्योधनेन पादातादीन् प्रति युद्धविधाननियमनम् | २६-१९९ |
| दुर्योधनेन रणादपयानचिन्तनम् | २६-२०० |
| दुर्योधनेन विदुरवाक्यस्मरणम् | २६-२०१ |
| दुर्योधनेन स्वबलक्षयेन ह्रदप्रवेशः | २६-२०२ |
| दुर्योधनेन सञ्जयं प्रति स्वपित्रे स्वोक्त्या स्वस्य ह्रदप्रवेशकारणकथनपूर्वकं तत्प्रवेशकथनचोदनम् | २६-२०५ |
| दुर्योधनेन मायया जलं संस्तभ्य ह्रदे स्वपनम् | २७-२२० |
| दुर्योधनेन सरोषं पाण्डवानां एकैकशः हननकथनम् | २८-२३१ |
| दुर्योधनेन युधिष्ठिरं प्रति गदया प्रहरणोद्यमनम् | २८-२३३ |
| दुर्योधनेन सकृद्गदाप्रहारेण पशुमारं मारणाय पाण्डवानामाह्वानम् | २८-२३५ |
| दुर्योधनेन गदयैकया पाण्डवानां मारणप्रतिज्ञानम् | २८-२३७ |
| दुर्योधनेन भीमस्य युद्धायाह्वानवेळायां दुर्निमित्तानांप्रादुर्भावः | ५१-३९४ |
| दुर्योधनेन स्ववधे विधेः बलवत्तरत्वकथनम् | ५९-४६२ |
| दुर्योधनेनाश्वत्थाममहिमानुवर्णनम् | ५—३२ |
| देवलजैगीषव्ययोश्चरितम् | ४५-३५८ |
| देवानां प्रार्थनया दक्षेण प्रभासतीर्थमज्जनेन चन्द्रस्य क्षयरोगशान्तिनियमनम् | ३०-२५७ |
| देवैः भृगुशापभयादग्नेः शमीगर्भेऽन्तर्भावेनाग्नितीर्थे तद्दर्शनम् | ४२-३४४ |
| धृतराष्ट्रेण सैनापत्यादिविषयकप्रश्नः | २—१६ |
| धृतराष्ट्रेण दुर्योधन मुद्दिश्यनिर्वेदवचनम् | ५१-३९२ |
| धृष्टद्युम्नयुद्धवर्णनम् | २२-१७० |
| नकुलेन कर्णपुत्रमारणम् | ९—५६ |

अध्यायः-पुटम्


नारदेन बलरामं प्रति भीमदुर्योधनयोः गदायुद्धोपक्रमकथनम् ४९-३८३
पाञ्चालभाषणम् १९-१२६
पाञ्चालादिभिः भीमस्तुतिः ५५-४२६
पाण्डवेयैः व्यूहनिर्माणम् ७—४४
पाण्डवैः दुर्योधनवधायागमनम् ११—७१
पाण्डवैः दुर्योधनविज्ञानाय चारप्रेषणम् २७-२१७
पाण्डवैः दुर्योधनशिबिरगमनम् ५६-४३७
पाण्डवैः जितशत्रुभिः दुर्योधनधनलाभेन सुखेनावस्थानम् ५६-४४२
पाण्डवैः गान्धार्याश्वासनाय श्रीभगवतः प्रेषणम् ५६-४४३
पुनश्शल्यादीनां युद्धवर्णनम् १५—९७
प्रभासपदस्यान्वर्थत्वकथनम् ३०-२५९
बकमुनिचरितम् ३६-२९३
बदरपाचनतीर्थे इन्द्रमुद्दिश्य स्रुचावतीतपश्चरणकथनम् ४३-३४६
बलरामतीर्थयात्रोदन्तः ३०-२४८
बलरामेण सरस्वतीतीरस्थनानातीर्थयात्राकरणम् ३२-२६७
बलरामेण पृथूदकतीर्थगमनम् ३४-२८७
बलरामेण बकाश्रमगमनम् ३५-२९२
बलरामेणावाकीर्णतीर्थगमनम् ३६-२९२
बलरामेण वसिष्ठापवाहतीर्थगमनम् ३६-२९७
बलरामेण भीमदुर्योधनयोः गदायुद्धदर्शनार्थमागमनम् २९-२४५
बलरामेण सरस्वत्यरुणासङ्गमे स्नात्वा सोमतीर्थगमनम् ३८-३०८
बलरामेणेन्द्रतीर्थगमनं तत्तीर्थमहिमानुवर्णनं च ४४-३५५
बलरामेण वृद्धकन्याश्रमगमनम् ४७-३७३
बलरामेण भीमदुर्योधनयोः गदायुद्धदिदृक्षया कुरुक्षेत्रं प्रति गमनम् ४९-३८७
बलरामेण दुर्योधनशिरसि ताडनेन भीमं प्रति हननाय-लाङ्गलोद्यमनम् ५४-४१९
बलरामेण द्वारकागमनम् ५४-४२३

| | अध्यायः-पुटम् |
|---|---|
| बलरामेणोशङ्क्वाश्रमगमनं उशङ्कुचरितं च | ३४-२८६ |
| बलरामेणौशनसतीर्थगमनम् | ३४-२८३ |
| बलशेषकथनम् | २६-२०१ |
| ब्रह्मादिभिः स्कन्दाय वितीर्णपारिषदानां नामकथनम् | ४०-३१९ |
| बृहस्पत्यादिभिः स्कन्दस्य सैनापत्येऽभिषेचनम् | ४०-३१६ |
| भीमगदायुद्धवर्णनम् | २२-१७२ |
| भीमशल्ययोर्युद्धम् | १६-१०७ |
| भीमदुर्योधनयोः पराक्रमवचनम् | २९-२४३ |
| भीमदुर्योधनयोर्युद्धोपक्रमे बलरामागमनम् | २९-२४५ |
| भीमदुर्योधनयोर्वीरवादः | ५१-३९६ |
| भीमदुर्योधनयोर्गदायुद्धवर्णनम् | ५१-३९८ |
| भीमदुर्योधनाभ्यां चिलादिगत्या गदायुद्धविधानम् | ५२-४१० |
| भीमदुर्योधनाभ्यां किञ्चिद्विश्रम्य पुनर्गदायुद्धविधानम् | ५२-४११ |
| भीमेन श्रुतर्वादिभिस्सह युद्धविधानम् | २३-१७६ |
| भीमेन श्रुतर्वादीनां हननम् | २३-१८० |
| भीमेन सुदर्शनवधः | २४-१८७ |
| भीमेन गदापाणिना ह्रदप्रवेशः | २७-२१३ |
| भीमेन व्याधेभ्यो बहुधनदानपूर्वकं दुर्योधनस्य ह्रदवृत्तिर्वं विज्ञाय युधिष्ठिराय कथनम् | २७-२१७ |
| भीमेन स्वस्य दुर्योधनेन गदायुद्धविधानसामर्थ्यकथनम् | २९-२४० |
| भीमेन दुर्योधनकृतदुष्कृतस्मारणपूर्वकं तद्वधप्रतिज्ञानम् | ५१-३९५ |
| भीमेन गदया प्रहृतपतितस्य दुर्योधनस्य पुनस्संज्ञया पराक्रमवर्णनम् | ५१-४०५ |
| भीमेन दुर्योधनदुर्नयानुस्मारणम् | ५३-४१५ |
| भीमेन वामपादेन दुर्योधनशिरस्ताडनम् | ५३-४१७ |
| भीमेन युधिष्ठिरं प्रति दुर्योधनवधेन हर्षोत्पादनम् | ५४-४२५ |
| भीमेनार्जुकृतसंज्ञया दुर्योधनोरोः सन्ताडनम् | ५२-४१० |
| भीष्मद्रोणवधानन्तरं विद्यमानबलशेषकथनम् | ७—४६ |

अध्यायः-पुटम्

मङ्कणकमुनिचरितम् ३३-२७९
मित्रावरुणाश्रममहिमानुवर्णनम् ४९-३८२
युयुत्सुपरिदेवनम् २६-२०८
युयुत्सोः हास्तिनपुरप्रवेशकालिकसन्दर्भकथनम् २६-२०९
युधिष्ठिरस्य शल्यवधप्रतिज्ञावचनश्रवणहर्षितैः सैनिकैः
शङ्खभेर्यादीनां वादनादि १५—९६
युधिष्ठिरशल्ययोर्युद्धम् १६-१०२
युधिष्ठिरदुर्योधनयोर्विवादः २८-२२६
युधिष्ठिरदुर्योधनयोर्विवादः २८-२३६
युधिष्ठिरेण शल्यं प्रति शक्तिविक्षेपणम् १६-११०
युधिष्ठिरेण शल्यवधः १६-११३
युधिष्ठिरेण शल्यानुजवधः १७-११५
युधिष्ठिरेण सहदेवं प्रति शकुनिवधाय चोदनम् २०-१५३
युधिष्ठिरेण परोत्कर्षं जानता श्रीभगवन्तं प्रति कर्तव्यौचित्यप्रार्थनम् ६—३८
युधिष्ठिरेण शल्यपराक्रमवीक्षणेन श्रीभगवदुक्तौ नैरर्थक्यविमर्शः १२—८०
युधिष्ठिरेण शत्रुशेषस्य विजयसन्देहमूलत्वकथनम् २७-२१७
युधिष्ठिरेण ह्रदे दुर्योधननिन्दनम् २८-२२३
युधिष्ठिरेण गदायुद्धाय समन्तपञ्चकागमनम् ५०-३८८
युधिष्ठिरेण भीमं प्रति दुर्योधनहनननिवारणम् ५३-४१७
युधिष्ठिरेण दुर्योधनसान्त्वनपूर्वकं विलपनम् ५३-४१८
युधिष्ठिरेण श्रीभगवन्तं प्रति भीमेन वामपादेन दुर्योधनशिर-
स्ताडनानौचित्यकथनम् ५४-४२४
युधिष्ठिरेण श्रीभगवदनुग्रहस्य जयहेतुत्वनिरूपणम् ५६-४४०
युधिष्ठिरेण श्रीभगवन्तं प्रति गान्धार्याश्वासनप्रार्थनम् ५७-४४५
राक्षसैः ऋषीन् प्रति स्वमोक्षदानप्रार्थनम् ३८-३०६
वरुणेन सरस्वतीतीर्थस्नानपूर्वकं वरप्रदानकथनम् ४१-३४१
वरुणेन जलाधिपत्यप्राप्तिः ४२-३४२
वसिष्ठापवाहतीर्थमहिमानुवर्णनम् ३७-२९७

अध्यायः-पृष्ठम्


| | |
|---|---|
| वादिकैरश्वत्थाम्नि दुर्योधनवधनिवेदनम् | ५८-४५८ |
| विदुरेण धृतराष्ट्रसमाश्वासनम् | १—८ |
| विश्वामित्रचरितम् | ३५-२९० |
| विश्वामित्रशापात् सरस्वत्या रुधिरजलत्वकथनम् | ३८-३०३ |
| वृद्धकन्याचरितम् | ४७-३७४ |
| वैशम्पायनेन तीर्थानां विस्तरेण कथनम् | ३०-२५३ |
| व्याधैः ह्रदे यदृच्छया दुर्योधनदर्शनम् | २७-२१५ |
| व्याधैः धनलोभेन भीमाय ह्रदे दुर्योधनदर्शनकथनम् | २७-२१६ |
| व्यासेन सञ्जयं प्रति धृष्टद्युम्नवधोद्यमनिवारणम् | २६-२०३ |
| शकुनिना युद्धाय दुर्योधनप्रोत्साहनम् | १८-१२१ |
| शकुनिना युद्धाय दुर्योधनबलसमाह्वानम् | २०-१५२ |
| शकुनिना दुर्योधनं प्रति युधिष्ठिरवधोपायकथनचोदनम् | २१-१६१ |
| शकुनिसहदेवयोर्युद्धम् | २५-१८८ |
| शल्ययुद्धवर्णनम् | ९—५३ |
| शल्यपराक्रमवर्णनम् | १२—८१ |
| शल्यपराक्रमवर्णनम् | १०—६७ |
| शल्याक्रान्तैः पाण्डवैः विद्रावणं युधिष्ठिरेण शल्यवधप्रतिज्ञानम् | १५—९५ |
| शल्यभीमयोर्गदायुद्धम् | ११—६८ |
| शल्यभीमाभ्यां गदायुद्धे युगपत् भूपतनम् | ११—७१ |
| शल्यस्य हीनबलत्ववर्णनम् | १७-११४ |
| शल्यस्य सैनापत्याभिषेचनपूर्वकं सैनिकैः जयशब्दोद्घोषणम् | ६—३७ |
| शल्यहननेन पाण्डवानां प्रहर्षः | १७-११८ |
| शल्येन युधिष्ठिरपीडनम् | ११—७५ |
| शल्येन सात्यकिभीमादीनां युद्धम् | १२—७६ |
| शल्येन स्वपराक्रमकथनम् | ६—३५ |
| शल्येन युधिष्ठिरादीनां युद्धम् | १५—९३ |
| श्रीभगवताऽर्जुनं प्रति भीमदुर्योधनयोः दुर्योधनस्य न्यायतोज्यायस्त्ववर्णनम् | ५२-४०८ |

अध्यायः-पुटम्

श्रीभगवताऽर्जुनस्य प्रशंसनम् ५६-४४१
श्रीभगवता गान्धार्याश्वासनम् ५७-४५०
श्रीभगवदर्जुनयोस्संवादः २४-१८१
श्रीभगवदर्जुनादिभिः बलरामं प्रति सपर्याविधानम् २९-२४५
श्रीभगवता दुर्योधनं प्रति युधिष्ठिरकृतप्रतिज्ञावचनदूषणम् ५२-४०९
श्रीभगवता दुर्योधनदूषणम् ५५-४२८
श्रीभगवद्दुर्योधनाभ्यां परस्परगर्होक्तिः ५५-४२९
श्रीभगवद्वाक्येन दुर्योधनवधहृष्टैः पाण्डवादिभिः शङ्खाद्याध्मा-
नादि करणम् ५५-४३५
श्रीभगवता धृतराष्ट्रं प्रति पाण्डवादिगुणकथनपूर्वकं दुर्योध-
नादीनां नाशहेतुत्वस्मारणेन परिसान्त्वनम् ५७-४४८
श्रीभगवता पुनः पाण्डवसमीपागमनम् ५७-४५२
श्रीभगवता भीमेनान्यायेनैव दुर्योधनवध्यतायां दृष्टान्तकथन-
पूर्वकं दुर्योधनोरुभेदनप्रतिज्ञानकथनम् ५२-४०८
श्रीभगवता भीमे कुपितस्य बलरामस्य परिसान्त्वनम् ५४-४२०
श्रीभगवन्तमन्तरा सर्वमूलक्षयहेतुभूतगान्धारी शोकस्या-
शक्यपरिहरणीयत्वेन श्रीभगवतैव तच्छाम्यत्वकथनम् ५७-४४५
श्रीभगवता युधिष्ठिरं प्रति शल्यवधकरणप्रोत्साहनम् ६—३८
श्रीभगवता भीमं प्रति दुर्योधनमारणस्थानविशेषज्ञापनपूर्वकं
प्रतिज्ञानिर्वहणचोदनम् २९-२४१
श्रीभगवता युधिष्ठिरं प्रति सदृष्टान्तकथनं दुर्योधनवधचोदनम् २८-२२२
श्रीभगवता युधिष्ठिरं प्रति दुर्योधने तदुक्तवचनोपालम्भः २९-२३८
श्रीभगवता युधिष्ठिरं प्रति पाण्डवैः दुर्योधनेन गदा-
युद्धदौष्कर्यकथनम् २९-२३९
श्रीभगवता युधिष्ठिराद्यन्यतमपराजयस्य राज्यप्राप्ति-
हेतुत्वकथनानौचित्यकथनम् २९-२३९
श्रीभगवता युधिष्ठिरं प्रति कुशलप्रश्नः ५६-४३९

अध्यायः-पृष्ठम्

श्रीभगवता रथादर्जुनावतारणानन्तरं तद्रथस्याग्निनाभस्मी-
करणम् ५६-४३८
श्रीभगवता रथभस्मीभवनकारणकथनम् ५६-४३९
श्रीभगवता सह युधिष्ठिरादिभिः सकुतूहलं ह्रदं प्रति गमनम् २७-२१८
सङ्कुलयुद्धम् ८—४७
सङ्कुलयुद्धम् १०—६१
सङ्कुलयुद्धम् १३—८२
सङ्कुलयुद्धम् १४—८८
सङ्कुलयुद्धम् १८-११९
सङ्कुलयुद्धम् १९-१२४
सङ्कुलयुद्धम् १९-१२९
सङ्कुलयुद्धम् २०-१४३
सङ्कुलयुद्धम् २०-१५४
सङ्कुलयुद्धम् २४-१८४
सात्यकिना कृतवर्मपराजयः १७-११६
सञ्जयात् दुर्योधनादिवधश्रवणेन धृतराष्ट्रेण भूनिपतनपूर्वकं
विलापः १—४
सञ्जयाद्दुर्योधनह्रदप्रवेशं श्रुत्वाऽश्वत्थामादिभिः परिदेवनम् २६-२०६
सञ्जयेन धृतराष्ट्रं प्रति दुर्योधनप्रलापकथनम् ५८-४५३
सञ्जयेन दुर्योधनवैभवकथनपूर्वकं तदीयविपत्सम्भवस्य
विधिमूलत्वकथनम् २६-२०४
सञ्जयेन दुर्योधनमुद्दिश्य विलपनम् २—९
सञ्जयेन दुर्योधनादिवधेन शोकाधिगमः १—३
सप्तानां विभागानामेकत्र मेलनात् कस्यचित् तीर्थस्य
सप्तसारस्वतनामप्राप्तिः ३३-२७७
सरस्वत्याः सप्तानां विभागानां कारणाभिधानम् ३३-२७५
सरस्वतीतीर्थवंशकथनम् ४१-३४०

| | अध्यायः-पृष्ठम् |
|---|---|
| सर्वैराजभिः दुर्योधनस्य हतत्वेन परिचिन्तनपूर्वकं युद्ध-प्रकारकथनम् | २२-१७३ |
| सहदेवोलूकयोर्युद्धम् | २५-१९१ |
| सहदेवेन शकुन्युलूकयोः वधः | २५-१९४ |
| सैनिकैः सैनापत्यविधानविमर्शः | ५—३१ |
| स्रुचावतीजन्मप्रकारकथनम् | ४३-३५४ |
| स्कन्दमातृगणनामकथनम् | ४१-३३० |
| स्कन्देन देवान् प्रति शत्रुविनाशपूर्वकं सन्तोषप्रापणकथनम् | ४१-३३६ |
| स्कन्देन सपरिवारं शत्रुवधाय निर्गमनम् | ४१-३३६ |
| स्कन्देन तारकासुरवधः | ४१-३३७ |
| स्कन्दाद्भीतेन बाणासुरेण क्रौञ्चस्य शरणवरणम् | ४१-३३९ |
| स्कन्देन शक्त्या क्रौञ्चविदारणम् | ४१-३३९ |

॥ श्रीरस्तु ॥

# महाभारतस्य सौप्तिकपर्वस्थानां विषयाणाम्

## ॥ अक्षरमातृकाक्रमेण सूचनम् ॥


अध्यायः-पुटम्

अर्जुनेन ब्रह्मशिरोस्त्रोपसंहारपूर्वकं व्यासनारदौ प्रति स्वहितप्रश्नः १५—९१

अर्जुनेन ब्रह्मशिरोस्त्रोपसंहारे तस्य ब्रह्मचर्यादिनिष्ठत्वकथनम् १५—९२

अश्वत्थामकृतरात्रियुद्धे रक्षःपिशाचादीनां कोलाहलवर्णनम् ८—५८

अश्वत्थामदर्शनेन राक्षसादिभिः पलायनम् ७—४१

अश्वत्थामादिभिः वनमध्ये वटवृक्षस्याधोभागे समुपवेशनम् १—४

अश्वत्थामादिभिः दुर्योधनं प्राप्य परिशोचनम् ९—६१

अश्वत्थाम्ना वने काकानामुलूकेन वधदर्शनेन पाण्डवानामपि तद्वत् वधकरणप्रतिज्ञानम् १—६

अश्वत्थाम्ना रात्रौ पाण्डवानां वधस्यान्याय्यत्वेऽपितत्करणेऽपि नीतिप्रदर्शनम् १—७

अश्वत्थाम्ना कृपकृतवर्माणौ प्रति स्वकर्तव्यकथनप्रार्थना १—७

अश्वत्थाम्ना कृपवचनानादरणपूर्वकं बुद्धिवैचित्र्येणकार्यकरण-कथनम् ३—१४

अश्वत्थाम्ना निशि पाण्डवादीनां वधस्य स्वकर्तव्यत्वकथनम् ३—१६

अश्वत्थाम्ना पितृवधामर्षस्य दुस्सहत्वनिवेदनपुरस्सरं शत्रुवधे-सम्भ्रमप्रदर्शनम् ४—२१

अश्वत्थाम्ना परेषु दोषप्रदर्शनपूर्वकं तेषां सौप्तिकमारणे सम्भ्रमप्रदर्शनम् ५—२५

| | अध्यायः-पृष्ठम् |
|---|---|
| अश्वत्थाम्ना शत्रुमारणाय तच्छिबिरगमनम् | ५—२७ |
| अश्वत्थाम्ना शत्रुशिबिरद्वारे महाभूतसन्दर्शनम् | ६—२८ |
| अश्वत्थाम्ना दैवबलीयस्त्वप्रतिपत्त्या महादेवस्य शरणवरणम् | ६—३२ |
| अश्वत्थाम्ना शिवस्तुतिः | ७—३३ |
| अश्वत्थाम्ना स्वपुरतः काञ्चनवेद्यामग्नेः भूतगणानां च दर्शनम् | ७—३४ |
| अश्वत्थाम्ना शत्रुवधाय शिबिरान्तः प्रवेशः | ८—४३ |
| अश्वत्थाम्ना स्वपादेन शिबिरान्तः धृष्टद्युम्नपोथनम् | ८—४३ |
| अश्वत्थाम्ना सकारणकथनं पादेनैव धृष्टद्युम्नहननम् | ८—४४ |
| अश्वत्थाम्ना युधामन्युमारणम् | ८—४६ |
| अश्वत्थाम्ना पाञ्चालादीनां हननम् | ८—४७ |
| अश्वत्थाम्ना द्रौपदेयादीनां हननम् | ८—४८ |
| अश्वत्थाम्ना पाण्डवबलस्य यमलोकप्रापणम् | ८—५७ |
| अश्वत्थाम्ना पाण्डवविनाशाय ब्रह्मशिरोनामकास्त्रप्रयोगः | १३—८८ |
| अश्वत्थाम्ना पाण्डवगर्भेष्वैषीकास्त्रविसर्जनम् | १५—९६ |
| अश्वत्थाम्ना पाण्डवेभ्यो मणिदानम् | १६—९९ |
| अश्वत्थाम्नाऽग्नौ स्वात्मनो हविष्ट्वकल्पनम् | ७—३९ |
| अश्वत्थाम्नाऽल्पप्राणं दुर्योधनं प्रति पाण्डवधार्तराष्ट्रेष्ववशिष्टानां कथनपूर्वकं रात्रियुद्धे स्वजयकीर्तनम् | ९—६७ |
| अश्वत्थाम्नो रात्रियुद्धजयेन सन्तोषवर्णनम् | ८—६० |
| अश्वत्थाम्नोत्तरागर्भेऽस्त्रप्रयोगेऽपि श्रीभगवता मृतशिशूज्जीवनकथनम् | १५—९५ |
| कृपकृतवर्मभ्यां शिबिरान्निष्क्रान्तानां वधः | ८—५४ |
| कृपेण प्रसुप्तमारणस्याधार्मिकत्वकथनम् | ५—२२ |
| कृपेणाश्वत्थामानं प्रति कर्तव्योपदेशः | २—९ |
| कृपेणाश्वत्थाममतानुसरणकथनम् | ४—१८ |

अध्यायः-पुटम्

| | |
|---|---|
| दुर्योधनमरणम् | ९—६८ |
| दुर्योधनेनाश्वत्थामानं प्रति तत्कर्मणा सर्वेभ्य आधिक्यवर्णनम् | ९—६७ |
| द्रौपद्या प्रायोपवेशनप्रतिज्ञानम् | ११—७७ |
| द्रौपद्या भीमं प्रत्यश्वत्थामशिरोमणिहरणपूर्वकं तद्धननचोदनम् | ११—७८ |
| धृष्टद्युम्नसारथिना युधिष्ठिरं प्रति शिबिरे रात्रौ वृत्तस्य धृष्टद्युम्नादिहननस्य कथनम् | १०—६९ |
| धृष्टद्युम्नहननेन स्त्रीणां रोदनम् | ८—४५ |
| नकुलानीतया द्रौपद्या शिबिरे मृतानां स्वपुत्राणां दर्शनेन परिदेवनम् | ११—७६ |
| प्रसुप्तादिवधाकरणेनार्जुनप्रशंसनम् | ८—५६ |
| भूतपराजितेनाश्वत्थाम्ना गुरूपदिष्टविषयानुस्मरणेन चिन्ताधिगमः | ६—३० |
| भूतेनाश्वत्थामप्रयुक्तबाणग्रसनम् | ६—२९ |
| भीमेन द्रौपदीं प्रत्यश्वत्थामशिरोमणिदानम् | १६-१०० |
| भीमेन नकुलसारथिना रथेनाश्वत्थामवधाय प्रस्थानम् | ११—७९ |
| महादेवेनाश्वत्थाम्ने खड्गदानपूर्वकं तदन्तःप्रवेशः | ७—४१ |
| युधिष्ठिरेण शिबिरवृत्तान्तश्रवणेन परिशोचनम् | १०—७० |
| युधिष्ठिरेण नकुलं प्रति द्रौपद्यानयनचोदनम् | १०—७४ |
| युधिष्ठिरेण शिबिरमुपेत्य हतानां स्वीयजनानां दर्शनेन परिदेवनम् | १०—७४ |
| युधिष्ठिरेण द्रौपदीसान्त्वनम् | ११—७७ |
| युधिष्ठिरेण श्रीभगवन्तं प्रत्यश्वत्थाम्न एकस्यैव बहुमारणप्रश्नः | १७-१०२ |
| युधिष्ठिरेणाश्वत्थाममणेः स्वशिरसि धारणम् | १६-१०१ |
| रात्रावश्वत्थामकृतयुद्धस्य श्रीभगवदर्जुनाद्यसान्निध्यहेतुकत्वेन वृत्तत्वकथनम् | ८—५९ |

| | अध्यायः-पृष्टम् |
|---|---|
| व्यासाश्वत्थामसंवादः | १५—९३ |
| श्रीभगवता युधिष्ठिरं प्रत्यश्वत्थामक्रौर्यादिवर्णनपूर्वकं भीमस्य ततो रक्षणीयत्वकथनम् | १२—८० |
| श्रीभगवता रुद्रमहिम्नैवाश्वत्थाम्नो बहुमारणशक्तिकथनम् | १७-१०३ |
| श्रीभगवता रुद्रकोपेन देवानां यज्ञनाशकथनम् | १८-१०६ |
| श्रीभगवता रुद्रानुग्रहेण देवानां यज्ञोद्भवकथनम् | १८-१०८ |
| श्रीभगवताऽश्वत्थामानं प्रति शापदानम् | १६—९७ |
| श्रीभगवदाज्ञयाऽर्जुनेनाश्वत्थामास्त्रप्रत्यस्त्रप्रयोगः | १४—८८ |
| श्रीभगवदादिभिः गङ्गाकूले व्याससमीपेऽश्वत्थामदर्शनम् | १३—८७ |
| सञ्जयधृतराष्ट्रयोः संवादः | १—१ |
| सञ्जयस्य दिव्यज्ञाननाशः | ९—६८ |
| सुहृद्भिः युधिष्ठिरसान्त्वनम् | ११—७५ |

॥ श्रीरस्तु ॥

## महाभारतस्य स्त्रीपर्वस्थानां विषयाणाम्

## ॥ अक्षरमातृकाक्रमेण सूचनम् ॥




| | अध्यायः-पृष्ठम् |
|---|---|
| कुन्ती गान्धारीभ्यां द्रौपदीसमाश्वासनम् | १५—५८ |
| कुन्त्या युधिष्ठिरं प्रति कर्णस्य स्वपुत्रत्वाभिधानेन तस्मा अप्युदकादिदानकरणचोदना | २७-१०५ |
| कृपादिभिः स्वावासं प्रति गमनम् | १०—३५ |
| गान्धार्या भीमे कोपकारणस्य कथनम् | १३—४६ |
| गान्धार्या दिव्यज्ञानेन दूरादेव युद्धस्थलदर्शनम् | १६—५६ |
| गान्धार्या श्रीभगवन्तं प्रति स्नुषादीनां विलापं सन्दर्श्य मृतानां दैन्यनिवेदनम् | १६—५६ |
| गान्धार्या दुर्योधनालिङ्गनेन परिदेवनम् | १७—६८ |
| गान्धार्या श्रीभगवन्तं प्रति पुत्रादिगोचरशोकवचनम् | १८—६५ |
| गान्धार्या श्रीभगवन्तं प्रति शोककथनम् | १९—७ |
| गान्धार्या श्रीभगवन्तं प्रति विलपन्तीनां स्त्रीणां प्रदर्शनम् | २०—७ |
| गान्धार्या श्रीभगवन्तं प्रति कर्णगोचरदुःखकथनम् | २१—७ |
| गान्धार्या आवन्त्यादीनां मरणेन दुःखकथनम् | २२—८ |
| गान्धार्या श्रीभगवन्तं प्रति मृतशल्यादिगुणकथनपूर्वकं प्रलपनम् | २३—८ |
| गान्धार्या श्रीभगवन्तं प्रति मृतभूरिश्रवःप्रभृतीनां दुःखकथनम् | २४—८ |
| गान्धार्या श्रीभगवन्तं प्रति मृतानां काम्भोजादीनां प्रदर्शनम् | २५—९ |
| गान्धार्या सर्वकौरवक्षयस्य श्रीभगवदुपेक्षामूलत्वकथनम् | २५—९ |
| गान्धार्या श्रीभगवन्तं प्रति सर्वज्ञातिक्षयहेतुशापदानम् | २५—९ |
| धृतराष्ट्रयुधिष्ठिरसंवादः | २६-१० |

अध्यायः-पुटम्

धृतराष्ट्रादिभिः मृतानामुदकादिदानाय गङ्गाकूलं प्रति गमनम् २७-१०६
धृतराष्ट्रादिभिः सस्त्रीकं युद्धभूमि प्रवेशः १६—५४
धृतराष्ट्रेण व्यासानुग्रहाच्छोकादुपरमः ८—३१
धृतराष्ट्रादिभिः स्त्रीभिस्सह मृतानामवलोकनाय युद्धस्थलं प्रति प्रस्थानम् ९—३२
धृतराष्ट्रेण युधिष्ठिरस्य मृद्वालिङ्गनम् ११—३९
धृतराष्ट्रेण पुत्रान्प्रति परिदेवनम् १—२
धृतराष्ट्रेण पुत्रशोकेन भूपतनादिकथनम् ८—२६
धृतराष्ट्रेण सक्रोधं भीमभ्रमात् श्रीभगवदुत्पादितस्य लोह-भीमस्य गाढालिङ्गनेन तद्भञ्जनेन च रुधिरोद्गिरण-पूर्वकं भीमपक्षपाताभिनयकथनम् ११—४०
धृतराष्ट्रेण भीमादीनां निष्कपटमालिङ्गनम् १२—४४
धृतराष्ट्रेण युधिष्ठिरं प्रति हतानां परिमाणप्रश्नः २६-१००
भीमगान्धारी संलापः १४—४८
भीमेन गान्धारीं प्रति स्वानुष्ठितयुद्धाचरणस्य साधुत्वकथनम् १४—४७
महाभारतस्य पठनश्रवणादीनां फलकथनम् २७-११०
मार्गमध्ये धृतराष्ट्रं प्रति कृपादिभिरुपचारवाक्येन सान्त्वनम् १०—३५
युद्धभूमौ स्त्रीभिः परिदेवनम् १६—५५
युधिष्ठिरेण सभ्रातृपत्नीकं श्रीभगवता सह धृतराष्ट्राभिवन्दनम् ११—३८
युधिष्ठिरेण गान्धार्यभिवादनसमये तया प्रत्युक्तिकथनाभावः १५—५१
युधिष्ठिरेण कर्णमुद्दिश्य कुन्तीं प्रत्युपचारवाक्यकथनम् २७-१०८
युधिष्ठिरेण कर्णं प्रत्युदकदानम् २७-१०९
युधिष्ठिरेण धृतराष्ट्रं प्रति हतानां परिमाणकथनम् २६-१००
युधिष्ठिरेण विदुरादीन् प्रति मृतानां दाहादिक्रियाकरण-चोदनपूर्वकं तैस्तद्विधानम् २७-१०३
व्यासेन पाण्डवपक्षपातिना तेषु गान्धार्याः शापप्रद-कोपोपशमनवाक्यकथनम् १३—४५
व्यासेन धृतराष्ट्रं प्रति तत्त्वोपदेशपूर्वकं दुःखोपशमनम् ८—२७

अध्यायः-पुटम्

विदुरेण धृतराष्ट्रदुःखोपशमनम् २—७
विदुरेण धृतराष्ट्रं प्रति शास्त्रार्थकथनपुरस्सरं दुःखोपशमनम् ३—११
विदुरेण धृतराष्ट्रं प्रति संसारसन्तरणाय तत्त्वप्रदर्शनम् ७—२२
विदुरेण संसारलक्षणादिकथनम् ६—२१
विदुरेण संसारस्य दुर्गमकान्तारसदृशत्वेन जीवस्य तत्र
परिभ्रमणादिकथनम् ५—१७
विदुरेणात्मनो गर्भवासादिकथनम् ४—१४
श्रीभगवता भीमं मृतं मन्यमानं धृतराष्ट्रं प्रति तन्मरण-
मिथ्यात्वप्रतिपादनम् ११—४१
श्रीभगवदुक्त्या धृतराष्ट्रस्य पाण्डवेषु प्रीत्युत्पत्तिकथनम् १२—४२
श्रीभगवदादिभिः गान्धारीं प्रति गमनम् १३—४४
श्रीभगवता यादवानां परस्परहननकथनेन पाण्डवैरपि
जीविते नैराश्याधिगमः २५—९८
श्रीभगवता खिन्नायाः गान्धार्याः समाश्वासनम् २६—९९
सञ्जयेन धृतराष्ट्रसान्त्वनम् १—१
सञ्जयेन नीतिप्रदर्शनपूर्वकं धृतराष्ट्रशोककथनम् १—४

॥ श्रीः ॥

# महाभारतशल्यपर्वस्थानामशुद्धानां शोधनम्

* "शल्यपर्वणः ११४ पुटप्रभृति १३२ पुटपर्यन्तं १७-तमाध्यायस्यैव १८—१९ अध्यायात्मना मुद्रणं स्खलितमिति ज्ञेयम्"

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १३ | २२ | पात्राश्चैव | पौत्राश्चैव |
| २० | १५ | विचित्रङ्गा | विचित्राङ्गा |
| ४० | १२ | साये | सायं |
| ५६ | ७ | समारब्थौ | समारब्धौ |
| ६२ | ५ | गौरीव | गौरिव |
| ११४ | ३ | शल्यानुवधः | शल्यानुजवधः |
| ११७ | ७ | क्षिप्र | क्षिप्रं |
| १३२ | २० | ७१॥ | १५२ |
| १४२ | २ | भयम | भयम् |
| १७६ | १५ | पुत्रासमन्ततः | पुत्रास्समन्ततः |
| १८४ | २० | सर्वेस्तव | सर्वांस्तव |
| १९४ | ३ | गृह्वन् | गृह्णन् |
| २७४ | १८ | यूध | यूथ |
| २८८ | ८ | ब्राह्मण्यँल्लब्धवान् | ब्राह्मण्यं लब्धवान् |
| ३३८ | ८ | अर्चिभिः | अर्चिर्भिः |
| ३५७ | ३ | कुतुवरे | ऋतुवरे |
| ३९४ | १० | कर्षिणः | वर्षिणः |
| ४०४ | १२ | अवनीं | अवनिं |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ४०८ | ९ | विजितस्स्तु | विजितस्तु |
| ४२१ | ८ | भंक्ष्यति | भङ्क्ष्यति |
| ४४४ | ९ | तँल्लब्धवान् | तं लब्धवान् |
| ४५७ | १३ | द्रौश्शासनिं | दौश्शासनिं |

## महाभारतसौप्तिकपर्वस्थानामशुद्धानां शोधनम्

| | | | |
|---|---|---|---|
| १६ | २१ | मन्दभाग्यतयऽस्सीमं | मन्दभाग्यतयाऽस्सीमं |
| ५४ | १२ | पलायंत | पलायन्त |
| ६५ | १९ | सौख्यं | सौख्यम् |
| ९१ | २० | तदन्तरनाधृष्य | तदन्तरमनाधृष्य |
| ९३ | १८ | उपदेशातत् | उपदेशात् |

## महाभारतस्त्रीपर्वस्थानामशुद्धानां शोधनम्

| | | | |
|---|---|---|---|
| ४ | १४ | क्षीपति | — |
| २७ | २१ | तान् शूरान् | ताञ् शूरान् |
| २९ | १७ | तान् शोचस्व | ताञ् शोचस्व |
| ३७ | २ | आत्मजान् श्रुत्वा | आत्मजाञ् श्रुत्वा |
| ४० | १० | बभञ्ज्व | बभञ्ज |

Printed by V. Venkateswara Sastrulu of
V. Ramaswamy Sastrulu & Sons at the 'Vavilla'Press, Madras.-1935.